आदित्यस्यप्रसादेनप्रातःस्नानफलेनच।दुःखदौर्भाग्यदुःस्वप्नमयाद्यंत्रतुतालकं।।तालकंकर्णभूषण
मितितत्रैवोक्तं।।दीपयात्रमितिहेमाद्रौ।।तत्रैवभविष्योत्तरे।।एवंविधंरथवरंरविवाजियुक्तंहेमवर्मर
त्नदीधितिनासमेतं।दद्याच्चमाघसितसप्तमिवासरेयःसोसंगचक्रगतिरेवमहींभुनक्ति।।इयंमन्वादिर
पि।।इयंचशुक्लपक्षस्थत्वात्।। पौर्वाह्णिकीग्राह्या।। यदामाघोमलमासोभवतितदामासद्वये
मन्वादिश्राद्धंकुर्यात्।।मन्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचेतिस्मृतिचंद्रिकोक्तेः।।माघशुक्लाष्ट
मीभीष्माष्टमी।।तदुक्तंहेमाद्रौपाद्मे।।माघेमासिसिताष्टम्यांसतिलंभीष्मतर्पणं।।श्राद्धंचयेनराः
कुर्युस्तेस्युःसंततिभागिनइति।। भारतेपि।। शुक्लाष्टम्यांतुमाघस्यदद्याद्भीष्माययोजलं
संवत्सरकृतंपापंतत्क्षणादेवनश्यतीति।।धवलनिबंधेस्मृतिः।।अष्टम्यांतुसितेपक्षेभीष्मायतु
तिलोदकं।।अन्नंचविधिवद्दद्युःसर्ववर्णाद्विजातयः।।सर्ववर्णैर्द्विजातयइतिसंबोधनं।।तर्प
णमंत्रस्तत्रैव।।भीष्मःशांतनवोवीरःसत्यवादीजितेंद्रियः।आभिरद्भिरवाप्नोतुपुत्रपौत्रोचितां
क्रियाम्।।वैयाघ्रपद्यगोत्रायसांकृत्यप्रवरायच।।अपुत्रायददाम्येतज्जलंभीष्मायवर्म्मणे।।वसूनामव
तारायशंतनोरात्मजायच।।अर्घ्यंददामिभीष्मायआबालब्रह्मचारिणइति।।एतच्चजीवत्पितृनिर्ण
येपितृचरणैरुक्तं।।एतच्चाब्दमध्येनकार्यमितिदिवोदासीये।।तत्रश्राद्धंकाम्यम्।।तर्पणंतुनित्यं।।ब्रा
ह्मणाद्यास्त्रयेवर्णादद्युर्भीष्मायनोजलं।।संवत्सरकृतंतेषांपुण्यंनश्यतिसत्तमेतिमदनरत्नेवचनात्
।।माघशुक्लाद्वादशीभीष्मद्वादशी।।त्वयाकृतमिदंवीरत्वन्नाम्नाभविष्यति।।साभीष्मद्वादशीत्येषा
सर्वपापहराशुभेतिहेमाद्रौपाद्मवचनात्।।इयंसर्वैःपुत्रायुग्मवाक्यात्।।माघीपौर्णिमापरेत्युक्तंप्रा
क्।।तथाहेमाद्रौब्राह्मे।।मघास्थयोश्चजीवेंदूमहामाघीतिकथ्यते।।तत्रैवज्योतिषे।।मेषस्थेयदा
सौरिःसिंहेचगुरुचंद्रमाः।।भास्करःश्रवणर्क्षेचमहामाघीतिसास्मृता।।तथाभविष्ये।।वैशाखीकार्ति
कीमाघीतिथयोतीवपूजिताः।।स्नानदानविहीनास्तानतेयाःपांडुनंदन।।तथा।।तिलपात्राणिदे
यानिकंचुकाःकंबलास्तथेति।।माघपौर्णिमानंतराष्टमीमाघीअष्टकातन्निर्णयः।।सर्वेपुरस्व
सूकारयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाएकस्यांवेत्याश्वलायनोक्तेः।।तथामाघाष्टकाप्र
क्रप्यत्तामेकाष्टकेत्याचक्षतइत्याश्वलायनवचनाच्चेमाद्विप्रयोगपारिजातेज्ञेयम्।। ।। ।। ।।

इतिभट्टकमलाकरकृतेनिर्णयसिंधौमाघःसमाप्तोयं ।।०

कुंभेर्कःषोडशघटिकाःपुण्याः।।शेषंप्राग्वत्।।फाल्गुनकृष्णाष्टम्यांविशेषःकल्पतरौ।।फाल्गु
नस्यचमासस्यकृष्णाष्टम्यांमहीपतेतुपक्षस्य।।जातादाशरथेःपत्नीतस्मिन्नहनिजानकी।।उ
पोषितोरघुपतिःसमुद्रस्यतटेतदा।।रामपत्नीचसंदृष्टासीताजनकनंदिनीति।।फाल्गुनीचतु
र्दशीशिवरात्रिः।।साचकेषुचिद्वचनेषुप्रदोषव्यापिनीग्राह्येत्युक्तं।।केषुचिन्निशीथव्यापिनी
।।तत्राद्यामाधवीयेवायवीये।।त्रयोदश्यस्तगेसूर्येचतसृष्वेवनाडिषु।।भूतविद्धातुयातत्रशि
वरात्रिव्रतंचरेत्।।स्मृत्यंतरेपि।।प्रदोषव्यापिनीग्राह्याशिवरात्रिचतुर्दशी।।रात्रौजागरणंय
स्मात्तस्मात्तांसमुपोषयेत्।।अत्रप्रदोषोरात्रिः।।उत्तरार्धेतस्याहेतुत्वोक्तेः।।कामिकेपि।।आ
दित्यास्तमयेकालेअस्तिचेद्याचतुर्दशी।।तद्रात्रिःशिवरात्रिःस्यात्साभवेदुत्तमोत्तमेति।।द्वि

तीयापि तत्रैव नारदसंहितायां ॥ अर्द्धरात्रयुता यत्र माघकृष्णचतुर्द्दशी ॥ शिवरात्रिव्रतं तत्र सोश्व
मेधफलं लभेत् ॥ स्मृत्यंतरेपि ॥ भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ॥ शिवरात्रिव्रतं तत्र कु
र्य्याज्जागरणं तथेति ॥ ईशानसंहितायाम् माघकृष्णचतुर्द्दश्यामादिदेवो महानि
शि ॥ शिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभः ॥ तत्कालव्यापिनी ग्राह्या शिवरात्रि व्रते तिथी ॥
नार्द्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्द्दशी ॥ नैव तत्र व्रतं कुर्य्यादायुरैश्वर्यहानितः ॥ अर्द्धरात्रश्च
द्वितीययामांत्यघटी ॥ तृतीययामाद्यघटी द्वितीयरूपइति माधवः ॥ वचनं तूक्तं प्राक् ॥ एवंस
ति पूर्वेद्युरेवोभयव्याप्तौ पूर्वैव ॥ त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ॥ जागरे शिवरात्रिश्च
कार्ये भद्रा जयान्विते ॥ इति स्कांदाच्च ॥ दिनद्वये निशीथव्याप्तौ तु हेमाद्रि
मते पूर्वा ॥ अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ॥ पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियै
रिति पाद्मवचनात् ॥ मदनरत्नेप्येवम् गौडा अप्येवमाहुः ॥ निर्णयामृतेतु सर्वापि शिवरात्रिः
प्रदोषव्यापिन्येव ॥ अर्द्धरात्रवाक्यानि कैमुतिकन्यायेन प्रदोषस्तावकानीत्युक्तं तन्न ॥ अर्द्धरा
त्रस्य पूर्वकर्मकालत्वोक्तेः ॥ परदिने प्रदोषनिशीथोभयव्याप्तिस्त्वात्परैवेति तु माधवः ॥ इदमेव
च युक्तं प्रतीमः ॥ परेद्युः प्रागुक्तार्द्धरात्रस्यैकदेशव्याप्तौ पूर्वेद्युः संपूर्णतद्व्याप्तौ च सत्यां परेद्युः
प्रदोषनिशीथोभययोगे पूर्वोक्तसंपूर्णव्याप्तेः ॥ पूर्वैव ॥ यथार्द्धरात्रे यस्यां तु लभ्यते या चतु
र्द्दशी ॥ तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः ॥ तदूर्ध्वाधोन्विता भूता सा कार्या द्वितिभिः स
देति माधवमते ईशानसंहितोक्तेः ॥ पूर्वेद्युर्निशीथस्य परेद्युः प्रदोषस्यैवैकैकव्याप्तौ तु पूर्वैव ॥
जयायोगस्य प्राशस्त्यात् ॥ तच्चोक्तं नागरखंडे ॥ माघफाल्गुनयोर्मध्ये अ
सिताया चतुर्द्दशी ॥ अनंगेन समायुक्ता कर्तव्या सा सदा तिथिरिति ॥ पाद्मेपि ॥ अर्द्धरात्रात्पुर
स्ताच्चेज्जयायोगो यदा भवेत् ॥ पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैरिति ॥ स्कांदेपि भवेद्य
त्र त्रयोदश्यां भूतव्याप्ता महानिशी ॥ शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणं तथेति ॥ महतामपि
पापानां दृष्टा वै निष्कृतिः पुरा ॥ न दृष्टा कुर्वतां पुंसां कुहूपूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता परेद्युश्च निशी
थादर्वागेव समाप्ता तदा परेद्युरेकव्याप्तिसत्त्वात्परैव ॥ माघासिते भूतदिनं हि राजन्नुपैति यो
गं यदि पंचदश्या ॥ जयाप्रयुक्तां न तु जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्येति वचनात् ॥
एवं दिनद्वये प्रदोषव्याप्त्यभावे निशीथव्याप्तिसत्त्वात्पूर्वैव ॥ तेन दिनद्वये निशीथव्याप्तौ प्रदो
षव्याप्त्या निर्णयः ॥ दिनद्वये प्रदोषव्याप्तौ निशीथेन निर्णयः ॥ एकैकव्याप्तौ प्रदोषव्याप्त्या
तु निशीथेन निर्णय इति ॥ इयं च रविभौमसोमवारे तु शिवयोगे चातिप्रशस्ता ॥ हेमाद्रौ तीर्
थखंडे लैंगे ॥ फाल्गुनस्य चतुर्द्दश्यां कृष्णपक्षे समाहिताः ॥ कृत्तिवासेश्वरं लिंगमर्चयंति
शिवं शुभे ॥ तेषां नित्यं परं स्थानं सदाशिवमनामयं ॥ शिवरात्रिपारणे तु विरुद्धवाक्यानि दृश्यं
ते ॥ स्कांदे ॥ कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिचतुर्द्दशी ॥ एताः पूर्वयुताः कार्य्या
स्तिथ्यंते पारणं भवेदिति ॥ जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ॥ पूर्वविद्धैव कर्तव्या ति
थिभांते च पारणमिति ॥ तिथिमध्येपि पारणं स्कांदे उक्तम् ॥ उपोषणं चतुर्द्दश्यां चतुर्द्दश्यां

चपारणां कृते: सुकृतलेशोपलभ्यते वा यवानवा॥ ब्रह्मादेरमध्येतु यानितीर्थानि संतिवै संस्थिता
निभवंतीह भूतायां पारणेकृते॥ तिथीनामेव सर्वासामुपवासव्रतादिषु॥ तिथ्यंते पारणं कुर्याद्विना
शिवचतुर्दशीमिति॥ अत्र यामत्रयादर्वाक् चतुर्दशीसमाप्तौ तदंते तदूर्ध्वगामिन्यां तु प्रातस्तिथिमध्य
एवेति॥ हेमाद्रिमाधवादयो व्यवस्थामाहुः॥ तन्न॥ तिथ्यंते तिथिभांते वा पारणं यत्र चोदितं॥ यामत्रयो
र्ध्वगामिन्यां प्रातरेव हि पारणेत्यादिसामान्यवचनैरेव व्यवस्थासिद्धेरुभयविधवाक्यवैयर्थ्यस्य दुष्प
रत्वात्॥ वयं तु तिथ्यंते पारणं भवेदितिकृष्णाष्टम्यादिविषयमेव न तु शिवरात्रिविषयम् तद् पारणं
तु दर्शयुतत्वमात्रकथनार्थं॥ कथमन्यथा स्कांदे एवमूर्ध्वमहं द्वयवा कावत्तिथिमध्ये पारणविधानं घट
ते॥ तस्माद्विना शिवचतुर्दशीमिति पर्युदस्तं शिवरात्र्याः सर्वप्रकारेषु तिथिमध्य एव पारणे तिकृतकि
शाचारोप्येवमेव॥ दीपिकायां तु एवमपि तिथ्यंते एवोक्तं॥ व्रततिथेरंते निशीथे पिवाश्नीयादिति॥ म
दनरत्नकालादर्शयोस्तु॥ साद्यस्तमयपर्यंतव्यापिनी चेत्परेहनि॥ दिवैव पारणं कुर्यात्पारणेनैव दो
षभागित्युक्तम्॥ तन्न॥ तिथिमध्ये पारणविधानान्निषिद्धफलयोगाच्च॥ तिथ्यंतानपेक्षणादोषात्र
सक्तो॥ चतुर्थपादासंगतेः॥ तेनेदं शिवरात्रिभिन्नव्रतपरं ज्ञेयम्॥ इदं व्रतं संयोगपृथक्त्वन्यायेन नित्यं
काम्यं च॥ तथा च माधवीये स्कांदे॥ परात्परतरं नास्ति शिवरात्रिः परात्परम्॥ न पूजयति भक्त्येशं रु
द्रं त्रिभुवनेश्वरं॥ जंतुर्जन्मसहस्रेषु भ्रमते नात्र संशयः॥ अकरणे प्रत्यवायश्रुतेः वर्षे वर्षे महादे
वि नरो नारी पतिव्रता॥ शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेदिति वीप्साश्रुतेः॥ अर्णवोपदिष्ट
श्चेत्सोयं नेहि मवानपि॥ चलंत्येते कदाचिद्धि निश्चलं हि शिवव्रतमिति वचनाच्च नित्यता॥ ममभ
क्तस्तु यो देवि शिवरात्रिमुपोषकः॥ गणत्वमक्षयं दिव्यमक्षयं शिवशासनम्॥ सर्वान्भुक्त्वा मह
भोगान्ततो मोक्षमवाप्नुयादिति स्कांदात्॥ द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वेति॥ तत्रैव शान
संहितावचनात्काम्यता॥ तत्रैव॥ शिवरात्रिव्रतं नाम सर्वपापविनाशनम्॥ आचंडालमनुष्या
णां भुक्तिमुक्तिप्रदायकं॥ अत्र जागरोपवासपूजाः समुदिताः व्रतं न तु प्रत्येकम्॥ समुदितानां फ
लसंबंधात्॥ यत्तु॥ अथवा शिवरात्रिं च पूजाजागरणैर्नयेत्॥ तथा॥ अखंडित
व्रतो यो हि शिवरात्रिमुपोषयेत्॥ सर्वान्कामानवाप्नोति शिवेन सह मोदते॥ कश्चित्पुण्यविशेषेण
व्रतहीनोपि यः पुमान्॥ जागरं कुरुते तत्र स रुद्रसमतां व्रजेदित्यादि स्कांदं तदनुकल्पत्वादशक्तपरं॥
माघेतरा प्रतिमासशिवरात्रिस्तु शिवरात्रिशब्दस्य माघकृष्णचतुर्दश्यामेव रूढत्वात्॥ माघमासस्य
शेषे या प्रथमा फाल्गुनस्य च॥ कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तितेति हेमाद्रौ वचनाच्च नापं नि
र्णयस्तत्रेति॥ रात्रौ यामचतुष्टये पूजाविधानादस्मिन्दिने धिकारात्रिव्याप्तिः॥ साम्या घासाम्ये पूर्व
वेति॥ हेमाद्रिरुक्तवान्॥ वस्तुतस्तु॥ प्रतिमासकृष्णचतुर्दश्यामपि॥ सर्वकामप्रदं कृष्णचतुर्द
श्यां शिवव्रतमित्युपक्रम्य॥ चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभमिति हेमाद्रौ कालोत्तरे॥ शिव
रात्रिशब्दप्रयोगात्कोऽपाचनाग्निहोत्रनिमाग्निहोत्रधर्मातिदेशवत्तद्धर्मप्राप्तिः स्यादेव॥ अतः प्रदोष
निशीथोभयव्याप्त्यैव निर्णय इति वयं प्रतीमः अस्यारंभो हेमाद्रौ स्कांदे॥ आदौ मार्गशिरे मासि दी
पोत्सवदिनेपि वा॥ इच्छी यान्माघमासे वा द्वादशैव मुपोषयेत्॥ एवं द्वादशवर्षेषु द्वादशैव तपोध

नात्॥ वरयेदितिशेषः॥ चतुर्दश वा विप्रानाचार्यं च दत्त्वा॥ कुंभोपरिन्यसेद्देवमुमयासहितं शिवं॥ सौ
वर्णं ह्यथवा रौप्यं वृषभे संस्थितं शुभे॥ इत्युक्तं हेमीं मूर्तिं संपूज्य स्थिरं चलं वा लिंगं पंचामृतसहस्रशतकद
द्वीस्तनकुंभैः संस्नाप्य संपूज्य जागरणं कृत्वा परेद्युस्तिलान् सहस्रं शतं वा हुत्वा विप्रेभ्यो वस्त्राणि द्वादश
गाश्च दत्त्वाचार्याय धेनुं शय्यां च दत्त्वा॥ विप्रान्भोजयेदिति मदनरत्ने उक्तं॥ माघामावास्या युगादिः॥
तदुक्तम्॥ माघमासे त्वमावास्येति॥ अन्यत्प्राग्वत्॥ तथामोपि विशेषो विष्णुपुराणे॥ माघासिते
पंचदशी कदाचिदुपैति योगं यदि वारुणेन॥ ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृपल
भ्यते साविति॥ वारुणं शतभिषा॥ इदं च कुंभादित्ये ज्ञेयमिति हेमाद्रिः॥ भारते॥ काले धनिष्ठा यदि
नाम तस्मिन्भवेत्तु भूपाल तदा पितृभ्यः॥ दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैरि
ति फाल्गुनी पौर्णमासी होलिका॥ सा च सायान्हव्यापिनी ग्राह्या॥ सायान्हे होलिकां कुर्यात्पूर्वा
न्हे क्रीडनं गवामिति वचनादिति निर्णयामृते उक्तं॥ ज्योतिर्निबंधे तु॥ प्रतिपद्भूतभद्रासु यार्चिता
होलिका दिवा॥ संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम्॥ प्रदोषव्यापिनी ग्राह्या पौर्णिमा फाल्गुनी स
दा॥ तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे इति नारदवचनात्॥ प्रदोषव्यापिनीत्युक्तं हेमाद्रौ
मदनरत्ने च भविष्ये॥ अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे॥ गोमयेनोपलिप्ते च सचतुष्के गृ
हांगणे॥ इत्यादिना तत्रैव तद्विधानाच्च॥ तेनेयं पूर्वविद्धा॥ श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी॥
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनमिति बृहद्यमवचनाच्चैवं नोक्तश्च॥ दिनद्वये प्रदोषव्याप्तौ परे
व॥ पूर्वदिने भद्रासत्त्वात्॥ तत्र च होलिकानिषेधात्॥ तदुक्तं निर्णयामृते मदनरत्ने च॥ पुराणस
मुच्चये॥ भद्रायां दीपिता होला राष्ट्रभंगं करोति वै॥ नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत्॥ त
था भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा॥ श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी॥ तथा
॥ दिनार्धात्परतोपि स्यात्फाल्गुनी पौर्णिमा यदि॥ रात्रौ भद्रावसाने तु होलिका दीप्यते तदेति॥
यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च पौर्णिमा क्षयवशात्सायान्हात्प्रागेव समा
प्यते तदा पूर्वदिने संपूर्णा रात्रौ भद्रासत्त्वात् तत्र च तन्निषेधात् परेहनि प्रतिपद्येव कुर्यात्॥ सा
र्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा॥ प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृतेति भविष्यवच
नादिति निर्णयामृतकारः॥ मदनरत्नेप्येवम्॥ यत्तु वन्हौ वन्हिं परित्यजेदिति भविष्ये॥ वन्हौ
होलिकायां वह्निं प्रतिपदं वर्जयेदित्यर्थः॥ तदुक्तं भिन्नविषयमिति तत्रैवोक्तम्॥ अन्ये तु तस्यां
भद्रामुखं त्यक्त्वेति॥ प्रदोषव्यापिनी न स्याद्यदा पूर्वदिने तदा॥ भद्रामुखं वर्जयित्वा होलिकायाः
प्रदीपनमिति नारदवचनात्॥ निशागमे प्रपूज्येत होलिका सर्वदा बुधैः॥ न दिवा पूजयेद्ढुंढां पू
जिता दुःखदा भवेदिति दिवोदासीये वचनात्॥ यामत्रयोर्ध्वं युक्ता चेत्प्रतिपत्तु भवेत्तिथिः॥ भ
द्रामुखं परित्यज्य कार्या होला मनीषिभिरिति विद्याविनोदेभिधानाच्च॥ भद्रामुखं विहाय पू
र्वदिने एव कार्येत्याहुः॥ भद्रामुखं तु नारदोक्तपंचवदनं गलकस्तथैकेति रत्नमालोक्तं ज्ञेयं
॥ शिष्टाचारोप्येवमेव॥ अत्र चेच्चंद्रग्रहणं तदा ततोऽर्वाक् शिभद्रावर्ज्यपौर्णमास्यां होलिका
दीपनम्॥ अथ [illegible]न्हि ग्रस्तोदयस्तदा पूर्वदिने भद्रावर्ज्जं रात्रिचतुर्थयामे विष्टिपुच्छे वा हो

लिकाकार्या॥ यद्दोत्तरं भप्रतिपन्नत्वान्नच्छर्वेच दिवाहोलानिषेधादिति दिवोदासचंद्रप्रकाशौ वस्तुत
स्तु॥ परदिने प्रदोषे पौर्णमासीसत्वे कर्मकालस्पर्शे चतुर्थयामादिगौणकालग्रहणे मानाभावाद्भद्रा
भावाच्च॥ ग्रहणकाल एव होला कार्या॥ न च सर्वेषामेव वर्णानां सूतकं राहुदर्शने॥ स्नात्वा कर्माणि कु
र्वीत शृतमन्नं विवर्जयेदिति निषेधात्कथं सूतके होलिकेति वाच्यम्॥ तस्योत्सवशेषत्वात्॥ पूजा
मंत्रस्तु अस्माभिर्भयसंत्रस्तैः कृता त्वं होलिबालिशैः॥ अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भवेति॥ पू
र्ववार्तिककारैर्होलिका आचारप्राप्तेत्युक्तम्॥ तत्र हेमाद्र्युदाहृतभविष्यवचनान्यसिद्धानि कृत्वा।
चिंतात्रेया आन्यधिकरणवत्॥ हुताशिनी मलमासे न भवति॥ इयं मन्वादिरपि॥ सा तु सर्वाह्नि॰
कीग्राह्या॥ मलमासे सति मन्वादिश्राद्धं मासद्वये कार्यमित्युक्तं प्राक्॥ कृत्यचिंतामणौ ब्राह्मे॥ न
रोदोलागतं दृष्ट्वा गोविंदं पुरुषोत्तमं॥ फाल्गुन्यां संयतो भूत्वा गोविंदस्य पुरं व्रजेत्॥ चैत्रकृष्णप्रति
पद्वसंतोत्सवः सा चौदयिकी ग्राह्या॥ प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवाविति भविष्योक्तेः॥ दिन
द्वये तथात्वे पूर्वा॥ वत्सरादौ वसंतादौ बलिराज्ये तथैव च॥ पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधै
रिति वृद्धवसिष्ठवचनात्॥ अत्र विशेषो हेमाद्रौ भविष्ये॥ चैत्रे मासि महाबाहो पुण्ये तु प्रतिपद्दिने
॥ यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः॥ न तस्य दुरितं किंचिन्नाधयो व्याधयो नृपेति॥ तथा
॥ प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ॥ कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः॥ वंदयेद्धो
लिकाभूतिं सर्वदुःखोपशांतये॥ मंत्रश्च॥ वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च। अतस्त्वं पा
हि नो देवि विभूतिर्भूतिदा भवेति॥ अत्र चूतकुसुमप्राशनमुक्तं तत्रैव पुराणसमुच्चये॥ वृत्ते तुषा
रसमये सितपंचदश्यां प्रातर्वसंतसमये समुपस्थिते च॥ संप्राश्य चूतकुसुमं सह चंदनेन सत्यं हि
पार्थ पुरुषोऽथ समाः सुखी स्यात्॥ मंत्रस्तु॥ चूतमग्र्यं वसंतस्य माकंदकुसुमं तव॥ सचंदनं पि
बाम्यद्य सर्वकामार्थसिद्धये इति॥ चैत्रामावास्या मन्वादिः॥ सा पराह्णव्यापिनी ग्राह्या कृष्णप॰
क्षस्थत्वात्॥ इति फाल्गुनः॥० एवं निरूपितमिदं गहनं तु कालतत्वं विचार्य व
चनैश्च नयैश्च सम्यक्॥ तद्दोषदृष्टिमपहाय विवेचनीयं विद्भिरन्यविरतं प्रणतोस्मि तेषु॥
१ मयासहासहायद्विहगदिनमंदमतिना किमेतच्छक्यं वाध्यवसितमपि स्वल्पमतिना॥
तदेवं यत्किंचिद्गदितमिह विख्यातमहिमा॥ प्रतापोयं सद्यो विकसति गुरुपित्रीश्वरणयोः॥
यो भाट्टतंत्रगहनार्णवकर्णधारः शास्त्रांतरेषु निखिलेष्वपि मर्मभेत्ता॥ योत्र श्रमः किल कृ
तः कमलाकरेण प्रीतो भुनातु सुकृती बुधरामकृष्णः॥ ०॥ ०॥ ०॥ ०॥ ०॥ ०॥

इति श्रीनारायणभट्टसूरिसूनुरामकृष्णभट्टसुनदि
नकरभट्टानुजभट्टकमलाकरकृते निर्णयसिं॰
धौ संवत्सरकृत्यं नाम द्वितीयः परिच्छेदः २

निर्णयसिंधौ तृतीयपरिच्छेदे
प्रकीर्णकनिर्णयः॥

श्रीगणेशाय नमः॥ अथ प्रकीर्णकनिर्णयः॥ श्रीरामकृष्णतनयः कमलाकरसंज्ञितः॥

निरूप्यतिथिरुक्तसंतुत्रकीर्णैवज्ञमुपतः ॥ तत्रादौ संस्कारेषु गर्भाधानम् ॥ तत्र प्रथमरजोदर्शने दुष्टमास
ग्रहणसंक्रमादिफलं तत्र शांत्यादि च पितृकृतप्रयोगदीपिकायां भट्टकृतप्रयोगरत्ने च ज्ञेयम् ॥ किंचि
न्न्यते ॥ मदनरत्ने नारदः ॥ अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ॥ परिघस्य तु पूर्वार्द्धे व्यतीपाते च
वैधृतौ ॥ संध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्तवं ॥ रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी ॥ पति
व्रताक्लेशभोक्ती सूर्यवारादिषु क्रमात् ॥ वैधव्यं सुतलाभश्च मैत्र्यं शत्रुविवर्द्धनं मित्रलाभः शत्रुवृद्धि
कुलवृद्धिर्बंधुनाशनम् ॥ मरणं वंशवृद्धिश्च निराहारः कुलक्षयः ॥ नैजश्च सुतनाशश्च कलहानिति
थिक्रमात् ॥ गर्गः ॥ सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता ॥ धर्मयुक्ता व्रतधी च परसंतानमोदि
नी ॥ सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ॥ दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥ साध्वी प
तिप्रिया नित्यं सुपुत्रा कष्टचारिणी ॥ स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ॥ नित्यं धनचपास
क्ता पुत्रधान्यसमन्विता ॥ मूर्खा चाचारपुण्यवती दस्रर्क्षादेः क्रमात्फलम् ॥ नारदः ॥ कुलीरवृषचा
पांत्यनृयुक्कमातुलाघटाः ॥ राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥ गर्गः ॥ सुभगा श्वेतवस्त्रा स्या
त्दृढवस्त्रा पतिव्रता ॥ क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥ दुर्भगा जीर्णवस्त्रा स्याद्रो
गिणी रक्तवाससा ॥ नीलांवरधरा नारी पुष्पिता विधवा ततः ॥ वस्त्रेषु विषमा रक्तविंदवः पुत्रमाप्नु
यात् ॥ समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्तवे ॥ अत्र स्त्रीसंगवर्जनमाह ॥ वसिष्ठः ॥ प्रभूतदो
षे यदि दृश्यते न शुध्यं तदा शांतिककर्म कार्यं ॥ विवर्जयेद्देवतदेकशय्यां यावद्रजोदर्शनमुत्तमेह्नि
ज्योतिर्निबंधे वसिष्ठः ॥ आद्यर्त्तौ पौषशुक्रोर्जमधुशुचिनभस्याश्वयुक्पापवाररिक्तापर्वाष्टषष्ठ्यः
पितृपरसदने रात्रिसंध्यापराह्णे ॥ मिश्रोग्रामूलतीक्ष्णं विवरमनरुणात्साधिका स्वंचराष्ट्रे न्यातः ॥
पापस्य लग्नं नसदरुणजरन्नीलरक्तांवरं च ॥ आद्यर्त्तौ दुर्भगा नारी विष्कुंभे चेद्रजस्वला ॥ वंध्या चैव व्या
तिगंडे च शूले शूलवती भवेत् ॥ गंडे तु पुंश्चली नारी व्याघाते चात्मघातिनी ॥ वज्रे च स्वैरिणी प्रोक्ता या
ते च पतिघातिनी ॥ परिघे मृतवंध्या च वैधृतौ पतिमारिणी ॥ शेषाः शुभावहा योगा यथानामप्र
लप्रदाः ॥ शांतिमाह प्रयोगपारिजाते शौनकः ॥ सार्त्तवानां तु नारीणां शांतिं वक्ष्यामि शौनकः ॥ पंच
मेन्हि चतुर्थे वा ग्रहातिथ्यः पुरःसरम् ॥ द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् ॥ कुंभत्रयं न्यसेद्रा
शौ तंतुवस्त्रादिवेष्टितम् ॥ पूरयेत्तीर्थसलिलैः प्रतिकुंभं पृथक्पृथक् ॥ सूक्तेनाप्यनवर्चेन प्रसुव
श्चापरस्मय ॥ ऋचायाः प्रवतस्तद्वत्पश्चाच ततः क्रमात् ॥ मध्यकुंभे क्षिपे द्वान्यमौषधानि च
हेम च ॥ उदुंबरः कुशा दूर्वा राजीववटविल्वकाः ॥ विष्णुक्रांता च तुलसी बर्हिषं शंखपुष्पिका ॥ शता
वर्या श्वगंधा च निर्गुंडी सर्षपद्वयं ॥ अपामार्गः पलाशश्च पनसो जीवकस्तथा ॥ प्रियंगवश्च गोधू
मा व्रीहयोश्वत्थ एव च ॥ क्षीरं दधि च सर्पिश्च पद्मपत्रं तथोत्पलं ॥ कुरंटकत्रयं गुंजा वचा भद्रकमुस्त
का ॥ द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ॥ मृत्तिकाश्चौषधादीनि तन्मंत्रेण क्षिपेत्क्रमात् ॥
कुंभोपरि न्यसेत्पात्रं कांस्यं मृद्वेणुना कृतं ॥ भुवनेश्वरीं न्यसेत्तत्र रुद्राणीं च पुरंदरम् ॥ जपेद्गायत्रीमा
होमाच्छ्रीसूक्तं च जपेत्ततः ॥ स्पृशन्वै दक्षिणं कुंभं मृत्विगेको जपेद्दश ॥ चत्वारि रुद्रसूक्तानि च तु
र्मंत्रोत्तराणि च ॥ संस्पृशन्नुत्तरं कुंभं श्रीरुद्रं रुद्रसंख्यया ॥ शान्नइंद्राग्निसूक्तं च तत्रैव संस्पृशंजपे

त्॥कुंभस्यपश्चिमेदेशेशांतिहोमंसमाचरेत्॥दूर्वाभिस्तिलगोधूमैःपायसेनघृतेनच॥तिलमिश्रैर्वादू
र्वाभिरेकैकाज्ञाहुतिर्भवेत्॥अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा॥गायत्र्यैवतुहोतव्यंहविरत्रचतु
ष्टयं॥ततःस्विष्टकृतंहुत्वासमुद्राद्यूर्मिसूक्ततः॥संततामाज्यधारांतांहरणींहुतिमथाचरेत्॥अथा
भिषेकंकुर्वीतप्रतिकुंभस्थितोदकैः॥आपोहिष्ठेतिनवभिःसूक्तेनचततःपरम्॥इंद्रोऽग्निंगअवेने
वपावमानैःक्रमेणतु॥उभयंश्रृणावचनस्वस्तिदाविशएकया॥त्र्यंबकेनमंत्रेणजातवेदशए
कया॥समुद्रज्येष्ठाइमास्त्रायंतांचत्रिभिःक्रमात्॥इमाआपःस्वेनैवदेवस्यत्वेतिमंत्रतः॥मंत्रेणाथत
मीशानंत्वमग्नेरुद्रइत्यथनतुष्ठहीतिमंत्रेणभुवनस्यपितरंतथा॥यातेरुद्रेतिमंत्रेणशिवसंकल्पमंततः
॥इंद्रत्वाहृषभंपंचमंत्रैश्चैवाभिषेचयेत्॥धेनुंपयस्विनींदद्यादाचार्य्यायचभूषणैः॥सदक्षिणामनड्वाहंत्र
ह्याद्रुद्रजापिने॥महाशांतिंप्रजप्याथब्राह्मणान्भोजयेत्ततइति॥ मदनरत्नेनारदः॥
तत्रशांतिंप्रकुर्वीतघृतदूर्वातिलाक्षतैः॥प्रत्येकाष्टशतंचैवगायत्र्याजुहुयात्ततः॥स्वर्णगोभूतिलान्दद्या
त्सर्वदोषापनुत्तये॥प्रकारांतरंमदनरत्नेद्रष्टव्यं॥विस्तरान्नोच्यते॥अहरणोरजोदर्शनेनजातकर्मप्रसंगाच्छां
तिंवक्ष्यामः॥प्रथमर्तौपुष्पवत्याविधिविशेषः॥स्मृतिचंद्रिकायाम्॥प्रथमर्तौतुपुष्पिण्याःपतिपुत्रवती
स्त्रियः॥अक्षतैरासनंकृत्वातस्मिंस्तामुपवेशयेत्॥हरिद्रांगंधपुष्पादीन्दद्युस्तांबूलकंस्रजम्॥दी
पैर्नीराजनंकुर्य्यात्सदीपेवासयेद्गृहे॥लवणंफलमुद्गादिदद्यात्ताभ्यःस्वशक्तितइति॥द्वितीयाद्यृतुषु
तन्नियमानाह॥प्रयोगपारिजातेदक्षः॥अंजनाभ्यंजनेस्नानंप्रवासंदंतधावनं॥नकुर्यात्सार्तवाना
शीयहाणामीक्षणंतथा॥ अत्रिरपि॥ वर्जयेन्मधुमांसंचपात्रेखर्वेचभोजनं॥गंधमाल्य
दिवास्वापंतांबूलंचास्यशोधनंदग्धेशरावेभुंजीतपेयंचांजलिनापिबेत् मदनरत्नेहारीतः
रजःशान्नाचेदधःशयीत॥भूमौकार्ष्णायसेपाणौमृण्मयेवाश्नीयात्॥ विष्णुधर्मोत्तरे आ
हारंगोरसानांचपुष्पालंकारधारणम्॥अंजनंकंकतंगंधाःपीठशय्याधिरोहणं॥अग्निसंस्पर्शनं
चैववर्जयेच्चदिनत्रयं॥तथा॥प्रथमर्तौःर्दर्शस्त्रीगमनंनकार्य्यं॥प्राग्रजोदर्शनात्पत्नींनेयाद्गत्वा
पतत्यधः॥व्यर्थीकारेणशुक्रस्यब्रह्महत्यामवाप्नुयादितित्वेवाश्वलायनोक्तेः॥ततऋतौगमन
माह॥ याज्ञवल्क्यः॥ षोडशर्तुर्निशास्त्रीणांतस्मिन्युग्मासुसंविशेदिति॥ अत्र
नावश्याहगोतमः॥ऋतावुपेयात्सर्वत्रवाप्रतिषिद्धवर्जमिति॥ मनुः॥ ऋतुःस्वाभाविकः
स्त्रीणांरात्रयःषोडशस्मृताः॥तासामाद्याश्चतस्रस्तुनिंदितैकादशीचया॥त्रयोदशीचशेषाःस्युः
प्रशस्तादशरात्रयः॥मदनरत्नेदेवलः॥तस्मात्त्रिरात्रंचंडालींपुष्पितांपरिवर्जयेत्॥तत्रतिथ्यादि
नाहश्रीधरः॥षष्ठ्यष्टमींपंचदशींचतुर्थींचचतुर्दशीमप्युभयत्रहित्वा॥शेषाःशुभाःस्युस्तिथयोनिषे
केवाराःशशांकार्य्यसितेंदुजानां॥उभयत्रहित्वा॥शेषाःशुभाःस्युस्तिथयोनिषेकेवाराःशशांकार्य्य
सितेंदुजानां॥उभयत्रपक्षद्वये॥आर्य्योगुरुः॥सितःशुक्रः॥इंदुजोबुधः॥विष्णुप्रजेशरविमित्रसमी
रपौष्णमूलोत्तरावरुणभानिनिषेककार्ये॥इज्यानिपुष्पवसुशीतकराश्विचित्रादित्याश्चमध्यम
फलाविफलाःस्युरन्ये॥विष्ण्वादिदैवत्यनक्षत्राण्युक्तानिरत्नमालायां॥मेशादस्रयमाग्निधा
तृशशिनःशर्वोदितिर्वाक्पतिः॥कद्रूजापितरोभगोर्यमरवींत्विष्टृत्वयोमारुतः॥शक्राग्नीत्वथ

थमित्रेंद्रनिर्ऋतितोयंचविश्वेविधिर्गोविंदोवसवोम्बुपाजचरणाहिर्बुध्न्यपूषाभिधाः॥उत्तराश्रा
वृनोत्तरात्रयं॥अत्रमूलस्यपक्ष्याद्युक्तम्॥० याज्ञवल्क्येनतु॥ एवंगच्छन्स्त्रि
यंक्षामांमघांमूलंचवर्जयेदित्युक्तम्॥तेनात्रविकल्पः॥अत्रसमासुपुत्रोविषमासुकन्येतितेयंयुग्मा
सुपुत्राजायंतेस्त्रियोऽयुग्मासुरात्रिष्विति हेमाद्रौ शंखोक्तेः॥तत्राप्युत्तरोत्तराप्रशस्ता॥ तदाह
आपस्तंबः॥ तत्राप्युत्तरोत्तराप्रशस्तेति॥तत्रैवव्यासः॥रात्रौचतुर्थ्यांपुत्रःस्यादल्पायुर्द्धन
वर्जितः॥पंचम्यांपुत्रिणीनारीषष्ठ्यांपुत्रस्तुमध्यमः॥सप्तम्यामप्रजायोषिदष्टम्यामीश्वरःपुमा
न्॥नवम्यांसुभगानारीदशम्यांप्रवरःसुतः॥एकादश्यामधर्म्यास्त्रीद्वादश्यांपुरुषोत्तमः॥त्रयोद
श्यांसुतापापावर्णसंकरकारिणी॥धर्मज्ञश्चकृतज्ञश्चआत्मवेदीदृढव्रतः॥प्रजायतेचतुर्दश्यां
पंचदश्यांपतिव्रता॥आश्रयःसर्वभूतानांषोडश्यांजायतेपुमानिति॥अत्रचतुर्थ्यादिनिषेधेपि॥
स्नातांचतुर्थेदिवसेरात्रौगच्छेद्विचक्षणइति॥महाभारतोक्तेश्चतुर्थेहनिस्नातायांयुग्मासुवागर्भंसं
दधातीतिहारीतोक्तेर्विकल्पोज्ञेयः॥ तत्रापि॥स्नानंरजस्वलायास्तुचतुर्थेहनिशस्यते॥गम्या
निवृत्तेरजसिनानिवृत्तेकथंचनेत्यापस्तंबोक्तेर्व्यवस्थाज्ञेया॥प्रभासखंडेमरीचिः॥शुद्धाभर्तुश्चतु
र्थेन्हि ॥
॥ स्नानेनस्त्रीरजस्वला॥दैवेकर्मणिपित्र्येचपंचमेहनिशुद्ध्य
ति॥श्रौतकर्ममध्येरजस्वलात्वेतत्रचतुर्थदिनेप्यधिकारः॥ अथयदात्रिरात्रिणीस्यादथैना
मुदूयेदित्यापस्तंबसूत्रात्॥चतुर्थेहनिगोमूत्रमिश्राद्भिःस्नानावासोयोक्त्रजालानिमंत्रेधारये
दितिसोमेप्युक्तं॥एवंसर्वत्रश्रौतकर्मणीतिधूर्तस्वामीरामांडारादयः॥अत्रसर्वासुयुग्मासुगमनमाव
श्यकं॥युग्मास्वितिबहुवचननिर्देशादितिविज्ञानेश्वरः॥नत्वेकस्यांरात्रौसकृदेवकार्यम्॥सुस्था
इंदौसकृत्पुत्रंलक्षण्यंजनयेत्पुमान्॥ इतियाज्ञवल्क्योक्तेः इदंचर्तौगमनं
मल्पकालेप्रतिबंधादिनागमनासंभवेश्राद्धैकादश्यादावपिकार्यम्॥ब्रह्मचार्येवपर्वाण्याद्या
श्चतस्रश्चवर्जयेदिति याज्ञवल्क्योक्तेः॥ व्याख्यातंचेदंमिताक्षरायाम्॥यत्रश्रा
द्धादौब्रह्मचर्यंविहितंतत्राप्यृतौगच्छतो नब्रह्मचर्यस्खलनेदोषइति॥पार्वणीतिबहुत्वेनाष्टमीचतु
र्दशीग्रहणमदनरत्नेप्येवम्॥यत्तु॥हेमाद्रौशिवरहस्ये॥दिवाजन्मदिनेचैवनकुर्यान्मैथुनंव्रती॥श्रा
द्धंदत्वाचभुक्त्वाचश्रेयोर्थीनचपर्वसु इति॥तदनृतुविषयम्॥ब्रह्मचार्येवभवतियत्रतत्राश्रमे
वसन्नितिमनूक्तेः॥दर्शादौतुनभवत्येव॥पर्वणांपर्युदस्तत्वात्॥अमावास्यामष्टमींचपौर्णमा
सींचतुर्दशीं॥ब्रह्मचारीभवेन्नित्यमप्यृतौस्नातकोद्विजः॥ इतिविष्णुपुराणाच्च॥माधवीये
तु॥ऋतुकालेनियुक्तोवानैवगच्छेत्स्त्रियंक्वचित्॥ तत्रगच्छन्समाप्नोतिह्यनिष्टंफलमेवत्वि
तिवृद्धमनूक्तेः॥श्राद्धेब्रह्मचर्यनियतमित्युक्तम्॥पृथ्वीचंद्रोदयेप्येवम्॥एतत्सतिसंभवेज्ञेय
म्॥ अनेकभार्यस्यतुयौगपद्येहेमाद्रौकश्यपः॥यौगपद्येतुतीर्थानांविवाहक्रमशोव्रजेत्॥र
क्षणार्थमपुत्रांवाग्रहणक्रमशोपिवेति॥गृहणमृतुग्रहणम्॥ऋग्विधाने॥विष्णुर्योनिंजपेत्सू
क्तंयोनिंस्पृष्ट्वात्रिभिर्व्रती॥गर्भाधानंततःकुर्यात्सपुत्रोजायतेध्रुवम्॥अगमनेदोषमाहप।

राशरः ऋतुस्नातांतुयोभार्य्यांसन्निधौनोपगच्छति॥ घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयः॥ अ
स्यापवादमाह मदनरत्ने व्यासः॥ व्याधितोबंधनस्थोवाप्रवासेष्वथपर्वसु॥ ऋतुकालेपिनारीणांभ्रूण
हत्याप्रमुच्यते॥ वृद्धांवंध्यामसद्वृत्तांमृतापत्यामपुष्पिणीं॥ कन्यांचबहुपुत्रांचवर्जयन्मुच्यते॥ वृद्धांवं
ध्यामसद्वृत्तांमृतापत्यामपुष्पिणीं॥ कन्यांचबहुपुत्रांचवर्जयन्मुच्यतेभयात्॥ वृद्धांगतरजस्काम्॥ ग
र्भाधानांगहोमाकरणेप्रायश्चित्तमाह पारिजाते आश्वलायनः॥ गर्भाधानस्याकरणात्स्त्रीजातस्तु
दुष्यति॥ अदत्वागांद्विजेदत्वाकुर्य्यात्पुंसवनंपतिः॥ गर्भाधानंचमलमासशुक्रास्तादावपिकार्यं
उत्सवेषुचसर्वेषुसीमंतऋतुजन्मसु॥ सुरासुरेऽप्येवमौढ्यदोषोनविद्यतइतिस्मृतिनिर्बंधे भृगूक्तेः ऋ
तौगमनेपराशरः॥ ऋतौतुगर्भशंकित्वात्स्नानंमैथुनिनःस्मृतं॥ अनृतौतुसदाकार्यंशौचंमूत्रपुरीषव
त्॥ स्त्रीणांतुनस्नानम् उभावप्यशुचीस्यातांदंपतीशयनंगतौ॥ शयनादुत्थितानारीशुचिःस्यादशुचि
पुमान्॥ इतिवृद्धशातातपोक्तेः॥ अत्रकश्चिद्विशेषउच्यते॥ तत्ररात्रौरजोदर्श
नेनादौचरात्रिंत्रिभागीकृत्य आद्यभागद्वयेचेत्पूर्वदिनंग्राह्यं॥ परतस्तूत्तरमितिमिताक्षरायां॥ यत्तु॥ भाग
द्वैरात्रात्प्रागर्वाक्सूर्योदयात्पूर्वदिनमित्युक्तम्॥ तत्रदेशाचारव्यवस्था॥ तथा॥ सप्तदशदिनपर्य्यंतंपुनःर
जोदृष्टौस्नानमात्रम्॥ अष्टादशेएकरात्रम्॥ ऊनविंशेद्व्यहः॥ विंशतिप्रभृतित्रिरात्रमितिततएववेदितव्यम्
॥ यत्तु॥ चतुर्दशदिनादर्वागशुचित्वंनविद्यतेइतितत्रस्नानप्रभृतित्वमभिप्रेतम्॥ एतच्चयस्याविंशति
दिनोत्तरंप्रायशोरजस्तत्रैव॥ यस्यास्त्वर्वाक्प्रायशोरजस्तत्रोक्तंस्मृत्यर्थसारे॥ त्रयोदशदिनादर्वाङ्मासि
रजोवतीनामेकादशदिनात्प्रागशुचित्वंनास्ति॥ एकादशेदिनेएकरात्रं ऊर्ध्वंत्रिरात्रमिति॥ प्रयोगपारिजा
तेप्येवं॥ रोगजेतुत्रैवविशेषःसंग्रहे॥ रोगेणयद्रजःस्त्रीणामन्वहंहिप्रवर्त्तते॥ नाशुचिस्तुभवेत्तेनयस्मा
द्वैकारिकंमतमिति॥ कर्माधिकारस्तुरजोनिवृत्तावेव॥ साध्वाचारानतावत्स्यात्स्नातापिस्त्रीरजस्वला
॥ यावत्प्रवर्त्तमानंहिरजोनैवनिवर्त्तते॥ इतिश्राद्धहेमाद्रौशंखोक्तेः॥ तत्रापिस्वकालेत्वशु
द्धिरेवेत्याहऋष्यशृंगः॥ रोगजेवर्त्तमानेपिकालेनिर्यातिकालजं॥ तस्मात्कालेऽप्रमत्तःस्याद्यथासंकरो
भवेत्॥ तथा॥ रजस्वलायारजस्वलांतरस्पर्शेऽकामतःस्नानं॥ कामतःउपवासः॥ पंचगव्याशनंच॥
असवर्णानांतु॥ ब्राह्मण्याःक्षत्रियादिस्पर्शेक्रमेणपादकृच्छ्रार्द्धपादोनकृच्छ्रातिकृच्छ्राः॥ क्षत्रियादीनां
तुकृच्छ्रपादएव॥ क्षत्रियादीनांहीनवर्णस्पर्शेत्रिरात्रमुपवासः॥ वैश्याशूद्रयोःश्वपाकस्पर्शेऽहोरात्रंद्विरा
त्रंवा॥ एतच्चकामतः॥ अकामतस्तुप्राक्शुद्धेरनशनम्॥ अकामतश्चांडालादिस्पर्शेप्यनशनमेव
प्राक्शुद्धेः॥ कामतस्तुप्रथमेन्हित्र्यहः॥ द्वितीयेद्व्यहस्तृतीयेएकाहः॥ श्वस्पर्शेतुत्र्यहएकाहोवा॥ भुंजा
नायाश्चंडालादिस्पर्शेषड्रात्रम्॥ उच्छिष्टयोःस्पर्शेतुकृच्छ्रमादिमिताक्षरायांज्ञेयम्॥ स्मृत्यर्थसारे
तुसर्वत्रबालापस्मारायाःस्पर्शेस्नानेकृतेभुक्तिःपश्चादनशनप्रमाणपरेति॥ स्नानविधिमाहपराशरः॥
स्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला॥ पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेत्॥ सिक्तगात्राभवेद
द्भिःसांगोपांगाकथंचन॥ नवस्त्रपीडनंकुर्य्यान्नान्यद्वासश्चधारयेत्॥० ज्वरजुष्ट
स्नानं॥ दिवसत्रयेभः॥ आद्यंतुरपाध्निनौम्यमेपुहस्नानिलाखंडलवाएवेयु॥ विष्णार्थमः
क्षीत्ररभाद्रमेयुवरंगनास्नानविधिःप्रदिष्टः॥ ज्वराभिभूतायानारीरजसाचपरिप्लुताकथंतस्याभ

वेच्छौचंशुद्धिःस्यात्केनकर्मणा॥चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रियं॥सासचैलावगाह्यापःस्नात्वा
पुनःस्पृशेत्॥दशद्वादशकृत्वोवाआचामेच्चपुनःपुनः॥अंतेचवाससांत्यागस्ततःशुद्धाभवेत्तुसेति॥
इदंत्वातुरमात्रेज्ञेयम्॥आतुरेस्नानउत्पन्नेदशकृत्वोह्यनातुरइतियराशरोक्तेः॥रजसोज्ञानेतुपराशर
माधवीयेप्रजापतिः॥अविज्ञातेमलेसाचमलवद्वसनायदि॥कृतंगृहेषुदुष्टंस्याच्छुद्धिस्तस्याःस्त्रिरा
त्रतः॥देवजानीयेकारिकायाम्॥उच्छिष्टातुद्विजातीनांरजःस्त्रीयदिपश्यति॥उपवासमधोच्छिष्टेऊ
र्ध्वोच्छिष्टेत्र्यहंक्षिपेत्॥ अथपुंसवनम्॥ प्रयोगपारिजातेजातूकर्ण्यः॥द्वितीयेवातृ
तीयेवामासिपुंसवनंभवेत्॥व्यक्तोगर्भेभवेत्कार्यंसीमंतेनसहाथवा॥बृहस्पतिः॥तृतीयेमासिकर्त्त
व्यंगृष्टेरन्यत्रशोभनं॥गृष्टेश्चतुर्थमासेतुषष्ठेमास्यथवाष्टमे॥सकृत्प्रसूता गृष्टिः॥एतेनप्रतिगर्भम
पिभवतीतिज्ञायते॥वह्वृचकारिकापि॥कर्त्तास्याद्देवरस्तस्यायस्याःपत्युरसंभवः॥आवर्त्तनंतइदंक
र्म्मप्रतिगर्भमितिस्थितिः॥ब्राह्मे॥गर्भाधानादिसंस्कर्त्तापिताश्रेष्ठतमःस्मृतः॥तदभावेकुलीनः९
स्यद्बांधवोवान्यगोत्रजः॥० मदनरत्नेसत्यव्रतः॥ मृतेदेशांतरगतेभर्त्तास्त्रीयधर्मसं
स्कृता॥देवरोवागुरुर्वापिवंश्योवापिसमाचरेत्॥ हेमाद्रौयमः॥० प्रथमेमासिद्वितीयेवायदापुंनक्षत्रेणचंद्रमायुक्तःस्यादिति॥ वराहः॥० हस्तोमूलंश्रवणःपुनर्वसुमृगशिरस्तथा
पुष्य॥पुंसंज्ञकेषुकार्येष्वेतानिशुभानिधिष्ण्यानि॥अनुराधापिपुन्नक्षत्रं॥अनुराधानुहविषावर्द्धयंत
इतिश्रुतेः॥ गर्गोपि॥ पुन्नामश्रवणस्तिष्योहस्तश्चैवपुनर्वसुः॥अभिजित्प्रोष्ठपाच्चैवअनुराधान
याश्चपुकृनृसिंहः॥रिक्तांपर्वचनवमीत्यक्त्वापुंसवनेशुभेः॥ज्योतिर्निबंधेवसिष्ठः॥मृत्युश्चसौरेस्तन
हानिरिंदोःमृतप्रजापुंसवनेबुधस्य॥काकीचवंध्याभवतीहशुक्रेस्त्रीपुत्रलाभोरविभौमजीवैः॥अन
वलोभनस्याप्ययमेवकालः॥दीपिकायांतुचतुर्थेनवलोभनमित्युक्तम्॥ अथसीमंतः॥०
हेमाद्रौवैजवापः॥ अथसीमंतोन्नयनंचतुर्थेपंचमेषष्ठेष्टमेवेति॥ वसिष्ठः चतुर्थेप्र
थमेमासिषष्ठेवाप्यथवाष्टमे॥ हेमाद्रौशंखः॥ गर्भस्पंदनेसीमंतोन्नयनंयावद्वानप्रसवः
कार्ष्णाजिनिः॥ गर्भलंभनमारभ्ययावन्नप्रसवस्तदा॥सीमंतोन्नयनंकुर्य्याच्छंखस्यवचनंयथा
॥मासश्चात्रसौरःसावनोवा॥ कालविधाने॥चतुर्थषष्ठाष्टममासभाजिसौरेणगर्भेप्रथमंविधेयम्
॥सीमंतकर्म्मद्विजभामिनीनांमासेष्टमेविष्णुवलिंचकुर्यात्॥ वसिष्ठः॥० चतुर्थेसावनेमा
सिषष्ठेवाप्यथवाष्टमे॥ज्योतिर्निबंधेनारदः॥अरिक्ताऽपर्वदिवसेकुजजीवार्कवासरे॥कालवि
धाने॥सीमंतेतिष्यहस्तादितिहरिशशभृत्सौम्यविष्णुत्तराख्याःपक्षच्छिद्रंचाहवसिष्ठः॥चतुर्द्दशी
चतुर्थीचअष्टमीनवमीतथा॥षष्ठीचद्वादशीचैवपक्षच्छिद्राह्वयाःस्मृताः॥क्रमादेनासुतिथिषुव
र्ज्जनीयाश्चनाडिकाः॥भूताष्टमनुतत्वांकदशशेषास्तुशोभनाः॥कालनिर्णये॥शुभसंस्थेनिशा
नाथेचतुर्थींचचतुर्द्दशीं॥पौर्णमासींप्रशंसंतिकेचित्सीमंतकर्मणि॥बृहस्पतिः॥शुक्लपक्षःशु
भःप्रोक्तःकृष्णश्चांत्यत्रिकंविना॥चतुर्द्दशीचतुर्थीचमुक्त्वापक्षेशुभप्रदे॥नारदः॥विप्रक्षत्रियपो९
कुर्य्याद्दिवासीमंतकर्म्मतत्॥वैश्यशूद्रकयोरेतद्दिवानिश्यपिकेचन॥वाराःपूर्वोक्ताएव॥एतच्च
सकृदेवकार्य्यमितिविज्ञानेश्वरः॥सकृच्चसंस्कृतानारीसर्वगर्भेषुसंस्कृतेतिदेवलोक्तेः॥सकृत्प्र

तिगर्भंवाकार्यमितिहेमाद्रिः॥सकृच्चकृतेसंस्कारःसीमंतेनद्विजस्त्रियः।यंयंगर्भंप्रसूयंतेसस्सर्वःसंस्कृतो
भवेदितिहारीतोक्तेः॥सीमंतोन्नयनंकर्मनस्त्रीसंस्कारइष्यते॥केचिद्गर्भस्यसंस्कारात्प्रतिगर्भंप्रयुज्यते
इतिहेमाद्रौविष्णुवचनाच्च॥सएव॥स्त्रीयद्यकृतसीमंताप्रसवेत्तुकथंचन॥गृहीतपुत्राविधिवत्पुनःसं
स्कारमर्हति॥सीमंतेभोजनेप्रायश्चित्तमुक्तंपराशरमाधवीयेधौम्येन॥ब्रह्मौदनेचसोमेचसीमंतोन्न
यनेतथा॥जातकर्मनवश्राद्धेभुक्त्वाचांद्रायणंचरेत्॥ऋग्विधानेतु॥अरण्येविजयेन्मंत्रंशतवारंग
संशयः॥सीमंतेचयदाभुंक्तेमुच्यतेकिल्बिषात्तदेति॥ अथगर्भिणीतत्पतिधर्माः॥वराहः॥
सामिषमशनंयत्नात्प्रमदापरिवर्जयेत्ततःप्रभृति॥गृह्यकारिकापि॥अंगारभस्मास्थिकपालतुल्ली
शूर्पादिकेनोपविशेच्चनारी॥सोलूखलाद्येदृषदादिकेवायंत्रेतुधान्येनतथोपविष्टा॥नोमार्जनीगो
मयपिंडकादौकुर्यान्नवारिण्यवगाहनंसा॥अंगारभूम्यानखैर्लिखेद्वृक्षाकलिंवशुभंगमश्चेन
कुर्यात्॥नोमुक्तकेशीविवसाथवास्याद्भुंक्तेनसंध्यावसरेनशेते॥नामंगलंवाक्यमुदीरयेत्साशू
मालयंवृक्षतलंनयायात्॥विष्णुधर्मोत्तरे॥कटुतीक्ष्णकषायाणिअत्युष्णलवणानिच॥आयासं
चव्यवायंचगर्भिणीवर्जयेत्सदा॥ हेमाद्रौकौडिन्यः॥ मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः॥
नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच॥ मिताक्षरायां॥ उदन्वतोंभसिस्नानंनख
केशादिकर्तनं॥अंतर्वत्न्याःपतिःकुर्वन्नप्रजाजायतेध्रुवम्॥पृथ्वीचंद्रोदयेगारुडे॥गयायांपिंडदा
नस्यात्कदाचिन्निराक्रिया॥अत्रकालादर्शप्रत्ययस्मृतेर्निषिद्धकालस्यैवापवादोनतुजीवत्पितृगर्भि
णी॥पत्न्याशौचादिनिमित्तस्य॥अग्निहोत्रेयावज्जीववत्कालपरत्वाभावात्॥अन्यथाशौचेनि
मित्तेपिगयायात्राश्राद्धंस्यात्॥ यत्रतुनिमित्तसंयोगस्यापवादोयथाशौचेग्निहोत्रादेः॥यथा
वाजीवत्पितृकस्यमातुर्गयान्वष्टकादौतत्रतद्भवतिनान्यदितिसंक्षेपः॥प्रयोगपारिजातेकश्य
पः॥गर्भिणीकुंजराश्वादिशैलहर्म्यादिरोहणम्॥व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत्॥शो
कंरक्तविमोक्षंचसाध्वसंकुक्कुटासनंव्यवसायंदिवास्वापंरात्रौजागरणंत्यजेत्॥ मदनरत्ने
स्कांदे॥ हरिद्राकुंकुमंचैवसिंदूरंकज्जलंतथा॥कूर्पासकंचतांबूलंमंगलाभरणंशुभं॥केश
संस्कारंकबरीकरकर्णविभूषणं॥भर्तुरायुष्यमिच्छंतीदूरयेद्गर्भिणीनहि॥बृहस्पतिः॥चतुर्थेमा
सिषष्ठेवाप्यष्टमेगर्भिणीयदा॥यात्रानित्यंविवर्ज्यास्यादाषाढेतुविशेषतः॥ याज्ञवल्क्यः॥
दौहृदस्याप्रदानेनगर्भोदोषमवाप्नुयात्॥वैरूप्यंमरणंवापितस्मात्कार्यंप्रियंस्त्रियाः॥दौहृदं
गर्भिणीप्रियम्॥ तत्रैवाश्वलायनः॥ वपनंमैथुनंतीर्थंवर्जयेद्गर्भिणीपतिः॥
श्राद्धंचसप्तमान्मासादूर्ध्वंचान्यत्रवेदवित्॥श्राद्धंतद्भोजनमितिप्रयोगपारिजातः॥कालवि
धानेमुहूर्तदीपिकायांच॥क्षौरंशवानुगमनंनखकृंतनंचयुद्धादिवास्तुकरणंत्वतिदूरयानं॥उ
द्वाहमौपनयनंजलधेश्चगाहमायुःक्षयार्थमितिगर्भिणिकापतीनाम्॥ रत्नसंग्रहेगाल
वः॥ दहनंवपनंचैवचौलंचगिरिरोहणं॥नावश्चारोहणंचैववर्जयेद्गर्भिणीपतिः॥ना
रदः॥अव्यक्तगर्भापतिरब्धियानंमृतस्यवाहंक्षुरकर्मसंगम्॥तस्माद्यत्नेनगयादितीर्थ
यात्रापि॥ मार्गादिकंवास्तुविधिंनकुर्यात्॥अव्यक्तगर्भावनिताभवेन्मासचतुष्टयात्परं॥यएवासात्परतःस्प

तिर्नवमीरिक्तवासिनी॥० अथसूतिगृहप्रवेशः॥गर्गः॥ रोहिण्यैंदवपौष्णेषुस्वा
तीवारुणयोरपि॥पुनर्वसौपुष्यहस्तधनिष्ठास्वुत्तरासुच॥मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवे
शनं॥एतच्चसंभवे॥प्रसूतिसंभवेकालेसद्यएवप्रवेशयेदितिवसिष्ठोक्तेः॥तच्चैवनैर्ऋत्यांकार्य्यम्।
वारुण्यांभोजनगृहंनैर्ऋत्यांसूतिकागृहमितिवसिष्ठोक्तेः॥विष्णुधर्मोत्तरे॥दशाहंसूतिकागा
रमायुधैश्चविशेषतः॥वह्निनातिंदुकालातैःपूर्णकुंभैःप्रदीपकैः॥मुशलेनतथावारिवर्णकै
श्चित्रितेनच॥० अथजातकर्म॥पारिजातेवसिष्ठः॥० श्रुत्वाजातंपितापुत्रं
सचैलंस्नानमाचरेत्॥मनुःप्राङ्नाभिवर्द्धनात्पुंसोजातकर्मविधीयते॥वर्द्धनंछेदनं॥हेमाद्रौबै
जवापः॥जन्मतोनंतरंकार्य्यंजातकर्मयथाविधि॥दैवादतीतकालंचेदतीतेसूतकेभवेत्॥पृ
थ्वीचंद्रोदयेविष्णुधर्मे॥अच्छिन्ननाभिकर्त्तव्यंश्राद्धंचैवपुत्रजन्मनि॥पुत्रपदेनकन्यापिगृह्यते॥
॥तदाहतत्रैवकार्ष्णाजिनिः॥प्रादुर्भावेपुत्रपुत्र्योर्ग्रहणेचंद्रसूर्ययोः॥स्नात्वानंतरमात्मीयान्
पितॄन्श्राद्धेनतर्प्पयेत्॥एतच्चरात्रावपिकार्य्यम्॥पुत्रजन्मनियात्रायांशर्वर्यांदत्तमक्षयमितित
त्रैवव्यासोक्तेः॥ बैजवापः॥ जातमात्रकुमारस्यजातकर्मविधीयते॥स्तनप्राशनतः
पूर्वंनाभिकर्त्तनतोपिवा॥एतेननैमित्तिकमपीदं॥जातेत्विद्धाशौचांतेकार्य्यमितिशंकापरा
स्ता॥जातेकुमारेपितॄणामामोदात्पुण्यं॥तदहरितिहारीतोक्तेश्च॥ अत्रश्राद्धमामेनहेम्नावा
कार्यमित्युक्तंपृथ्वीचंद्रोदयेआदित्यपुराणे॥जातश्राद्धेनदद्यात्तुपक्वान्नंब्राह्मणेष्वपीति॥ हे
माद्रिस्तु॥ पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैवबुद्धिमान्॥नपक्वेननचामेनकल्याणान्यभिका
मयन्नितिसंवर्त्तोक्तेर्हेम्नैवेत्याहएतच्चजननाशौचेमरणाशौचेचकार्य्यमित्याह॥मिताक्षरायां
प्रजापतिः॥आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत्॥कर्तुस्तात्कालिकीशुद्धिःपूर्वाशौचेनशु
ध्यति॥केचित्तु॥मृताशौचस्यमध्येतुपुत्रजन्मयदाभवेत्॥आशौचापगमेकार्यंजातकर्मयथा
विधीति॥स्मृतिसंग्रहोक्तेराशौचांतेकार्य्यमित्याहुः॥स्मृत्यर्थसारेपिविकल्पउक्तः॥मृदुध्रुवचर
क्षिप्रभेष्विवामुदयेपिच॥गुरौशुक्रेथवाकेंद्रेजातकर्मचनामच॥मृद्वादिलक्षणमाहश्रीधरः॥रो
हिण्युत्तरभंस्थिरंगिरिशमूलेंद्रोरगादारुणं॥क्षिप्रंचाश्विदिनेशपुष्यमनलेंद्राग्नीतुसाधारणं
॥उग्रंपूर्वमघांतकंमृदगतित्वाष्ट्रांत्यमैत्रंचरं॥विष्णुस्वातिशतोडुवस्वदितयःकुर्युःस्वसंज्ञाफलं
॥अत्रसर्वत्रजातनामकर्मादावुक्तकालातिक्रमेनक्षत्रादिकंज्ञेयं॥देशकालोपघाताद्यैःका
लातिक्रमणंयदि॥अनस्तगेज्येंदुसितेतत्कार्य्यंचोत्तरायणइतिमदनरत्नेनारदोक्तेः॥बृहस्प
तिरपि॥मुख्यालाभेविधिज्ञेनविधिश्चिंत्यःप्रमादतः॥नक्षत्रतिथिलग्नानांविचार्य्यैवंपुनःपुन
॥सूतकेसंध्यादौविशेषंवक्ष्यामः॥ अथजन्मनिदुष्टकालाः॥० तत्रगंडांतः॥
ज्योतिर्निबंधेनारदः॥पूर्णानंदाख्ययोस्तिथ्योःसंधिर्नाडीद्वयंतथा॥गंडांतंमृत्युदंजन्मयात्रो
द्वाहव्रतादिषु॥कुलीरसिंहयोःकीटचापयोर्मीनमेषयोः॥गंडांतमंतरालंस्याद्घटिकार्द्धंमृति
प्रदं॥सार्पेंद्रपौष्णभेष्वंत्यषोडशांशोभसंधयः॥तदग्रेभेष्वाद्यपादाभानांगंडांतसंज्ञकाः॥र
त्नमालायांपौष्णाश्विन्योःसार्पपित्र्यर्क्षयोश्चयच्चज्येष्ठामूलयोरंतरालं॥तद्गंडांतंस्याच्चतुर्ना॥

डिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम्॥ रत्नसंग्रहे॥ नवनीताऽरिष्टे॥सर्वेषां गंडजातानां
परित्यागो विधीयते॥वर्जयेद्दर्शनं यावत्तस्य षाण्मासिकं भवेत्। तिथ्यर्क्षगंडे पितृमातृनाशी लग्नेषु
संधौ तनयस्य नाशः॥सर्वेषु नो जीवति हंति वंधून् जीवन्सुतः स्याद्बहुवारणाश्वः॥ अथैषां
दानम्॥उत्तरगार्ग्ये॥तिथिगंडे त्वनड्वाहं नक्षत्रे धेनुरुच्यते॥कांचनं लग्नगंडे तु गंडदोषो विनश्य
ति॥उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते॥अजाप्रदानं त्वाष्ट्रे स्यात्सर्वाषाढे तु कांचनं॥उत्त
रातिष्यचित्रासु सर्वाषाढोऽद्रवस्य च॥कुर्याच्छांतिं प्रयत्नेन नक्षत्राकारजां बुधः॥ अथाश्ले
षाफलम्॥ मूर्द्धास्यनेत्रगलकांसयुगं च बाहू॥हृज्जानुगुह्यपदमित्यहिदेहभागः बाणा
द्रिनेत्रहुतभुक्श्रुतिनागरुद्रषसंदयं च शिरसः क्रमशः स्तुनाड्यः॥राज्यं पितृक्षयो मातृनाशः
कामक्रियारतिः॥पितृभक्तो बली स्वघ्नस्त्यागी भोगी धनी क्रमात्॥ ज्येष्ठाफलमुक्तं ब्रह्म
यामले॥ज्येष्ठादौ जननी माता द्वितीये जननी पिता॥तृतीये जननी भ्राता स्वयं माता चतुर्थके
॥आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत्॥सप्तमे चोभयकुलं ज्येष्ठं भ्रातरमष्टमे॥नवमे श्व
शुरं हंति सर्वं हंति दशांशकः इति॥ अथ मूलफलं वसिष्ठः॥ अभुक्तमूलसंभवं परि
त्यजेच्च बालकं॥समाष्टकं पिताथवा न तन्मुखं विलोकयेत्॥तदाद्यपादके पिता विपद्यते जन
न्यथ॥तृतीयके धनक्षयश्चतुर्थकः शुभावहः॥प्रतीपमन्त्यपादतः फलं तदेव सार्पभे॥ अभुक्त
मूलं त्वाह वृद्धवसिष्ठः॥ज्येष्ठांत्यघटिका चैका मूलादौ घटिकाद्वयं॥ अभुक्तमूलमित्याहुर्जातं
तत्र विवर्जयेत्॥केचिज्ज्येष्ठांत्यं मूलाद्यं च पादं अभुक्तमूलमाहुः॥कश्यपसंहितायां त्वन्यथो
क्तं॥मूलाद्यपादजो हंति पितरं तु द्वितीयजः॥मातरं स्यात्तृतीयोऽर्थान्सुहृदं च तुरीयजः॥फलं
तदेव सार्पर्क्षे प्रतीपं त्वंत्यपादतः॥ अथ मूलवृक्षः॥जयार्णवे॥० मूलं स्तंभ
स्त्वचा शाखा पत्रं पुष्पं फलं शिखा॥वेदाश्च मुनयश्चैव दिशश्च वसवस्तथा॥नंदा वर्णा रसा
रुद्रा मूलभेदः प्रकीर्त्तितः॥मूले मूलविनाशाय स्तंभे हानिर्धनक्षयः॥त्वचि भ्रातुर्विनाशाय शाखा मातु
र्विनाशकृत्॥पत्रे सपरिवारः स्यात्पुष्पे तु नृपवल्लभः॥फले तु लभते राज्यं शिखायामल्पजीवितं॥अ
न्यत्रत्वन्यथोक्तं॥मूले सप्तघटीषु मूलहननं स्तंभे ष्टसुखक्षयं॥त्वक्षिद्गं बंधुविनाशनं च विटपे रुद्रै र्हि
तो मातुलः॥पत्रैर्र्क्षः सुकृतिस्तु वाणकुसुमे मंत्री फले सागरै राजा वन्हिशिखाल्पमायुरिति तन्मू
लांघ्रिपे स्यात्फलं॥ भूपालवल्लभः॥ वृषालिसिंहेषु घटे च मूलं दिवि स्थितं यु
ग्मतुलांगनांत्ये॥पाताल गं मेषधनुःकुलीरनक्रेषु मर्त्ये क्षितिसंस्थितं ति॥स्वर्गे मूले भवेद्राज्यं पा
ताले च धनागमं॥मृत्युलोके यदा मूलं तदा शून्यं समादिशेत्॥ वसिष्ठः॥ नैर्ऋत्यभो
द्भूतसुतः सुतावा हि सपादवश्यं श्वशुरं निहंति॥तदंत्यपादे जनितो निहंति तस्याग्रजं मेणा हि भवेत्
लत्रं॥सुरेशताराजनिता धवाग्रजं द्वितीय ताराजनिता तु देवरं॥पुरंदरर्क्षे जनितः सुतस्तथा स्वसा
ग्रजं हंति न पुत्रिका यदि॥ प्रयोगपारिजाते॥ मूलजा श्वशुरं हंति व्यालजा च त
दंगनां॥माहेंद्रजाग्रजं हंति देवरं तु द्विदैवजा॥नृसिंहप्रसादे॥धवाग्रजं हंति सुरेंद्रजाता तथैव प
त्नीभगिनीं पुमांश्च॥द्विदैवजा देवरमाशु हन्यात् भार्यानुजा माशु निहंति हूतुः॥पत्न्यग्रजामग्रजं

वा हंति ज्येष्ठर्क्षजः पुमान्॥ तथा भार्य्या स्वसारं वा श्यालकं वा द्विदैवजः॥ कन्यका देवरं हंति विशाखां
त्यसमुद्भवा॥ आद्यपादत्रये नैव आद्यमे तु पुमान् भवेत्॥ नहन्याद्देवरं कन्या तुलामिश्र द्विदैवजा॥
तद्दक्षांतोद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवत्॥ चित्राद्यार्द्धे पुष्यमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृ
तीये॥ जातः पुत्रश्चोत्तरार्द्धे विधत्ते माता पित्रोर्भ्रातरं बालनाशं॥ द्विमासं चोत्तरादोषः पुष्ये चैव
त्रिमासिकः॥ पूर्वाषाढाष्टमे मासि चित्राषाण्मासिकं फलं॥ नवमासं तथाऽश्लेषा मूले चाष्ट
कवर्षकं॥ ज्येष्ठायं चदशे मासि पुत्रदर्शनवर्जिता॥ वसिष्ठः॥ व्यतीपातेऽगहानिः
स्यात्परिघे मृत्युमादिशेत्॥ वैधृतौ पितृहानिः स्यान्नष्टे दारं धनं व्रजेत्॥ मूले समूलनाशः
स्यात् कुलनाशो धृतौ भवेत्॥ विष्कंभे गंडे चहीने च संध्ययोरुभयोरपि॥ पर्वण्यपि प्रसूतौ च
सर्वारिष्टभयप्रदः॥ तद्वत्सदंतजातश्च पादजातस्तथैव च॥ तस्माच्छांतिं प्रकुर्वीत ग्रहाणां
क्रूरचेतसां॥ गर्गः॥ कृष्णां चतुर्दशीं षोढा कुर्य्यादादौ शुभं स्मृतं॥ द्वितीये पितरं हंति तृतीये हं
ति मातरं॥ चतुर्थे मातुलं हंति पंचमे वंशनाशनं॥ षष्ठे च धननाशः स्यादात्मनो वंशनाशनं॥
देवकीर्त्तिः॥ यद्येकस्मिन् धिष्ण्ये जायंते दुहितरोऽथवा पुत्राः॥ पितुरंतकरा ह्येते यद्यपरे प्रीतिरा
तुला स्यात्॥ गर्गः॥ एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः॥ प्रसूतिश्च तयोर्मृत्युर्भवेदेक
स्य निश्चितं॥ शौनकः॥ ग्रहणे चंद्रसूर्य्यस्य प्रसूतिर्यदि जायते॥ व्याधिपीडा तदा स्त्रीणां आ
दौ तु क्रतुदर्शनात्॥ इत्थं संजायते यस्य तस्य मृत्युर्न संशयः॥ शांतिस्तु॥ नक्षत्राधिपते रूपं सुव
र्णेन प्रकल्पयेत्॥ सूर्यग्रहे सूर्यरूपं हेमं चंद्रं तु राजतं॥ राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः
नागः सीसम्॥ त्रयाणां चैव रूपाणां चैव रूपाणां स्थापनं च कारयेत्॥ आकृष्णेनाप्यायस्व स्वर्भा
नो रिति च जामन्त्राः॥ नक्षत्रदेवतायास्तन्मंत्रेण॥ संप्रजपं तु यजेत्सूर्यं समिद्भिश्चार्कसंभवैः॥ चंद्र
ग्रहे च पालाशैर्दूर्वाभी राहुमेव च॥ समिद्भिर्ब्रह्मवृक्षस्य मेशाय जुहुयाद्बुधः॥ आज्येन चरुणा
चैव तिलैश्च जुहुयात्ततः॥ पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः॥ जलै रौषधिकल्कैश्च अ
भिषेकं समाचरेत्॥ मंत्रैर्वारुणसंभूतैरापो हिष्ठादिभिस्त्रिभिः॥ इमम्मे गंगे परतत्त्वायामी
ति मंत्रकैः॥ यजमानस्ततो दद्याद्भक्त्या प्रतिकृतित्रयं॥ मात्स्ये॥ अकालप्रसवा नार्य्यः कालाती
तप्रजास्तथा॥ विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा॥ अमानुषा अमुंडाश्च अजातव्यंजना
स्तथा॥ हीनांगा अधिकांगाश्च जायंते यदि वा स्त्रियः॥ पशवः पक्षिणश्चैव तथैव च सरीसृपाः
॥ विनाशस्तस्य देशस्य कुलस्य च विनिर्दिशेत्॥ निर्वासयेत्तां नगरात् ततः शांतिं समाचरेत्॥
विष्णुधर्मोत्तरे॥ उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः॥ दंतैर्वा सह यस्य स्याज्जन्म भार्गवसत्त
म॥ द्वितीये च तृतीये च चतुर्थे पंचमे तथा॥ यदा दंताश्च जायंते मासे चैव महद्भयं॥ मातरं पितरं
वाथ खादेदात्मानमेव च॥ ० अथोर्ध्वदंतजननशांतिः॥ गजपृष्ठगतं बा
लं नौस्थं वा स्नापयेद्द्विजः॥ तदभावे तु धर्मज्ञ कांचने वा वरासने॥ सर्वौषधैः सर्वगंधैर्बीजैः पुष्पैः
फलैस्तथा॥ पंचगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव॥ स्नापयेदित्यन्वयः॥ स्थालीपाकेन धाता
रं पूजयेत्तदनंतरम्॥ सप्ताहं चात्र कर्त्तव्यं तथा ब्राह्मणभोजनम्॥ अष्टमेहनि भद्रासनोपरिवा

लंनिवेश्य॥भद्रासनेनिवेश्यैनंमृद्भिर्मूलैःफलैस्तथा॥सर्वौषधैःसर्वगंधैःसर्ववीजैस्तथैवच॥स्ना
पयेत्पूजयेच्चापिवन्हिंसोमंसमीरणम्॥पर्वतांश्चतथाख्यातान्देवदेवंचकेशवम्॥एतेषामेवजु
हुयात्घृतमष्टौयथाविधिः॥ब्राह्मणानांतुदातव्यातत्रसंपूज्यदक्षिणा॥अष्टमेहनिविप्राणांतथा
देयाच्चदक्षिणा॥कांचनंरजतंगाश्चभुवंवाधनमेवच॥दंतानामष्टमेमासिषष्ठेमासिततःपुनः॥
दंतायस्यचजायंतेमातावाम्रियतेपिता॥बालकोम्रियतेतत्रस्वयमेवनसंशयः॥दधिक्षौद्रघृता
क्तानामश्वत्थसमिधांतथा॥जुहुयादष्टोत्तरशतंसमंत्रेणतुमंत्रवित्॥धेनुंचदक्षिणांदद्यात्ततः
संपद्यतेसुखं॥ज्योतिर्निबंधेतुअष्टमःशुभदस्तूक्तम्॥अष्टमादिषुदंतोत्थानंशुभावहमित्यत्र
गुणसंविज्ञानंबहुव्रीहिणावानवमासादिग्रहणम्॥ ब्रह्मयामले॥ प्रथमंदंत
निर्मुक्तिरूर्ध्वंबालस्यचेद्भवेत्॥क्षेपणायमातुलस्येहतद्दोषोक्तामहर्षिभिः॥सौवर्णेराजतेवापि
ताम्रकांस्यमयेतुवा॥दध्योदनेनसंपूर्णेपात्रेदद्याच्छिशोःकरे॥समंत्रंभाजनंदत्वासपश्येन्मातु
लःशिशुं॥सालंकारंसवस्त्रंचशिशुमालिंग्यसादरं॥ तत्रमंत्रः॥ रक्षमांभागिने
यत्वंरक्षमेसकलंकुलम्॥गृहीत्वाग्रासनंसान्नंप्रसन्नोभवमेसदा॥निर्विघ्नंकुरुकल्याणंनिर्वि
घ्नंचममान्तरं॥मय्यात्मानमधिष्ठाप्यचिरंजीवमयासह॥एवंकृतेविधानेतुविघ्नःकोपिनजायत
इति॥ अथत्रिकशांतिः॥ शांतिसौख्ये॥सुतत्रयेसुताचेत्स्यात्त्रयेवासुतोय
दि॥मातापित्रोःकुलस्यापितदानिष्टंमहद्भवेत्॥ज्येष्ठनाशोधनेहानिर्दुःखंवासुमहद्भवेत्॥त
त्रशांतिंप्रकुर्वीतवित्तशाठ्यविवर्जितः॥जातस्यैकादशाहेवाद्वादशाहेशुभेदिने॥आचार्यमृत्वि
जोवृत्वाग्रहयज्ञपुरःसरं॥ब्रह्मविष्णुमहेशेंद्रप्रतिमाःस्वर्णतःकृताः॥पूजयेद्धान्यराशिस्थाःकल
शोपरिशक्तितः॥पंचमेकलशेरुद्रंपूजयेद्रुद्रसंख्यया॥रुद्रसूक्तानिचत्वारिंशांतिसूक्तानिसर्व
शःस्वआचार्योजुहुयात्तत्रसमिदाज्यतिलांश्चरुं॥अष्टोत्तरसहस्रंवाशतंवाविंशतिंतुवा॥देवता
भ्यश्चतुर्थ्यंताद्भ्योग्रहपुरःसरम्॥ब्रह्मादिमंत्रैरिंद्रस्यपतनंदमयामहे॥ततःस्विष्टकृतंहुत्वा
बलिंपूर्णाहुतिंततः॥अभिषेकंकुटुंबस्यकृत्वाचार्यंप्रपूजयेत्॥हिरण्यंधेनुरेकाचकृत्विजां
दक्षिणाततः॥आज्यस्यवीक्षणंकृत्वाशांतिपाठंतुकारयेदिति॥ब्राह्मणान्भोजयेच्छक्त्यादी
नानाथांश्चतर्पयेत्॥कृत्वैवंविधिनाशांतिंसर्वारिष्टाद्विमुच्यते॥ इतिभर्गसंहितोक्तात्रि
कशांतिः॥ अन्येषुमूलादिऋक्षेषुशांत्यादिप्रयोगपारिजातेशांतिरत्नेचज्ञेयं॥मिताक्षरायां
मार्कंडेयः॥रक्षणीयातथाषष्ठीनिशातत्रविशेषतः॥रात्रौजागरणंकार्यंजन्मदानांतथाबलिः॥
पुरुषाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः॥रात्रौजागरणंकुर्युर्दशम्यांचैवसूतके। व्यासः
सूतिकावासनिलयाजन्मदानामदेवताः॥तासांयागनिमित्तंतुशुद्धिर्जन्मनिकीर्तिता॥प्रथमे
दिवसेषष्ठेदशमेचैवसर्वदा॥त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनि॥ अपरार्केब्राह्मे
कन्याश्चतस्रोराकाद्यावातघ्नीचैवपंचमी॥क्रीडनार्थाचबालानांषष्ठीचशिशुरक्षिणी॥स्वजे
तुपूजनीयावैवैश्यैश्चान्यैर्द्विजातिभिः॥राकानुमतिःसिनीवालीकुहूरितिचतस्रःकन्याइत्यर्थः॥
अथदत्तकपुत्रपरिग्रहविधिः॥ पारिजातेशौनकः॥० शौनकोहंप्रवक्ष्यामिपु

त्रसंग्रहमुत्तमं॥ अपुत्रोमृतपुत्रोवापुत्रार्थंसमुपोष्यचवाससीकुंडलेदत्वाउष्णीषंचांगुलीयकं
॥बंधूनन्नेनसंभोज्यब्राह्मणांश्चविशेषतः॥ अन्वाधानादियत्तंत्रंकृत्वासौम्यवनांतकं॥दातुः
समक्षंगत्वातुपुत्रंदेहीतियाचयेत्॥दानेसमर्थोदातास्मैयेयज्ञेनेतिपंचभिः॥देवस्यत्वेतिमंत्रे
णहस्ताभ्यांपरिगृह्यच॥अंगादंगेत्यृचंजप्त्वाआघ्रायशिशुमूर्द्धनि॥गृहमध्येतमाधायचरुंहु
त्वाविधानतः॥यस्त्वाहृदेत्यृचाचैवतुभ्यमग्रऋचैकया॥सोमोददद्दित्येताभिःप्रत्यृचंपंचभि
स्तथा॥स्विष्टकृदादिहोमंचकृत्वाशेषंसमापयेत्॥ब्राह्मणानांसपिंडेषुकर्त्तव्यःपुत्रसंग्रहः॥
तदभावेसपिंडोवाऽन्यत्रतुनैवकारयेत्॥मिताक्षरादौतुव्याहृतिभिराज्येनहोमउक्तः॥सचहो
मोनांतरंजलपूर्वकंदेयः॥नचवाग्मात्रेण॥व्याहृतिभिर्हुत्वाप्रतिगृह्णीयादितिवसिष्ठोक्तेः॥मा
तापितावादद्यातांयमद्भिःपुत्रमापदि॥सदृशंप्रीतिसंयुक्तंसज्ञेयोदत्रिमःसुत इतिम
नूक्तेः॥ तत्रैववसिष्ठः॥नत्वेवैकंपुत्रंदद्यात् प्रतिगृह्णीयाद्वानस्त्रीपुत्रंदद्यात्प्रतिगृ
ह्णीयाद्वाअन्यत्रानुज्ञानाद्भर्तुरिति॥इदंचभर्तृसत्वे॥अन्यथा॥दद्यान्मातापितावायंसपुत्रो
दत्रिमःस्मृतइति॥ व्यासवचोविरोधःस्यात्॥ दानंप्रतिग्रहोपलक्षण
म्॥यत्तु॥समंत्रकहोमस्यपुत्रप्रतिग्रहांगत्वात्॥व्याहृत्यादिमंत्रपाठेचस्त्रीशूद्रयोरनधिका
रात्॥तयोर्दत्तकःपुत्रोनभवत्येवेतिशुद्धिविवेकेरुद्रधरेणोक्तं॥वाचस्पतिश्चैनमाह॥तन्न॥
भर्त्रनुज्ञयास्त्रियाअपिप्रतिग्रहोक्तेः॥यद्यपिमेधातिथिनाभार्यात्ववददृष्टरूपंदृष्टरूपंदत्त
कत्वंहोमसाध्यमुक्तंस्त्रियाश्चहोमासंभवस्तथाऽपिव्रतादिवद्विप्रद्वाराहोमादिकारयेदितिह
रिनाथादयः॥संबंधतत्त्वेप्येवम्॥एवंशूद्रस्यापि॥स्त्रीशूद्राश्चसधर्माणइतिस्मृतेः॥अतए
वशूद्रकर्त्तृकहोमोविप्रद्वारैवपराशरेणोक्तः॥दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः॥ब्राह्म
णस्तुभवेत्शूद्रःशूद्रस्तुब्राह्मणोभवेत्॥ अत्रमाधवाचार्यः॥ योविप्रःशूद्र
दक्षिणामादायतदीयंहविःशांतिपुष्ट्यादिसिद्धयेवैदिकैर्मंत्रैर्जुहोतितस्यविप्रस्यैवदोषःशूद्र
स्तुहोमफलंलभेतैवेतिव्याचचक्षे॥दत्तकेविशेषः॥ कालिकापुराणे॥ पितुर्गो
त्रेणयःपुत्रःसंस्कृतःपृथिवीपते॥आचूडांतंनपुत्रःसपुत्रतांयातिचान्यतः॥चूडाद्यायदिसं
स्कारानिजगोत्रेणवैकृताः॥दत्ताद्यास्तनयास्तेस्युरन्यथादासउच्यतेऊर्ध्वंतुपंचमाद्वर्षान्नद
त्ताद्याःसुतानृप॥गृहीत्वापंचवर्षीयंपुत्रेष्टिंप्रथमंचरेदिति॥पंचमोर्ध्वंतुस्वदानेच्छोरेवदानं
नान्यथा॥विक्रयंचैवदानंचननेयाःस्युरनिच्छवः॥दाराःपुत्राश्चसर्वस्वमात्मन्येवतुयोजयेत्
॥इतिहेमाद्रिमाधवधृतव्यासदक्षादिवचनात्॥यच्चयाज्ञवल्क्यः॥स्वकुटुंबाविरोधेनदेयंदा
रसुताद्दृते॥इतितदूर्ध्वंस्वदानानिच्छुसंस्कृतपुत्रपरम्॥तेनसर्वस्वदानेच्छुस्वदानेच्छुदारपु
त्रदानंसिद्धम्॥योहि॥हिग्रभायारणःसुशेवोन्योदर्योमनसामन्तवाउ॥इतिश्रुतौदत्तकनिषे
धःसोप्यौरसातिशयार्थः॥अन्यथाशुनःशेपादिप्रतिग्रहश्रौतलिंगविरोधापत्तेः॥उपेयान्त्व
पुत्रतामित्युक्तेः॥इदंचश्रौतलिंगंस्वयंदत्तक्रीतपरम्॥नदत्तकपरम्॥द्वादशविधपुत्रमध्ये
दत्तान्मातुःस्वयंदत्तः॥क्रीतश्चताभ्यांविक्रीतइति॥याज्ञवल्क्येनतयोर्दत्तकाद्भेदोक्तेस्तयोश्चद

न्नौरसेतरेषांतुपुत्रत्वेनपरिग्रहइतिकलौनिषेधात्॥तेनसंस्कारोन्नरंदत्तकीनभवत्येवेतिसिद्ध
म्॥यत्तु॥विश्वजिदधिकरणेपुत्रादीनांजातित्वेनस्वशब्दवाच्यत्वात्पुत्रत्वेनदानमाशं
क्यनिराकृतं॥जन्यपुंस्त्वस्यदानेतत्रानिष्पत्तेः॥दासत्वेनदानंभवत्येव॥पुत्रस्वत्वाभाववदत्पु
त्रक्रयविक्रयादिशुनःशेपविक्रयादिश्रौतलिंगात्॥दासक्रयविक्रयादिव्यवहारायोगान्मू
र्खएव॥पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांचपूर्वजः॥कथंतयोर्विभागःस्यादितिचेत्संशयोभ
वेत्॥सदृशस्त्रीप्रजातानांपुत्राणामविशेषतः॥नमातृतोज्यैष्ठ्यमस्तिजन्मतोज्यैष्ठ्यमुच्यते॥ति
नकनिष्ठायांपूर्वजातएवज्येष्ठः॥नज्येष्ठायांपश्चाज्जातइत्यर्थः॥सएवश्राद्धाधिकारी॥ अ
थयमयोः संस्कारक्रमार्थंज्येष्ठकनिष्ठभावउच्यते॥मनुः॥जन्मज्येष्ठेनचाह्वानंसुब्रह्म
ण्यास्वपिस्मृतं॥यमयोश्चैवगर्भेषुजन्मतोज्येष्ठतामता॥देवलः॥यस्यजातस्ययमयोःपश्यं
तिप्रथमंमुखं॥संतानःपितरश्चैवतस्मिन्ज्येष्ठेप्रतिष्ठितं॥भागवतेतु॥ह्येतदाभवतोगर्भेस्
तिवेशविपर्य्ययादित्युक्तेः॥पश्चादुत्पन्नस्यज्येष्ठ्यमुक्तम्॥अत्रदेशाचारतोव्यवस्था॥सर्वमे
वयुक्तम्॥गर्भाष्टमेइत्यादौविशेषनिर्देशएवगर्भग्रहणंनान्यत्र॥अन्यथातद्वैयर्थ्यात् अ
थसूतिकास्नानम्॥० ज्योतिषे॥करेंद्रभाग्यानिलवासवांत्यमैत्रेंदवाश्विध्रुवभेहि
पुंसांतिथावरिक्तेशुभमामनंतिप्रसूतिकास्नानविधिंमुनींद्राः॥० अथनामकर्म॥
मदनरत्नेबृहस्पतिः॥ द्वादशेदशमेवापिजन्मतोपित्रयोदशे॥षोडशेविंशतौचैवद्वा
त्रिंशेवर्णतःक्रमात्॥याज्ञवल्क्यः॥अहन्येकादशेनाम॥ हेमाद्रौभविष्ये॥
नामधेयंदशम्यांतुद्वादश्यांमासिकेचन॥अष्टादशेहनितथावदंत्यन्येमनीषिणः॥दशम्यां
मतीतायामितिज्ञेयं॥आशौचापगमेनामधेयमितिविष्णूक्तेः॥गृह्यपरिशिष्टेपि॥जननाद्दश
रात्रेव्युष्टेशतरात्रेसंवत्सरेवानामकरणम्॥व्युष्टेऽतीते॥ज्योतिर्निबंधेगर्गः॥अमासंक्रांति
विष्ट्यादौप्राप्तकालेपिनाचरेत्॥श्रीधरः॥मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्यु
तप्राजेशाश्विशशांकपौष्णदिनकृत्पुष्येषुराशौस्थिरे॥छिद्रांपंचदशींविहायनवमींशुद्धेष्ट
मेभार्गवज्ञाचार्यामृतपादभागदिवसेनामानिकुर्याच्छिशोः॥मनुः॥शर्म्मांतंब्राह्मणस्यस्या
द्वर्म्मांतंक्षत्रियस्यतु॥वैश्यस्यधनसंयुक्तंशूद्रस्यप्रेष्यसंयुतम्॥मदनरत्नेनारदीये॥सूतकां
तेनामकर्म्मविधेयंस्वकुलोचितं॥नामपूर्वंतुमासस्यमंगलंसुसमाक्षरैः॥तत्रैवगार्ग्यः॥मा
सनामगुरोर्नामदद्याद्बालस्यवैपिता॥कृष्णोऽनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः॥उपेंद्रो
यज्ञपुरुषोवासुदेवस्तथाहरिः॥योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात्॥अत्रमार्ग
शीर्षादिश्चैत्रादिर्वाक्रमइतिमदनरत्ने॥तन्मासनामप्रथमंदद्यात्संबुद्धचैवहि॥देवालय
गजाश्वानांवृक्षाणांवापिकूपयोः॥सर्वोपरणानांमरणपानांचिन्हार्थंयोषितांनृणाम्॥का
व्यानांचकवीनांचपश्वादीनांचसर्वशः॥राजप्रसादवास्तूनांनामकर्मविशिष्यते॥नाक्ष
त्रमपिनामकार्यं॥अभिवादनीयंचसमीक्षित॥तन्मातापितरौविद्यानामोपनयनादिमा
लापनोक्तेः॥कुलदेवतामासनक्षत्रसंबद्धंपितानामकुर्यादितिमदनरत्नेशंखोक्तेश्च॥त

च्चनक्षत्रपादाक्षराद्यक्षरं कुर्यादित्युक्तं परिशिष्टे॥ तदक्षरादिकं नामयस्मिन्धिष्ण्येप
दक्षरमिति॥ सुदर्शनभाष्येतु॥ रौरेमभूज्जेविषुवृद्धिरादौढांत्येचवांत्यश्रवणास्वपुष्यु॥ शेषेषुनाऽऽ
द्योःकपरःस्वरोंत्यःस्याद्योरदीर्घःसविसर्गइष्टइत्युक्तम्॥ ढांत्यइति॥ प्रोष्ठपदेन्त्यादौढान्त्येचवृद्धिःप्रो
ष्ठपादइति॥ अन्त्यमपभरणीशब्दःस्मृतावुक्तः॥ तत्रश्रवणादौचवादिर्वृद्धिः॥ अपभरणःआपभ
रणाइत्यादि॥ मदनरत्नेवसिष्ठः॥० जन्माहेद्वादशाहेवादशाहेवाविशेषतः॥ उ
त्तरेरेवतीहस्तमूलपुष्यासवारुणे॥ श्रवणादितिमैत्रंचस्वातीमृगशिरस्तथा॥ प्राजापत्यंधनि
ष्ठाचप्रशस्तानामकर्मणि॥० अथखट्वारोहः॥ पारिजातेबृहस्पतिः॥ खट्वारोहस्तोक
स्त्रयोदशमेद्वादशेपिवा॥ षोडशेदिवसेवापिद्वाविंशेदिवसेपिवा॥ ज्योतिर्निबंधे॥
करत्रयेवैष्णवरेवतीषुदितिद्वयेचाश्विनकध्रुवेषु॥ कुर्याच्छिशूनांनृपतेश्चतद्वदांदोलनंवैसुखि
नोभवंति॥ तत्रैव॥ आंदोलाशयनेपुंसांद्वादशोदिवसःशुभः॥ त्रयोदशस्तुकन्यायानक्षत्रवि
चारणा॥ अन्यस्मिन्दिवसेचेत्स्यान्निर्णयस्तस्यप्रशस्यते॥ अथदुग्धपानं॥
नृसिंहः॥ एकत्रिंशद्दिनेचैवपयःशंखेनपाययेत्॥ अन्नप्राशननक्षत्रदिवसोदयराशिषु॥ ८
अथकर्णवेधः॥ मदनरत्नेवसिष्ठश्रीधरौ॥ मासेषष्ठेसप्तमेवाष्टमेवा॥ वे
धःकर्णेद्वादशेषोडशेन्हि॥ मध्येनान्हःपूर्वभागेनरात्रौनक्षत्रेदृष्टेतिथीवर्जयित्वा॥ अत्रज ९
न्ममासोवर्ज्यः॥ ज्योतिर्निबंधेगर्गः॥ मासेषष्ठेसप्तमेवाप्यष्टमेमासिवत्सरे॥
कर्णवेधंप्रशंसंतिपुष्ट्यायुःश्रीविवृद्धये॥ मदनरत्ने॥ प्रथमेसप्तमेमासिअष्टमेदशमेथवा॥ द्वा
दशेचतथाकुर्यात्कर्णवेधंशुभावहं॥ हेमाद्रौव्यासः॥ कार्त्तिकेपौषमासेवाचैत्रेवाफाल्गुनेथ
वा॥ कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने॥ श्रीधरः॥ हरिहरकरचित्रासौम्ययोःपौष्णरा
र्क्षादितिवसुषुघटालीसिंहवर्ज्येषुलग्ने॥ शशिगुरुबुधकाव्यानांदिनेपर्वरिक्तारहिततिथिषुशु
द्धेनैधनेकर्णवेधः॥ मदनरत्नेबृहस्पतिः॥ द्वितीयादशमीषष्ठीसप्तमी
चत्रयोदशी॥ द्वादशीपंचमीशस्तातृतीयाकर्णवेधने॥ सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः॥
शूद्रस्यचायसीसूचिर्मध्यमाष्टांगुलात्मिका॥ हेमाद्रौदेवलः॥ कर्णरंध्रेरवेश्छायानविशेदग्र
जन्मनः॥ तंदृष्ट्वाविलयंयांतिपुण्यौघाश्चपुरातनाः॥ शंखः॥ अंगुष्ठमात्रसुषिरौकर्णौनभवतो
यदि॥ तस्मैश्राद्धंनदातव्यंदत्तंचेदासुरंभवेत्॥ अथतांबूलभक्षणं॥ चंडेश्वरः॥
सार्द्धमासद्वयेदद्यात्तांबूलंप्रथमंशिशोः॥ कर्पूरादिकसंमिश्रंविलासायहितायच॥ मूलार्क१०
चित्रकरतिष्यहरींद्रभेषुपौष्णेसयाम्यमृगशिरोदितिवासरेषु॥ अर्केंदुजीवभृगुबोधनवासरेषु
तांबूलभक्षणविधिर्मुनिभिःप्रदिष्टः॥ अथनिष्क्रमणम्॥ ज्योतिर्निबंधेयमः॥
तृतीयेपिचतुर्थेवामासिनिष्क्रमणंभवेत्॥ यमः॥ ततस्तृतीयेकर्तव्यंमासिसूर्यस्यदर्शनं॥
चतुर्थेमासिकर्त्तव्यंशिशोश्चंद्रस्यदर्शनं॥ अत्रसूर्येंद्वोःकर्मणीयेचतयोःश्राद्धंनविद्यतेइति
छंदोगपरिशिष्टात्॥ छंदोगानांनिष्क्रमणेवृद्धिश्राद्धंनास्तीतिकल्पतरुः॥ व्यासः॥ मैत्रेपुष्य
पुनर्वसुप्रथमभेपौष्णेनुकूलेविधौ॥ हस्तेचैवसुरेश्वरेचमृगभेताराप्रशस्तासुचकुर्यान्नि

ानंकथंपुत्रस्तुकारयेत्॥अग्निहोत्रेधिकारोस्तिशंखस्यवचनंयथेति॥ कृतमित्यर्थः॥एत
ज्ञायामेवेतिहेमाद्रिः॥यत्तुपितुःसत्यप्यनुज्ञानेनाद्धीतकदाचनेति॥तत्स्त्यधिकारेज्ञेय
॥० अथशूद्रस्यसंस्कारः॥यमः॥शूद्रोप्येवंविधःकार्य्योविनामंत्रेणसंस्कृतः॥न
केनचित्समसृजच्छंदसातंप्रजापतिः॥छंदसामंत्रेण॥व्यासोपि॥गर्भाधानंपुंसवनंसीमं
ोजातकर्मच॥नामक्रियानिष्क्रमोन्नप्राशनंवपनक्रिया॥कर्णवेधोव्रतादेशोवेदारंभःक्रि
ाविधिः॥केशांतःस्नानमुद्वाहोविवाहाग्निपरिग्रहः॥त्रेताग्निसंग्रहश्चैवसंस्काराःषोडशस्मृताःइत्युक्त्वा
॥नवैताःकर्णवेधांतामंत्रवर्ज्जंक्रियाःस्त्रियाः॥विवाहोमंत्रतस्तस्याःशूद्रस्यामंत्रतोदशेति॥ म
दनरत्नेहिरण्यगर्भदानेतु॥गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा॥कुर्युर्हिरण्यगर्भस्यततस्तेद्विज
पुंगवइत्युक्त्वा॥जातकर्मादिकाःकुर्य्यात् क्रियाःषोडशचापरा॥इत्यत्रस्त्रियाजातकर्मनामकर
णनिष्क्रामान्नप्राशनचूडाविवाहाःषट्॥शूद्राणांतुषडेतेपंचमहायज्ञाश्चेत्येकादशेत्युक्तं॥रूपना
रायणहरिहरभाष्ययोरेवम्॥शार्ङ्गधरस्तु॥द्विजानांषोडशैवस्युःशूद्राणांद्वादशैवतु॥पंचैवमिश्र
जातीनांसंस्कारानाममंत्रतइत्याहअपरार्कस्तु॥गर्भाधानमृतौपुंसइत्यत्राह॥ एतच्चातुर्व
र्ण्यपरम्॥ नद्विजातिमात्रपरं॥ तथासत्युपनयनंविधायवाच्यंस्यादिति॥ते
नतन्मतेऽष्टौभवंति॥ब्राह्मेतु॥विवाहमात्रसंस्कारंशूद्रोपिलभतांसदेत्युक्तम्॥अत्रसदसच्छूद्र
गोचरत्वेनदेशभेदाद्वाव्यवस्था॥ यत्तुमनुः॥ नशूद्रेपातकंकिंचिन्नचसंस्कारम
र्हतीतितदर्थमाहमेधातिथिः॥यत्सामान्यतोनिषिद्धंस्तेयानृतादिनतदतिक्रमेऽस्यपापंयथाद्वि
जानाम्॥उपनयनरूपंसंस्कारंचनार्हतीतितेचतूष्णींकार्य्याः॥शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्ध
र्ममर्हति॥वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः॥अमंत्रस्यतुशूद्रस्यविप्रोमंत्रे
णगृह्यतेइतिमरीच्युक्तेश्च॥इयंपरिभाषासर्वार्था॥तेनशूद्रधर्मेषुसर्वत्रविप्रेणमं त्रःप
ठनीयःसोपिपौराणएवेतिशूलपाणिः॥एवंस्त्रीणामपीतिदिक् ॥ ० ॥ ० ॥ ० ॥ ० ॥

इतिरामकृष्णभट्टात्मजकमलाकर
भट्टकृतेनिर्णयसिंधौसंस्कारनिर्णयः

अथक्षुद्रकालाः ॥ ० ॥

तत्रजलाशयस्य॥वराहः॥हस्तोमघानुराधापुष्यधनिष्ठोत्तराणिरोहिण्यः॥शतभिषगित्यारंभे
कूपानांशस्यतेभगणः हेमाद्रौभविष्ये॥तस्मिन्सलिलसंपूर्णेकार्त्तिकेतुविशेषतः॥मुनयःके
चिदिच्छंतिव्यतीतेचोत्तरायणे॥नकालनियमस्तत्रसलिलंतत्रकारणंदीपिकायां॥मार्त्तंडेंद्
दुक्षुद्रोमुरजिदशयनेमाघषट्कस्यशुक्लेमूलाषाढोत्तराश्विश्रवणगुरुकरेपौष्णशाक्राजचंद्रे॥
मैत्रेब्राह्मेचहर्णामदनरवितिथौ१२सद्वितीयातृतीये॥कार्य्यातोयःप्रतिष्ठाज्ञगुरुसितदिनेका
लशुद्धेसुलग्ने॥वराहः॥आग्नेयेयदिकोणेग्रामस्यपुरस्यवाभवतिकूपः॥नित्यंसकरोतिभयं
दाहंचसमानसंतापं॥नैर्ऋत्येबालभयंवनिताक्षयंचवायव्ये॥दिक्त्रयमेतत्त्यक्त्वाशेषासुशुभा
वहाःकूपाः॥वास्तुशास्त्रे॥भूतिंपुष्टिंपुत्रहानिंपुरंध्रीनाशंमृत्युंसंपदंशत्रुबाधां॥किंचित्सौ

खंशंभुकोणादिकुर्यात्कूपोमध्येगेहमर्थक्षयंच॥उत्सर्गविधिश्चोक्तोवह्वृचपरिशिष्टे॥ अ
थातोवापीकूपतडागयज्ञंव्याख्यास्यामः॥पुण्येनक्षत्रेउदकसमीपेऽग्निंसमाधायवारुणंचरुंश्रपयि
त्वायामीतियंच॥त्वन्नोअग्नइतिद्वेइमंमेवरुणेतिच॥स्विष्टकृतन्तंव्वमंमार्जनान्तेधेनुंतारयेत्॥
मनुमंत्रयेदिदंसलिलंपवित्रंकुरुष्वशुद्धाःशताश्चशृताःसंतुनित्यम्॥मांतारयंतीकुरुतीर्थाऽ
भिषेकंलोकाल्लोकंतरतेतीर्यतेचेतिपुच्छाग्रेत्वारस्यउत्तीर्यापोऽन्यस्मानित्यथापराजितायांदिशु
त्थापयेत्॥सूयवसाभ्दवतीतिहिंकृतत्र्येदिंकृणावतीत्यलंकृतांविप्रायदद्यादितरांवाशक्त्यादक्षि
णांततउत्सृजेदेवपितृमनुष्याःप्रीयंतामिति॥ब्राह्मणान्भोजयित्वास्वस्त्ययनंवाचयीत॥विस्तर
स्तुमात्स्योक्तोऽसमत्कृतेजलाशयोत्सर्गविधौज्ञेयः॥कूपादेरुत्सर्गाकरणेदोषउक्तोभविष्ये॥सद्राज
लंपवित्रंस्यादपवित्रमसंस्कृतं॥कुशाग्रेणापिराजेंद्रनस्प्रष्टव्यमसंस्कृतं॥तथावापीकूपतडाग
दीपंजलंस्यादसंस्कृतं॥अपेयंतद्भवेत्सर्वंपीत्वाचांद्रायणंचरेत्॥ अथवृक्षारोपण
म्॥चंडेश्वरः॥ आदित्यचांद्रपितृतिष्यविशाखपौष्णमूलोत्तरात्रयतुरंगमवारुणाख्ये
षुतारकगणेषुनहितंनराणांवृक्षादिरोपणमिहोयदिशंतिधीराः॥ अथमूर्तिप्रति
ष्ठा॥वसिष्ठः॥ हस्तत्रयेमित्रहरित्रयेचपौष्णद्वयादित्यसुरेज्यभेषु॥निर्दोषतारावृश
शांकभेषुसर्वामरस्थापनमुत्तमंस्यात्॥मात्स्ये॥चैत्रेवाफाल्गुनेवापिज्येष्ठेवामाधवेतथा॥माघे
वासर्वदेवानांप्रतिष्ठाशुभदाभवेत्॥ नारदस्तुचैत्रंनिषेधति॥ विचैत्रेष्वेव
[illegible] अथ[illegible]प्रतिष्ठाय
[illegible]
[illegible]॥ [illegible]
यांधनप्रदा॥चतुर्थ्यांनाशमाप्नोतियमस्यस्यात्सुखावहा॥विनायकस्यदेवस्यतथातत्रहितप्र
दा॥पंचम्यांश्रीयुताकर्तुर्वरदाचतथाभवेत्॥षष्ठ्यांलक्ष्मीयुतानित्यंसप्तम्यांरोगनाशिनी॥अ
ष्टम्यांधान्यबहुलानवम्यांचविनश्यति॥भद्रकाल्याःकृतानत्रकर्तुर्भवतितुष्टये॥धर्मवृद्धिकरी
ज्ञेयादशम्यांतुतथातिथौ॥एकादश्यांतथाप्रोक्ताद्वादश्यांसर्वकामदा॥त्रयोदश्यांतथाज्ञेया॥
चतुर्दश्यांविनश्यति॥कृष्णपक्षेयंचदश्यांकर्तुःक्षयकरीभवेत्॥पंचदश्यांतथाप्रोक्तासर्वका
मकरीभवेत्॥ मात्स्ये॥ आषाढेद्वेतथामूलमुत्तरात्रयमेवच॥ज्येष्ठाश्रवणरो
हिण्यःपूर्वाभाद्रपदातथा॥हस्ताश्विनीरेवतीचपुष्योमृगशिरस्तथा॥अनुराधातथास्वाती
प्रतिष्ठासुप्रशस्यते॥ श्रीपतिः॥ रोहिणयुत्तरपौष्णवैष्णवकरादित्याश्विनीवास
वानुराधेंद्रवजीवभेषुगदितंविष्णोःप्रतिष्ठापनं॥पुष्यस्त्वभिजित्सुरेश्वरकयोर्वित्ताधिपस्य
स्कंदस्योभैत्रेतिग्मरुचेःकरेनिर्ऋतिभेदुर्गादिकानांशुभम्॥गणपरिवृढरक्षोयक्षभूतासुरा
णां अयमफणिसरस्वत्यादिकानांचपौष्णेश्रवसिसुगतनाम्नोवासवेलोकपानांनिगदित
मखिलानांस्थापनंचस्थिरेषु॥तेजस्विनीक्षेमकृदग्निदाहविधायिनीस्याद्वरदादृढाच॥आनं
दकृत्कल्पविनाशिनीचसूर्यादिवारेषुभवेत्प्रतिष्ठा॥ माधवीयेवैखानसः॥ मा

भैरववाराहनरसिंहत्रिविक्रमाः॥ महिषासुरहंत्र्यश्वस्थाप्यावैदक्षिणायने॥ वैशब्दोप्यर्थे लिंग
प्रतिष्ठायांविशेषः॥ हेमाद्रौलक्षणसमुच्चये॥ उत्तरायणगतेभानौलिंगस्थापन
मुत्तमं॥ दक्षिणेत्वयनेपूजात्रिवर्षार्द्धेभयावहं॥ स्वगृहेस्थापनंनेयं तस्मिन्हिदक्षिणायने॥ स्थाप
नंतुप्रकर्तव्यंशिशिरादावृतुत्रये॥ प्राप्तेपिस्थापितंलिंगंभवेद्दरदयोगदं॥ हेमंते॥ ज्ञानदंचैवग्री
ष्मस्यादयनेभुक्तिमीहतां॥ दक्षिणेतुमुमुक्षूणांमलमासेनसाद्वयोरितिशैवसिद्धांतशेखरे
तेमुक्तिकामाःशिशिरेगर्वभूतिदम्॥ लक्ष्मीप्रदंवसंतेचग्रीष्मेचजयशांतिदं॥ यतीनांसर्वकाले
चलिंगस्थारोपणंमतं॥ रत्नावल्यां॥ माघफाल्गुनवैशाखज्येष्ठाषाढेषुपंचसु
॥ मासेषुशुक्लपक्षेषुलिंगस्थापनमुत्तमं॥ विष्णुस्थाह तत्रैववैखानसः॥ मार्गशीर्षादिमासे
ष्वेतिदितोब्रह्मणापुरा॥ मासेषुफाल्गुनःश्रेष्ठश्चैत्रोवैशाखएवच॥ वृषेवाप्याश्वयुज्यासेश्राव
णेमासिवाभवेत्॥ बौधायनसूत्रेविष्णुप्रतिष्ठामुपक्रम्यद्वादश्यांश्रोणायांवायानिचान्यानिपु
ण्यनक्षत्राणीति॥ कृत्तिकादिविशाखांतेष्वित्यर्थः॥ सर्वदेवेषुमासविशेषोहेमाद्रौविष्णुधर्मे॥
माघेकर्तुर्विनाशायफाल्गुनेशुभदाभवेत्॥ लोकानंदकरीचैत्रेवैशाखेवरसंपुता॥ आज्ञायुता
सदाज्येष्ठेआषाढेधर्मवृद्धिदा॥ श्रावणेधनहीनास्यात्प्रौष्ठपादेविनश्यति॥ आश्विनेनाश
मायेतिवह्निनाकार्तिकेतथा॥ सौम्येसौभाग्यमतुलंपौषेपुष्टिरनुत्तमा॥ दोषान्वितधिमासे
स्यात्कर्तुरात्मनएवचेति॥ अत्रश्रावणाश्विनयोर्निषेधोमार्गशीर्षविधिश्चविष्णुव्यतिरिक्तवि
षयः॥ पूर्वोक्तवचनादितिहेमाद्रिः॥ माघश्रावणभाद्रपदनिषेधः॥ शिवव्यतिरिक्तविषयः॥
तत्रतत्रोक्तेः॥ देवीस्थापनेतत्रैवविशेषोदेवीपुराणे॥ देव्यामाघेश्विनेमासेउत्तमासर्वकाम
दातथा॥ नतिथिर्नचनक्षत्रंनोपवासोत्रकारणम्॥ सर्वकालंप्रकर्तव्यंकृष्णपक्षेविशेषतः
अन्यश्चात्रविचारोहेमाद्रौज्ञेयः॥ नारदः हंत्यर्थहीनाकर्तारंमंत्रहीनातुऋत्वि
जं॥ स्त्रियंलक्षणहीनातुनप्रतिष्ठासमोरिपुः॥ अत्राधिकारिणउक्ताः॥ कृत्यकल्प
तरौदेवीपुराणे॥ वर्णाश्रमविभेदेनदेवाःस्थाप्यास्तुनान्यथा॥ ब्रह्मातुब्राह्मणैःस्था
प्योगायत्रीसहितःप्रभुः॥ चतुर्वर्णैस्तथाविष्णुःप्रतिष्ठाप्यःसुखार्थिभिः॥ भैरवोपिचतुर्वर्णै
रंत्यजानांतथामतः॥ मातरःसर्वलोकेतुस्थाप्याःपूज्याःसुरोत्तमाः॥ लिंगंगृहीयतिर्वापिसं
स्थाप्यतुयजेत्सदा॥ शिवसर्वस्वेभविष्ये॥ यस्तुपूजयतेलिंगेदेवादिंमांजगत्पतिं॥ ब्राह्मणःक्ष
त्रियोवैश्यःशूद्रोवामत्परायणः॥ तस्यप्रीतःप्रदास्यामिशुभान्लोकाननुत्तमान्॥ तिथितत्वे
स्कांदे॥ शूद्रःकर्माणियोनित्यंस्त्रियानिकुरुतेप्रिये॥ तस्याहमर्चांगृह्णामिचंद्रखंडविभूषि
ते॥ ब्रह्मचारीगृहस्थोवावानप्रस्थश्चसुव्रते॥ एवंदिनेदिनेदेविपूजयेद्देविकापतिं॥ समासी
देवदेवेशंप्रणवेनैवपूजयेत्॥ नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते॥ एतच्चपुराणप्रसि
द्धलिंगपूजाविषयं॥ यानितुत्रिस्थलीसेतौ॥ नारदीये॥ यःशूद्रसंस्प
ष्टंलिंगंवाहरिमेववा॥ ससर्वयातनाभोगीयावदाचंद्रतारकं॥ पाखंडपूजितंलिंगंनत्वापाखं
डतांव्रजेत्॥ आभीरपूजितंलिंगंनत्वानरकमश्नुते॥ यःषड्भिःपूजितंलिंगंविष्णुंवापिनमेन्नुयः

श्रेष्ठमिहोच्यते॥ षट्पंचकचतुर्मानं मध्यमं त्रिविधं स्मृतं॥ त्रिद्व्येकांगुलमानं यत्त्रिविधं तत्कनी
यसं॥ एवं नवविधं प्रोक्तं चरलिंगं यथाक्रमं॥ अथ पंचसूत्रीनिर्णयः। गौतमीतंत्रे।
लिंगमस्तकविस्तारो लिंगोच्छ्रायसमो मतः। परिधिस्तत्त्रिगुणितं तद्वत्पीठं व्यवस्थितं। प्रनालि
का तथैव स्यात्पंचसूत्रविनिर्णयः॥ अत्रेदं तत्त्वं॥ लिंगमस्तकविस्तारं लिंगोच्चतासमं कृत्वा
तत्त्रिगुणसूत्रवेष्टनार्हलिंगस्थौल्यं कृत्वा तत्समं दृष्टं तं चतुरस्रं वा पीठविस्तारमधश्चोर्ध्वं च कुर्या
त्॥ पीठोच्चता तु लिंगोच्चतातो द्विगुणा। पीठमध्ये लिंगाद्द्विगुणस्थूलं पीठोच्चता॥ तृतीयांशे
न कंठं कृत्वा तस्योर्ध्वमधश्च समं वप्रद्वयं वा कृत्वा लिंगविस्तारमष्टांशेन पीठोपरि बाह्यमेख
लां कृत्वा तदंतः संलग्नं तत्समं खातं च कृत्वा पीठाद्बहिर्लिंगसमदीर्घां पीठार्द्धदीर्घां वा मूले दैर्घ्यसमविस्ता
रामग्रे तदर्द्धविस्तारां तृतीयांशेन मध्ये खातां पीठवत्समेखलां प्रणालिकां कुर्यादिति अत्र मूलं सिद्धांत
शेखरे शैवागमे च ज्ञेयं॥ तिथितत्त्वे ब्राह्मे॥ सर्वत्रैव प्रशस्तोऽजः शिवसूर्यार्चनं विना॥ तत्रैव वाराहपाद्मयोः॥
गृहे लिंगद्वयं नार्च्यं शालग्रामद्वयं तथा। द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्यद्वयं तथा॥ शक्तित्रयं तथा नार्च्यं
गणेशत्रयमेव च। द्वौ शंखौ नार्चयेच्चैव भग्नां च प्रतिमां तथा॥ नार्चयेच्च तथा मत्स्यकूर्मादिदशकं त
था॥ गृहे ग्निदग्धा भग्नाश्च नार्च्याः पूज्या वसुंधरे॥ एतासां पूजनान्नित्यमुद्वेगं प्राप्नुयाद्गृही॥ शालग्रा
माः समाः पूज्याः समेषु द्वितयं नहि॥ विषमा नैव पूज्यास्तु विषमेष्वेक एव हि॥ शालग्रामशिला भग्ना
पूजनीया सचक्रका॥ खंडिता स्फुटिता वापि शालग्रामशिला शुभा॥ वाराहे॥ दद्याद्भक्त्या यो देवि
शालग्रामशिलां नरः॥ सुवर्णसहितां दिव्यां पृथ्वीदानफलं लभेत्॥ तत्रैव॥ यः पुनः पूजयेद्भक्त्या शा
लग्रामशिलाशतं॥ तत्फलं नैव शक्तोहं वक्तुं वर्षशतैरपि॥ विष्णुपुराणे॥ ब्राह्मणक्षत्रियो वैश्यः
शूद्रश्च पृथिवीपते॥ स्वधर्मतत्परो विष्णुमाराधयति नान्यथा॥ अविभक्तानामपि पृथग्देवपूजामा
ह प्रयोगपारिजाते॥ आश्वलायनः॥ पृथग्घ्येकपाकानां ब्रह्मयज्ञो द्विजातिनां॥ अग्निहोत्रं सुरार्चा च
संध्या नित्यं भवेत्पृथक्॥ तत्रैव विष्णुधर्मे॥ शालग्रामशिलां वापि चक्रांकितशिलां तथा॥ ब्राह्मणः
पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत्॥ इदं स्पर्शसहितपूजाविषयं शूद्रो वानुपनीतो वा स्त्रियो वाप
तितोपि वा॥ केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते॥ ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छूपरस्त्रिगी॥
सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः॥ स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर॥ स्पर्श
ने नाधिकारोस्ति विष्णोर्वा शंकरस्य वेति स्कांदात्॥ स्पर्शरहिता तु तयोर्भवत्येव॥ शालग्रामं न स्पृ
शेत्तु हीनवर्णो वसुंधरे॥ स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः॥ मोहाद्यः संस्पृशेच्छूद्रो योषि
द्वापि कदाचन॥ स पतेन्नरके घोरे यावदाभूतसंप्लवं॥ यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुंधरे॥
दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः इति वाराहोक्तेः॥ शालग्राममात्रनिषेधो न प्रतिमादौ
॥ सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः॥ लिंगान्यपि तु पूज्यानि मणिभिः कल्पितानि चेति॥ तत्रै
वोक्तेः॥ चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः॥ वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभि
रिति स्कांदाच्च॥ अन्ये तु दीक्षितादीक्षितविषयत्वेन व्यवस्थामाहुः॥ विष्णुधर्मे॥ तयोरसंभवे
चार्चा वै सा चेह नवधा स्मृता॥ रत्नजा हेमजा चैव राजती ताम्रजा तथा॥ रैतिकी च तथा लोही शैलजा

द्रुमजातथा॥ अधमाधमाचविज्ञेयामृण्मयीप्रतिमाचया॥ एषांफलानितंत्रैवज्ञेयानि॥ तंत्रैवयामेण
लिंगमंप्रक्रम्य॥ तत्राप्यामलकीतुल्यासूक्ष्मासूक्ष्मैवयाभवेत्॥ यथायथाशिलासूक्ष्मातथास्यात्तुम
हत्फलं॥ तथा॥ यवमात्रंतुगर्त्तस्यायवार्द्धंलिंगमुच्यते॥ शिवनाभिरितिख्यातस्त्रिषुलोकेषुदुर्लभः॥
तंत्रैव॥ शालिग्राममयीमुद्रासंस्थितायत्रकुत्रचित्॥ वाराणस्यायवाधिक्यंसमंताद्योजनत्रयं॥ यो
मृतस्तत्समीपेतुमृतोवानीयतेतिकं॥ सर्वोमोक्षमवाप्नोतिसत्यंसत्यंनचान्यथा॥ तंत्रैव॥ चक्रांक
मिथुनंपूज्यंनैकंचक्रांकमर्चयेत्॥ चक्रांकमिथुनात्सार्द्धंसालग्रामंप्रपूजयेत्॥ तंत्रैववाराहे॥
म्लेच्छदेशेशुचौवापिचक्रांकोयत्रतिष्ठति॥ योजनानांतथात्रीणिममक्षेत्रंवसुंधरे॥ तंत्रैवशालग्रा
मंप्रक्रम्य॥ क्रयक्रीतापरिज्ञेयामध्यमायाचिताधमा॥ प्रयोगपारिजातेवाराहे॥ एवंलक्षणसंप
न्नापारंपर्यक्रमागता॥ उत्तमासातुविज्ञेयागुरुदत्तापितत्समा॥ अथपार्थिवपूजा
नंदिपुराणे॥ आयुष्मान्बलवान्श्रीमान्पुत्रवान्धनवान्सुखी॥ वरमिष्टंलभेल्लिंगं
पार्थिवंयःसमर्चयेत्॥ तस्मात्तुपार्थिवंलिंगंज्ञेयंसर्वार्थसाधकं॥ तंत्रैव॥ गोभूहिरण्यवस्त्रादिब
लिपुष्पनिवेदने॥ ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः॥ सर्वमंत्राधिकश्चायमोंकाराद्यःष
डक्षरः॥ भविष्ये॥ मूर्त्तयोष्टौशिवस्यैताःपूर्वादिक्रमयोगतः॥ आग्नेय्यंताःप्रपूज्यास्तुवेद्यांलिंगे
शिवंयजेत्॥ अत्रनप्राचीमग्रतःशंभोरितिरुद्रयामलेनिषेधान्नांतरालंगेशिवप्राचीकिंतुप्रसि
द्धैव॥ तिथितत्वेदेवीपुराणे॥ मृदाहरणसंघट्टप्रतिष्ठाह्वानमेवच॥ स्नपनंपूजनंचैवविसर्जन
मतःपरं॥ हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक्॥ शिवःपशुपतिश्चैवमहादेवइतिक्रमात्॥
स्कांदे॥ पुष्पाण्यपिचपत्राणिश्रीवृक्षस्यनिवेदयेत्॥ तंत्रैवभविष्ये॥ धूत्तूरकै
श्चयोलिंगंसकृत्पूजयतेनरः॥ सगोलक्षफलंप्राप्यशिवलोकेमहीपते॥ योगिनीतंत्रे शि
वागारेझल्लकंचसूर्यागारेचशंखकं॥ दुर्गागारेवंशवाद्यंमधुरींचनवादयेत्॥ आह्निकेमाधवीयेस्कां
दे॥ स्पृष्ट्वारुद्रस्यनिर्माल्यंसवासाआप्लुतःशुचिः॥ प्रयोगपारिजातेक्रियासारेमध्यमानामिका
मध्येपुष्पंसंगृह्यपूजयेत्॥ अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत्॥ अपनीतंचनिर्माल्यंचं
डेशायनिवेदयेत्॥ अशून्यमस्तकंलिंगंसदाकुर्वीतपूजकः॥ शूलपाणौलैंगे॥ वरंप्राणपरि
त्यागःशिरसोवापिकर्त्तनं॥ नत्वेवाऽपूज्यभुंजीतशिवलिंगेमहेश्वरं॥ सूतकेमृतकेचैवनत्याज्यं
शिवपूजनम्॥ तिथितत्वेलैंगे॥ विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया॥ पूजितोपिमहादेवो
नस्यात्तस्यफलप्रदः॥ तस्मान्मृदापिकर्त्तव्यंललाटेवैत्रिपुंड्रकं॥ रुद्राक्षधारणेविशेषश्चिवरह
स्ये॥ एकवक्त्रःशिवःसाक्षाद्ब्रह्महत्यांव्यपोहति॥ अवंध्यत्वप्रतिस्तोतोवन्हिस्तंभंकरोतिच॥ द्वि
वक्त्रोहरगौरीस्याद्गोवधाद्यघनाशकृत्॥ त्रिवक्त्रोह्यग्निजन्मायपापराशिंप्रणाशयेत्॥ चतुर्वक्त्रः
स्वयंब्रह्मनरहत्यांव्यपोहति॥ पंचवक्त्रस्तुकालाग्निरगम्याभक्ष्यपापनुत्॥ षड्वक्त्रस्तुगुहोज्ञेयो
भ्रूणहत्यादिनाशयेत्॥ सप्तवक्त्रस्त्वनंतःस्यात्स्वर्णस्तेयादिपापहृत्॥ विनायकोऽष्टवक्त्रःस्या
त्सर्वानृतविनाशकृत्॥ भैरवोनववक्त्रस्तुशिवसायुज्यकारकः॥ दशवक्त्रःस्मृतोविष्णुर्भूत
प्रेतभयापहः॥ एकादशमुखोरुद्रोनानायज्ञफलप्रदः॥ द्वादशास्यस्तथादित्यःसर्वरोगनि

वहेराः। त्रयोदशमुखः कामः सर्वकामफलप्रदः। चतुर्दशास्यः श्रीकंठो वंशोद्धारकरः परः॥ इति
तथा॥ विना मंत्रेण यो धत्ते रुद्राक्षं भुवि मानवः॥ स याति नरकान् घोरान् यावदिंद्राश्चतुर्दश॥ पंचामृ
ते पंचगव्ये स्नानकाले प्रयोजयेत्॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथा॥ त्र्यंबकादिमंत्रं च तथा
तत्र प्रयोजयेत्॥ यद्वा॥ ॐ अघोरे ॐ ह्रीं अघोरतर ॐ ह्रौं ह्रां नमस्ते रुद्ररूपे ह्रूं स्वाहा॥ अनेनाभिमंत्र्य
धारयेत्॥ तथा॥ अष्टोत्तरशतं कार्या चतुष्पंचाशदेव वा॥ सप्तविंशतिमाना वा ततो हीनाधमा स्मृता
प्रजापतिः॥ मोक्षार्थी पंचविंशत्या धनार्थी त्रिंशतं जपेत्॥ पुष्ट्यार्थी पंचविंशत्या पंचदश्याभिचार
के॥ सप्तविंशतिरुद्राक्षमालया देहसंस्थया॥ यत्करोति नरः पुण्यं सर्वं कोटिगुणं भवेत्॥ योद
दाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम्। तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रयच्छतीति॥ पदार्थादर्शे बोपदेवः
रुद्राक्षानुक्तं देशद्वादशैव॥ बाह्वोर्द्विदोः कलाभिर्नयनयुगकृते एकमेकं शिखायां॥ वक्षस्यष्टाधिकं यः क
लयति शतकं स स्वयं नीलकंठः॥ हेमाद्रौ शिवधर्मे॥ स्नानं पलशतं ज्ञेयमभ्यं
पंचविंशतिः॥ पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितं। पंचविंशत्पलं लिंगे त्वभ्यंगं कारयेद्बुधः॥ शिव
स्य सर्पिषा स्नानं प्रोक्तं पलशतेन च॥ तावता मधुना चैव दध्ना चैव ततः पुनः। तावतैव च क्षीरेण गव्येने
व भवेत्ततः। भूयः सार्द्धसहस्रेण पलानामैक्षवेन च॥ रसेन कारयेत्स्नानं भक्त्या चोष्णांबुना ततः॥ विष्णु
दौ तु स्कांदे॥ क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम्॥ घृताद्दशगुणं क्षौद्रं क्षौद्राच्चेक्षुरजं तथा॥ ब्राह्मे॥
देवानां प्रतिमा यत्र घृताभ्यंगं समापयेत्॥ पलानि तत्र देयानि श्रद्धया पंचविंशतिः॥ इदं क्रो
डीकृताभिप्रायेण॥ तत्रैव संग्रहे॥ विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकं॥ पादोदकं
प्रसादं च लिंगे चंडेश्वराय तु॥ पंचायतनसन्निवेशमाह बोपदेवः॥ पदार्थादर्शे च॥
शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरेभास्येनागसुतारवौ हरगणेशाजांबिकास्थापिताः॥ दे
व्यां विष्णुहरैकदंतरवयो लंबोदरे जेश्वरे नाम्याः शंकरभागतोतिसुखदा व्यस्तास्तु हानिप्रदाः॥ शं
करभागतः ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः॥ अत्र दिक्स्वरूपमुक्तं॥ प्रयोगपारिजाते मं
त्रशास्त्रे॥ देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत्॥ तदादि परिवाराणामंगावरणस्थितिः।
अत्र क्रमः॥ पाद्मे॥ रविर्विनायकश्चंडी ईशो विष्णुस्तु पंचमः॥ अनुक्रमेण पूज्यंते व्युत्क्रमे तु महद्
भयं तथा पूज्यपूजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः॥ अथ केशवादिमूर्तयः
बोपदेवपदार्थादर्शे॥ के बिगो वादा पुन्हु ये प्रजा ब्रुत्क म मा त्रिनाः॥ वाधौ नृ हसा निश्रीप शाब्जग
विगपे चपे॥ अत्र के विरत्याद्यैः केशवविष्ण्वादिचतुर्विंशतिमूर्तयोभिधीयंते॥ शाब्जखाब्जकगदेत्ये
रित्यर्थः॥ शिष्टो भुजे पद्मं त्वर्थतः सिद्धं॥ अत्र दक्षिणाधःकरक्रमेण ज्ञेयं॥ दक्षिणाधःकरक्रमादिति
हेमाद्रिवचनात्॥ तेन हेमाद्रिणा संवादः॥ विशब्देन विपरीते गचे इत्यर्थः॥ अत्रापि शादित्यनुवृत्तिः
। शंखात्मचक्रे इत्यर्थः॥ गपे इत्यत्रापि शादित्यनुवृत्तिः॥ शंखात्गदापद्मे इत्यर्थः॥ विपरीते पद्म
गदे। अत्रापि शंखादि ये चपे शंखाच्चक्रपद्मे इत्यर्थः॥ विरित्यत्रापि पद्मचक्रे इत्यर्थः॥ तेन गपे इत्यष्टौ मूर्तयः
चपे इत्यत्र च॥ अत्र मूलं हेमाद्रौ ज्ञेयम्॥ अथ बौधायनसूत्रे त्रैविक्रमीं चानुसृत्य लिंगा
र्चाप्रतिष्ठोच्यते॥ यजमानः स्वोक्तकाले स्ववयुःदशद्वादशषोडशान्यतरहस्तं॥ मंडपं कृत्वाग्नेये ह

त्नमात्रं चतुरस्रं कुंडं स्थंडिलं वाऽर्ध्वतो॥ हस्तमात्रां वेदीं नैर्ऋते वा सुमंडलमध्ये वेदीं तदुपरि सर्वतोभ-
द्रं च कृत्वा प्राणानायम्यास्यां मूर्तौ देवस्य सान्निध्यसिद्ध्यर्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसु-
खकामोऽमुकमूर्तिप्रतिष्ठां करिष्य इति॥ संकल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजननांदी
श्राद्धानि कृत्वाचार्यं चतुरो वर्त्विजश्च वृत्वा वस्त्राद्यैः पूजयेत्॥ अथाचार्यो यदत्र संस्थितमिति सर्ष-
पान् विकीर्यापो हिष्ठेति कुशोदकेन भूमिं प्रोक्ष्य देवा आयांतु यातुधाना अपयांतु विष्णो देवयजनं
रक्षस्वेति भूमौ प्रादेशं कृत्वा सम्यक् तत्तुल्यापद्गतिमार्गेण मंडपप्रतिष्ठां कृत्वा अग्रकृत्वा पूर्ववर्णत्रीहिर-
ण्योपधानं देवं पंचगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णैरापो हिष्ठेति तिसृभिर्हिरण्यवर्णा इति च-
तसृभिः पवमानः सुवर्जन इत्यनुवाकेनाभिषिच्य व्याहृतिभिश्चेदं विष्णुरिति पुष्पफलयवदूर्वाः
समर्प्य नमस्ते रुद्र मन्यव इति॥ रक्षोहणमिति हस्ते कंकणं बद्ध्वा वाससाच्छाद्य अवतेहेड उदुत्त-
ममिति जलेऽधिवासयेत्॥ इदं वो धाय नोक्तं॥ ततश्च लिंगेऽर्चायां वा त्वग्निं प्रतिष्ठाप्य गोक्षीरे नी-
वारचरुं कृत्वा आज्यभागांते पलाशोदुंबराश्वत्थशम्यपामार्गसमिद्भिराज्येन चरुणा तिलैर्वा
प्रत्येकमष्टाविंशतिमष्टौ वाहुतीर्लोकपालमूर्तिमूर्तिपतिभ्यो हुत्वा स्थाप्यदेवमंत्रेण पूर्वोक्त-
समित्तिलैर्वा सर्वाज्यैः सहस्रमष्टशतमष्टाविंशतिं वा हुत्वा अग्निर्यजुर्भिरित्यनुवाकेन दशाहु-
तीर्जुहुयात्॥ प्रतिद्रव्यं होमांते देवपादनाभिशिरः स्पृशेत्॥ आज्यहोमे चोत्तरतः सजलकुंभे संपातं नये-
त्॥ तेषां मंत्राः॥ इंद्राय स्वाहेति इंद्रस्य॥ स्योनेति पृथिवीमूर्तेः॥ अघोरेभ्य इति तत्पतेः शर्वस्य॥ अग्न
आयाहीत्यग्नेः॥ अग्निं दूतमित्यग्निमूर्तेः॥ नमः शर्वाय च पशुपतये चेति पशुपतेः॥ यमाय सोमं
यमस्य॥ असि हि वीरेति यजमानमूर्तेः स्तुहि श्रुतं तत्पतेरुग्रस्य॥ असुन्वंतमिति नैर्ऋतेः॥ आकृष्णे-
न॰ सूर्यमूर्तेः॥ यो रुद्रो अग्नौ इति तत्पते रुद्रस्य॥ इमं मे वरुण॰ शन्नो देवीः जलमूर्तेः॥ नमो भवायेति
भवस्य॥ आ नो नियुद्भिः॥ वायोः॥ वात आ वातु॥ वायुमूर्तेः॥ तमीशानमिति तत्पतेरीशानस्य॥ आप्याय-
स्व॥ कुबेरस्य॥ वयं सोम इति सोममूर्तेः॥ नमस्ताम्रायेति महादेवस्य॥ अभि त्वा ईशानस्य च निब-
लस्येमाकाशस्य॥ नमः उग्राय चेति तत्पतेर्भीमस्य॥ ततो देवस्य पादौ स्पृशेत्॥ एवं द्वितीये हुत्वा
नाभिं॥ तृतीये मध्यं॥ चतुर्थे उरः॥ पंचमे शिरः स्पृशेत्॥ प्रतिद्रव्यं होमांते जलेन देवमभिषिंचेत्
ततः [illegible] दिशो [illegible] समाप्यां नीशानमयेत्॥ स्थिरलिंग [illegible] देवानामदिस्थापनहोमा-
दि [illegible] ॥ [illegible] देवदेवेश [illegible] ॥ [illegible] ऋत्विक् कुंभः
[illegible] पुनराचार्यो ऽपुनराचा-
र्य। [illegible] समष्टशतमष्टा-
विंशतिं [illegible] ग तं कृत्वाथ
पृथिव्या मा वी पजानमिति च संस्थाप्य॥ आप्यायस्व दधिक्राव्णस्तेजोऽसि मधु वाता आयं गौ इति
चाष्टौ संस्थाप्य॥ लिंगं चेन्नमस्ते रुद्र मन्यव इत्यृग्भिः संस्थाप्य घृतेनाभ्यज्योद्वर्तनेन दूर्वाः स्नपयेत्
न प्रक्षाल्य गंधं दत्वा संपातोदकेनाभिषिंच्य सपल्लवैश्चतुर्भिः कुंभैरापो हिष्ठेति त्रिभिरेव कलशेष्विति
प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैः ष्विति प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैः ष्विति च मिति संप्रा

वञ्जोदुंबरादिपीठेऽर्चामुपवेश्य परितोऽष्टदिक्षु सजलकुंभान्संस्थाप्य गंधपुष्पदूर्वाः क्षिप्त्वा
ये सप्तमृदं। द्वितीये पुष्करपर्णी शमी विकंकताश्वत्थकत्वचः पल्लवांश्च। तृतीयादिषु सप्तधान्यं पं
चरत्नफलपुष्पाणि कुशदूर्वागोरोचनाः संपातोदकं सर्वौषधीः क्षिप्त्वा क्रमेणापो हि ष्ठेति त्रिभि
र्हिरण्यपेति चतुर्भिः पवमानानुवाकेन वाऽभिषिंच्यैककुंभे शमीपलाशवटखदिरबिल्वाश्वत्थ
विकंकतपनसाम्रशिरीषोदुंबराणां पल्लवान्कषायांश्च क्षिप्त्वाप्स्वन्तरित्यभिषिंच्य पंचरत्नो
दकेन हिरण्यवर्णा इति संस्थाप्य वाससी दत्वोपवीतादि दीपांतं कृत्वा॥ हिरण्यगर्भः॥ य आत्म
दाय प्राणतः यस्येमे येन द्यौः॥ यं क्रंदसी॥ आपो ह यत्॥ यश्चिदापो इत्यष्टौ पिष्टदीपान्दत्वा
सुवर्णशलाकया तेजस्पात्रस्थं मधुघृतं च गृहीत्वा॥ चित्रं देवानां तेजोऽसीति मंत्राभ्यां॥ ॐ न
मो भगवते तुभ्यं शिवाय हरये नमः॥ हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः इति च दक्षिणसव्ये दे
वनेत्रे मंत्रावृत्त्याऽऽलिखेत्। अंजनं त्विंजनेन मधुना वा। त्वा देवस्य त्वेति मध्वाज्यशर्कराभिरङ्क्त्वा ते
नैवांजनेन पुनरंजयेत्। अत्रानग्नीति शेषः॥ स्थिरलिंगे तु स्वर्णसूच्या गंधेन ॐ नमो भगवते
रुद्राय हिरण्यरेतसे परायपरमात्मने विश्वरूपायोमाप्रियाय नमः स्वाहेत्यंजनादि नांजयेत्। त
त आदर्शभक्ष्यादि दर्शयेत्॥ ततः कर्त्राचार्याय गामृत्विग्भ्यश्च दक्षिणां दद्यात्॥ अथाचार्यः
सत्वचमारोपणावंवदन्पुरुषसूक्तेन स्तुत्वा वंशपात्रे पंचवर्णोदमेन देवस्य नीराजनं कारयि
त्वा रुद्राय चतुष्पथादौ दद्यात्॥ मंत्रस्तु॥ ॐ नमो रुद्राय सर्वभूताधिपतये दीप्तशूलध
राय मादपिनाय विश्वाधिपतये रुद्राय वै नमो नमः॥ शिवमगर्हितकर्मास्तु स्वाहेति॥ अश्वत्थप
र्णे भूतेभ्यो नम इति॥ केचिदेतद्रात्रौ स्थिरप्रतिष्ठायामिच्छंति॥ अथाचार्यः सर्वतोभद्रे देवानावा
हयेत्॥ मध्ये ब्रह्माणं पूर्वादिदिक्षु रुद्रादिलोकपालान्॥ ईशानेंद्राद्यंतरालेषु वसून्रुद्रानादि
त्यानश्विनौ विश्वान्देवान्॥ पितॄन्नागान्स्कंदवृषौ॥ ब्रह्मेशानाद्यंतरालेषु दक्षविष्णु
दुर्गास्वधाकारं मृत्युरोगान् समुद्रान्सरितः मरुतः गणपतिं चेति॥ मध्ये एव पृथिवीं मेरुं संस्था
प्य देवं चावाह्य॥ प्रागादि॥ वज्रं शक्तिं दंडं खड्गं पाशं अंकुशं गदां शूलं॥ तद्बाह्ये गोतमं भरद्वाजं
विश्वामित्रं कश्यपं जमदग्निं वसिष्ठमत्रिमरुंधतीं च॥ तद्बाह्ये नवग्रहान्॥ तद्बाह्ये ऐन्द्रीं कौमारीं
ब्राह्मीं वाराहीं चामुंडां॥ वैष्णवीं माहेश्वरीं वैनायकीं इति॥ एतान्नामभिरावाह्य सं[illegible]ह्नीवारा
चीयान्दैवतमंत्रेण बाह्यमंडलं। मध्ये चार्यां सुप्रतिष्ठो भवेति निवेश्य॥ संपूज्य वह्निमंडलदे
वतानां नामभिस्तिलाज्येन दशदशाहुतीर्हुत्वा शय्यायां देवमारोप्य पुरुषसूक्तेन नारायणा
भ्यां स्तुत्वा देवे न्यासं कुर्यात्॥ यथा॥ पुरुषात्मने नमः॥ प्राणात्मने॰ प्रकृतितत्वाय॰ बुद्धित
त्वाय॰ अहंकारतत्वाय॰ मनस्तत्व॰ इति सर्वांगे॥ प्रकृतितं॰ बुद्धितं॰ हृदि॥ शब्दत॰ शिरसि॥ स्प
र्शतं॰ त्वचि॥ रूपतं॰ हृदि॥ एवं रसगंधश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूप
स्थपृथिव्यप्तेजोवाय्वाकाशसत्वरजस्तमो देहतत्वानि विन्यसेत्॥ ततः पुरुषसूक्ताद्यमृच
हृदयं करयोः॥ तदुत्तरं जानुनोः॥ तदुत्तरं कट्योः॥ तं यज्ञमिति तिसृः नाभिहृत्कंठेषु॥ तस्माद
श्वेति द्वयं बाह्वोः॥ ब्राह्मणोऽस्येति द्वयं नासयोः॥ नाभ्या इति द्वयमक्ष्णोः॥ अंत्यं शिरसि॥ केचित्तत्व

न्यासमन्यथाहुः॥ पुरुषप्रकृतिमहदहंकारतत्वानि॥ शब्दस्पर्शरूपरसगंधतन्मात्राणि॥ आ
काशवायुतेजोपृथिवीश्रोत्रत्वक्चक्षुरसनघ्राणवाक्पाणिपादपायूपस्थमनस्तत्वानी
ति॥ केचिदेतानि स्थिरलिंगादावेवेच्छंति॥ ततः सुखशायी भवेति शय्यायां देवं स्थापयित्वा मंडल
शय्ययोरंतरालेन गंतव्यमिति प्रैषं दत्वा मंडलदेवताभ्यो नामभिः पायसेन चरुणा वा बलीन्दद्यात्
॥ नीवारचरुशेषेण दिग्बलिं नेदं स्थिरप्रतिष्ठायां स्थिरलिंगादौ त्वयं विशेषः॥ अग्निस्थापनहोम
वर्जं सर्वं पूर्ववत्कृत्वा इदानीमग्निस्थापनं कृत्वा पूर्वोक्तहोमं कुर्यात्॥ नात्र नैवारश्चरुः॥ वि
ष्णुश्चेत्पूर्वोक्तहोमं कृत्वा॥ पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वेदं विष्णुरिति॥ पादौ स्पृष्ट्वा पुनस्तदेव हु
त्वा विष्णोर्नुकमिति नाभिं स्पृशेत्॥ पुनस्तदेव हुत्वा तद्देवेति शिरः स्पृष्ट्वा पुनस्तदेव हुत्वा पुरुष
सूक्तेन सर्वांगं स्पृशेत्॥ स्थिरलिंगं चेदग्निस्थापनादि पूर्वोक्तसमिदाज्यतिलाहुतीर्हुत्वा यातइ
षुरित्यनुवाकांते द्रापे सहस्राणीत्यनुवाकाभ्यां प्रत्यृचमाज्यं हुत्वा सर्वो वै रुद्र इति मूलं स्पृशेत्॥ पु
नस्तदेव हुत्वा सर्वो रुद्रेण सर्वांगं स्पृशेत्॥ तनीधामं तर इति पूर्णाहुतिं जुहुयान्न वा॥ एवमधिवा
सनं कृत्वा परेद्युः सद्यो वापीठिकां स्थापयित्वा महीमूषुमिमा वा सा इति थिपोरिति स्तुत्वा॥ हीन मस्ति
संपूज्य तेनैव पूर्णाहुतिं हुत्वा त्रिष्टुब्ब्राह्मणास्पतइति देवमुत्थाप्य पुष्पांजलिं दत्वा॥ पुरुषसूक्तेन स्तु
त्वा उत्तमित्युत्थाप्य॥ कनिक्रदिति सूक्तेन विष्णुं सद्योजातमिति पंचानुवाकैर्लिंगं गृहं प्रवेश्य पी
ठिकायां॥ इंद्रादिनामभिरक्षतानि क्षिप्त्वा सप्त धान्यरूप्य॥ रत्नानि शिलाः क्षिप्त्वा पायसेन सं
लिप्य प्रणवेनागमासंस्कृत्वा सुवर्णशलाकां मंतरितां कृत्वा ॐ सुलग्ने प्रतितिष्ठ परमेश्वरे सु
न्नाऽनो देवेति विष्णुं रुद्रेण च लिंगं स्थापयेत्॥ ततः प्राणप्रतिष्ठा॥ चलार्चादौ त्वधिवासनांते प
रेद्युरुत्तिष्ठ ब्रह्मणस्पतइति देवमुत्थाप्य॥ पुरुषसूक्तेन नारायणाभ्यां स्तुत्वा घृतेन ब्रीहिचरुं
कृत्वा तद्देवतामंत्रेण दशाहुतीर्हुत्वा नामभिर्जुहुयात् अग्नये स्वाहा॰ सोमाय॰ धन्वंतरये॰ कु
ह्वै॰ अनुमत्यै॰ प्रजापतये॰ परमेष्ठिने॰ ब्रह्मणे॰ अग्नये॰ सोमाय॰ अग्निपिनाकाय॰ अग्नये प
त्नयपतये॰ प्रजापतये॰ विश्वेभ्यो देवेभ्यः सर्वेभ्यो देवेभ्यः॥ भूर्भुवः स्वः अग्नये स्विष्टकृत इति॥ त
तः सप्त ते पुनस्त्विमाभ्यां पूर्णाहुतिः॥ ततः आचार्यो या औषधीरिति सर्वौषधीः समर्प्य संपा
तोदकं देवमंत्रेण शतवारमभिमंत्र्य तेनैवाभिषिंचेत्॥ ततउत्तिष्ठेति देवमुत्थाप्य विष्वतश्चक्षु
रित्युपस्थाय देवं ध्यात्वा जयेत्॥ ब्रह्मणे नमः॥ एवं विष्णवे रुद्राय इंद्रादीनष्टौ॥ वसुभ्यो रुद्र
भ्य आदित्येभ्योऽश्विभ्यां मरुद्भ्यः कुबेराय गंगादिमहानदीभ्यो भीमोमाभ्यामिंद्राग्निभ्यां धाता
पृथिवीभ्यां धन्वंतरये सर्वौषधाय विश्वेभ्यो देवेभ्यो ब्रह्मण इति॥ ततः संपातीरकेन यजमानम
भिषिच्य देवं ध्यात्वा॥ प्रतितिष्ठ परमेश्वरेति पुष्पांजलिं निवेद्य सच्चिदानंदं भक्तवत्सलं भक्तानुग्र
हाय गृहीतविग्रहं करचरणादयवयवविन्नं शंखचक्राद्यायुधवंतं निजवाहनायुधैर्निजहृत्क
मले स्थितं सर्वलोकसाक्षिणममरीयांसं परमेश्वरं सिपरमां श्रियं गमयेति॥ मंत्रेण पुष्पांज
लाववागतं विभाव्यार्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात्॥ यथा॥ प्राणप्रतिष्ठामंत्रस्य ब्रह्मवि
ष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छंदांसि॥ क्रियामयवपुः प्राणाख्या देवता आं बीजं क्रों

शक्तिःप्राणप्रतिष्ठायांविनियोगः॥ततोऋष्यादीन्क्रमेणशिरोमुखहृदयगुह्यपादेषुविन्यस्यओं
कंखंगंघंङंअंपृथिव्यप्तेजोवाय्वाकाशात्मनेआंहृदयायनमः॥ॐ चंछंजंझंञंइंशब्दस्पर्शरूप
रसगंधात्मनेईंशिरसेस्वाहा॥ॐटंठंडंढंणंउंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवष
ट्॥ॐतंथंदंधंनंएंवाक्पाणिपाद यायूपस्थात्मनेऐंकवचायहुं ॐ पंफंबंभंमंओंवचना
दानविहरणोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट्॥ॐयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकार
चित्तात्मनेअःअस्त्रायफट्॥एवंआत्मनिदेवेचकृत्वादेवंस्थाप्यजेत्॥ॐ आंह्रींक्रोंयंरंलंवंशं
षंसंहंसःदेवस्यप्राणाइहप्राणाः॥ॐहंसःदेवस्यजीवइहस्थितः॥ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंसः
देवस्यसर्वेंद्रियाणि॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइ
हागत्यसुखंचिरंतिष्ठंतुस्वाहेति॥ततोवीहृदयंगुष्ठंदत्वाजपेत्॥अस्यैप्राणाःप्रति
ष्ठंतुअस्यैप्राणाःक्षरंतुच॥अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेति॥ततःप्रणवेनसंरुध्यस
जीवंध्यात्वाअक्षिवाधौरितिऋचंजप्त्वाकरौगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपाद
नाभिशिरःसुसृष्ट्वाइहैवैधीतितिसृभिर्जपेत्॥ततःकर्त्तास्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः॥प्राकृतं
त्वमदृष्ट्वामांबालवत्परिपालय॥धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशुभायनः॥सान्निध्यंतुसदादेव
स्वार्चायांपरिकल्पय॥यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः॥तावत्त्वयात्रदेवेशस्थेयंभक्तानु
कंपया॥भगवन्देवदेवेशत्वंपितासर्वदेहिनां॥येनरूपेणभगवंस्त्वयाव्याप्तंचराचरं॥तेनरू
पेणदेवेशस्वार्चायांसंनिधौभवेतिनमेत्॥एतदंतंसर्वदेवानांसमानं॥देवमंत्रश्चमूलमंत्रोवैदि
कोवाग्राह्यः॥अथाचार्यःकर्त्तावालिंगमर्चांवा॥ॐभूःपुरुषमावाहयामि॥ॐभुवः॥ॐस्वः॥ॐ
भूर्भुवःस्वःपुरुषमावाहयामीत्यावाह्यप्रणवेनासनंदत्वातेनैवदूर्वाश्यामाकविष्णुक्रांतापद्मभि
श्चपाद्यं॥इमाआपःशिवतमाःइताःइततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्ताजु
षंतुप्रतिगृह्यंतांप्रतिगृह्णातुभगवान्महाविष्णुर्विष्णवेनमइतिपाद्यं॥भगवान्महादेवोरुद्राय
नमःइतिलिंगे॥इमाआपः० आचमनीयाः॥ताजुषंतामितिएलालवंगकंकोलकर्पूरमिश्र
माचमनीयं॥आपःक्षीरकुशाग्रेश्चाक्षतैर्यववंतंडुलैः॥यवैःसिद्धार्थकैश्चैव॥अर्घ्यइत्यर्घ्यं॥
ततोवेदमंत्रैःप्रणवेनचरत्नांबुकलशेनस्नाप्येदंविष्णुरितिविष्णौनमोऽस्तुनीलग्रीवाये
तिलिंगेप्रतिसरंविसृज्यदेवंनत्वा॥इमेगंधाःशुभादिव्याःसर्वगंधैरलंकृताः॥पूताब्रह्मपवि
त्रेणपूताःसूर्यस्यरश्मिभिः॥पूताइमादिशःसर्वेवत्॥इतिगंधं॥इमेमाल्याःशुभादिव्याःसर्वमा
ल्यैरलंकृताः॥पूता० माल्यंइमेपुष्पाइतिपुष्पं॥वनस्पतिरसोधूपोगंधाढ्योधूपउत्तमः॥आ
घ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां॥प्रतिगृह्यतांप्रतिगृह्णात्वित्यादि॥धूपं॥ज्योतिःशुक्रंचते
जश्चदेवानांसततंप्रियः॥प्रभाकरःसर्वभूतानांदीपोयंप्रतिगृह्यतांइतिदीपंदत्वाविष्णौ॥संक
र्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्दनोपेंद्रहरिकृष्णेतिद्वादश
नामभिःकेशवादिद्वादशनामभिर्वापुष्पाणिसमर्प्यतैरेवतर्पणंकृत्वापायसघृताप्लुतश्री
शर्करापूपतःगुडौदनहरिद्रौदनानियथाविभवंतैर्विततमितिनिवेद्यकृशरमाज्यमिश्रंजुहुयात्॥वा

सुदेवायस्वाहा॥संकर्षणाय॰प्रद्युम्नाय॰अनिरुद्धाय॰शांत्यै॰श्रियै॰सरस्वत्यै॰पुष्ट्यै॰विश्वरवेइति
हुत्वाविष्णोर्नुकम्॥तदस्यप्रियं॥प्रतद्विष्णुः॥परोमात्रया॥विचक्रमे॥त्रिर्देवइतिद्वादशनामभिश्च
अमुष्मैस्वाहेतिजुहुयात्॥लिंगेतुदीपांतंकृत्वाभवायदेवायशर्वायईशाय॥पशुपतये॰रुद्रा
य॰उग्राय॰भीमाय॰महतेदेवाय॰नमइतिपुष्पाणिदत्वानैवेद्यांतंकृत्वापवित्रेतोदनंपा
यसंगुडौदनंचनिवेद्यपूर्वोक्तनामभिःकृशरंहुत्वाभवस्यदेवस्यपत्न्यैस्वाहाइत्याद्यष्टभिर्गु
डौदनंहुत्वाभवस्यदेवसुतायस्वाहेत्यादिभिर्हरिद्रौदनंहुत्वात्र्यंबकंमानोमहांतंमानस्तोकेश्वा
रात्रेगोघ्नंविकिरिदविलोहितसहस्राणिसहस्रशइतिपंचर्चैर्हुत्वाशिवायशंकरायसहमा
नायशितिकंठायकपर्दिने॥ताम्राय॰अरुणाय॰अपगुर्मणाय॰हिरण्यबाहवे॰सस्पिं
जराय॰बभ्लुशाय॰हिरण्यायेतिचजुहुयात्॥ततःस्विष्टकृदादिशेषंसमाप्यपूर्वोक्तसर्व
हविर्भिर्विष्वक्सेनायबलिंदद्यात्॥मंत्रस्तुत्वामेकमाद्यंपुरुषंपुरातनंनारायणंविसृ
जयजामहे॥त्वमेवयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृह्णीष्वहव्यमिति॥लिंगेतु
नारायणायेत्यत्ररुद्रंशिवमितिवदेत्॥ततोऽस्त्यपर्णोसुभूर्भुवःस्वरोमितित्रिश्चतुर्वाहुतंशे
षंनिधायअग्निनासहप्रदक्षिणीकृत्यविश्वभुजेसर्वभुजेआत्मनेपरमात्मनेनमः॥इतिन
त्वाअंगुलीयंकुंडलद्वयंवस्त्रयुग्मेनाचार्यंपूजयित्वा॥आचार्यायशतंतदर्धंतदर्धंद्वादश
तिस्रएकांवागांदत्वाऋत्विग्भ्योपिदक्षिणांदत्वाशतंद्वादशवाविप्रान्भोजयेदितिसंक्षे
पः॥प्रासादमात्रेतूतनेतुमात्स्योक्तजलाशयप्रतिष्ठाविधिमेवकुर्यात्॥गोरुत्तारणापा
त्रीप्रक्षेपादितुनभवतिद्वारलोपात्॥वारुणहोमस्थानेवास्तुहोमः॥अन्यत्तद्वत्॥०

इतिकमलाकरभट्टकृतेलिंगा
र्चाप्रतिष्ठाविधिः॥अथपुनः
प्रतिष्ठा॥०

नामधिकृत्यहयशीर्षपंचरात्रेचांडालमद्यसंस्पर्शदूषितावन्हिनाथवा॥अपुण्यजनसं(
स्पृष्टाविप्रक्षत्रजदूषिता॥संस्कार्येतिशेषः॥पदार्थादर्शेब्राह्मे॥खंडितेस्फुटितेदग्धेभ्र(
ष्टेमानविवर्जिते॥यागहीनेपशुस्पृष्टेपतितेदुष्टभूमिषु॥अन्यमंत्रार्चितेचैवपतितस्पृ
र्शदूषिते॥यागहीनेपशुस्पृष्टेपतितेदुष्टभूमिषु॥अन्यमंत्रार्चितेचैवपतितस्पर्शदूषिते
दशस्वेतेषुनोचक्रुःसन्निधानंदिवौकसः॥यागःपूजा॥पशुर्गर्दभादिः॥पंचरात्रे॥खंडि
तास्फुटितादग्धायस्मादर्चाभयावहा॥तस्मात्समुद्धरेत्तांतुपूर्वोक्तविधिनानरः॥अर्चा
भंगादावुपवासःकार्यः॥नराज्ञोविषयेश्रीयात्सुरार्चाविप्लवेतथेति॥विष्णुधर्मोक्तेः॥सि
द्धांतशेखरे॥चौरचांडालपतितश्वोदक्याःस्पर्शनेसति॥शिवाद्युपहतौचैवप्रतिष्ठांपुनरा
चरेत्॥पंचरात्रे॥अंगादंगादिसंधानेप्रतिष्ठांपुनराचरेत्॥जलाधिवासविहितनेत्रोन्मी
लनवर्जिताम्॥शुद्धिविवेकेविष्णुः॥द्रव्यवत्कृतशौचानांदेवतार्चानांभूयःप्रतिष्ठापनेनशु
द्धिरिति॥अर्चाःप्रतिमाः॥तद्द्रव्यस्यताम्रादेरुक्तवत्॥शौचंकृत्वापुनःप्रतिष्ठांकुर्यादित्य

त्यर्थः॥स्मृत्यर्थसारेप्येवम्॥तद्विधिर्बौधायनसूत्रे॥पूर्वप्रतिष्ठितस्याबुद्धिपूर्वमेकरात्रंद्विरात्रमे
कमासंद्विमासंवार्चनादिविच्छेदेशूद्ररजस्वलाद्युपस्पर्शनेपूर्वोक्तेकालेपुण्याहंवाचयित्वायु
ग्मान्ब्राह्मणान्भोजयित्वानिशायांजलाधिवासंकृत्वाश्वोभूतेकलशपूर्णेनपंचगव्येनत
त्तन्मंत्रैःस्नापयित्वाअन्यंकलशंशुद्धोदकेनापूर्य्यतस्मिन्रत्नानिप्रक्षिप्यतंकलशंतत्तद्गा
यत्र्याअष्टसहस्रमष्टशतमष्टाविंशतिवारंवाभिमंत्र्यतेनोदकेनदेवंस्नापयेत्॥ततःशुद्धोदकेन
स्नपयेदष्टसहस्रैर्गीर्दलाद्यथासंभवमर्चयित्वागुडोदनंनिवेदयेदिति॥बुद्धिपूर्वेतुविच्छेदेपूर्वोक्तांप्रति
ष्ठांपुनःकुर्यात्॥पूर्वोक्तविष्णुवचनात्॥इदंमलमासशुक्रास्तादावपिकार्यमितिमदनरत्नेहेमाद्रौ
च॥देवार्चाप्रासादभेदनेतुशूलपाणौकाश्यपः॥वापीकूपारामसेतुसभातडागवप्रदेवतायतनभे
दनेप्रायश्चित्तंचतस्रआहुतीर्जुहुयादिदंविष्णुर्मानस्तोकेविष्णोःकर्माणिपादोस्येति॥यांदेवतां।
यैब्राह्मणाभोजयेदिति॥शंखलिखितौ॥प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभंगेषुतत्समुत्था
नंप्रतिसंस्कारोष्टशतंचनिपातितानामिति॥समुत्थानंप्रतिक्रिया॥प्रतिसंस्कारःपुनःप्रतिष्ठा॥
अष्टशतंपणाःदंडइत्यर्थः॥

अथजीर्णोद्धारः

सचलिंगादौदग्धेभ
ग्नेचलितेवाकार्य्यः॥अयंचानादिसिद्धप्रतिष्ठितलिंगादौभंगादिदुष्टेपिनकार्य्यः॥तत्रतुमहाभिषे
कंकुर्यादितित्रिविक्रमः॥कर्त्ताऽमुकदेवस्यजीर्णोद्धारंकरिष्यइत्युक्त्वापुण्याहंवाचयित्वाचार्यमृत्विज
श्चवृत्वालिंगे॥ॐव्यापकेश्वरहृदयायनमः॥ॐव्यापकेश्वरशिरसेस्वाहेति॥एवंषडंगंकृत्वाऽघोर
मंत्रशतंजप्त्वाग्निंप्रतिष्ठाप्याघोरेणघृतसर्षपैःसहस्रंहुत्वेंद्रादिभ्योनाम्नाबलिंदत्वाजीर्णदेवंप्रण
वेनसंपूज्यब्रह्मादिमंडलदेवानांहोमंपूर्वोक्तंकृत्वादेवंप्रार्थयेत्॥जीर्णभग्नमिदंचैवसर्वदोषावहं
नृणां॥अस्योद्धारेकृतेशांतिःशास्त्रेस्मिन्कथितात्वया॥जीर्णोद्धारविधानंचनृपराष्ट्रहितावहम्
॥तदधितिष्ठतांदेवप्रहरामितवाज्ञयेति॥ततःक्षीराज्यमधुदूर्वाभिःसमिद्भिश्चाष्टोत्तरसहस्रंशतंवा
देवमंत्रेणहुत्वा॥अस्मानांदशांशेनलिंगचालनार्थंसहस्रंशतंवापायसेनहुत्वालिंगंप्रार्थयेत्॥
लिंगरूपंसमागत्ययेनेदंसमधिष्ठितं॥यायात्वंसम्मितंस्थानंसंत्यज्यैवशिवाज्ञया॥अत्रस्थानेच
याविद्यासर्वविद्येश्वरैर्युता॥शिवेनसहसंतिष्ठेतिमंत्रितजलेनाभिषिच्यविसर्जयेत्॥ततोस्त्रमंत्रि
तेनखनित्रेणखात्वालिंगमादायनद्यादौवामदेवेनलिंगंप्रणवेनमूर्त्तिंक्षिपेत्॥दारुजंतुमधुना
भ्यज्याघोरेणदहेत्॥हेमरत्नादिमयंतुदग्धंचलितंवाग्नौपचेत्॥पुनस्तत्रैवस्थापयेत्॥ततःशां
त्यैअघोरेणतिलैःसहस्रंहुत्वाप्रार्थयेत्॥भगवन्भूतभव्येशलोकनाथजगत्पते॥जीर्णलिंगस
मुद्धारःकृतस्तवाज्ञयामया॥अग्निनादारुजंदग्धंक्षिप्तंशैलादिकंजले॥प्रायश्चित्तायदेवेश
अघोरास्त्रेणतर्पितम्॥ज्ञानतोऽज्ञानतोवापियथोक्तंनकृतंयदि॥तत्सर्वंपूर्णमेवास्तुत्वत्प्रसा
दान्महेश्वरेति॥ततोयजमानःप्रार्थयेत्॥गोविप्रशिल्पिभूपानामाचार्यस्यचयज्वनः॥शांतिर्भव
तुदेवेशअच्छिद्रंजायतामिदम्॥मूर्त्तौतुविशेषः॥त्वत्प्रसादेननिर्विघ्नंदेहंनिर्मापयाम्यसौ॥वासंकु
रुसुरश्रेष्ठतावत्त्वंचात्मकेगृहे॥वसन्त्वेशंसहत्वेहमूर्त्तिंवैतवपूर्ववत्॥यावत्कारयतेभक्त्याःकु
रुतस्यचवांछितमिति॥ततोनवांमूर्त्तिंलिंगंवाकृत्वोक्तविधिनास्थापयेत्॥मूलंत्वत्रिपुरार्णवस्थं

इतिनीरांजनविचारः॥ अथतुलसीग्रहणम्॥ देवयाज्ञिकधृतेस्मृतिसा
रे॥ विष्णुधर्मोत्तरे॥ संक्रांतौपक्षयोरंतेद्वादश्यांनिशिसंध्ययोः॥ तुलसींयेवि
चिन्वंतितेच्छिंदंतिहरेःशिरः॥ विष्णुधर्मोत्तरे॥ रविवारंविनादूर्वांतुलसींद्वा
दशींविना॥ जीवितस्याविनाशायनप्रचिन्वीतधर्मवित्तथा॥ संक्रांतावर्कपक्षांतेद्वादश्यांनि
शिसंध्ययोः॥ येछिंदंतितुलसीपत्रंतेछिंदंतिहरिमस्तकं॥ पाद्मे॥ द्वादश्यांतुलसीपत्रंधात्रीपत्रंच
कार्तिके॥ लुनातिसनरोगच्छेन्निरयानतिगर्हितान्॥ रुद्रयामले॥ द्वादश्यांच
दिवास्वापंतुलस्यवचयस्तथा॥ विष्णोश्चैवदिवास्नानंवर्जनीयंसदाबुधैः॥ विष्णुधर्मे॥ नछिंद्या
त्तुलसींविप्राद्वादश्यांवैष्णवःक्वचित्॥ देवार्थेतुलसीच्छेदोहोमार्थेसमिधांतथा॥ इंदुक्षयेनदुष्येत
गवार्थेतुतृणस्यच॥ ग्रहणमंत्रस्तुपाद्मे॥ तुलस्यमृतनामासिसदात्वंके
शवप्रिया॥ केशवार्थंविचिन्वामिवरदाभवशोभने॥ इति॥ पारिजातेदक्षः॥ समित्पु
ष्पकुशादीनांद्वितीयःप्रहरोमतः॥ अथपुष्पादेःपर्युषितत्वम्॥ भार्गवा
र्चनेभविष्ये॥ प्रहरंतिष्ठतेजातीकरवीरमहर्निशं॥ तुलसीबिल्वपत्रेषुसर्वेषुजलजेषुच॥ नपर्यु
षितदोषोस्तिमालाकारगृहेपिच॥ बृहन्नारदीये॥ वर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषि
तंजलं॥ नवर्ज्यंतुलसीपत्रंनवर्ज्यंजान्हवीजलं॥ तत्रैवपाद्मे॥ तुलसीपर्युषिता
नैवबिल्वंतुत्रिदिनावधि॥ पद्मंपंचदिनान्मासंशेषंपर्युषितंविदुः॥ स्कांदे॥ प
लाशंदिनमेकंतुपंकजंचदिनत्रयं॥ पंचाहंबिल्वपत्रंचदशाहंतुलसीदलम्॥ पदार्थादर्शे
राघवभट्टस्त्वन्यथाह॥ बिल्वापामार्गजातीतुलसिसमिशताकेतकीभृंगदूर्वामंदांभोजाद्रिभी
मुनितिलतगरब्रह्मकल्हारमल्ली॥ चंपाश्वारातिकुंभीदमनमरुवका बिल्वतोह्नानिशस्तात्रिंशत्
३० त्र्ये ३ का १ र्यु ६ रीशा ११ दधि ४ निधि ९ वसु ८ भू १ भू १ यमा २
भूयएवम्॥ अस्यार्थः॥ शतशतानुरीमंदःमंदारः अद्रिर्नागकेशरः॥ मुनिरगस्त्यः॥ अश्वाराति
करवीरः॥ कुंभीपाटलेतिवैदिकनिघंटुः॥ अरयःषट्॥ ईशाःएकादश॥ उदधयश्चत्वारः॥ निध
योनव॥ वसवोष्टौ॥ भूरेकः यमौद्वौ बिल्वमारभ्याहियर्यंतंगणयित्वा॥ दर्भमारभ्यपुनस्त्रिंशत्प्र
दिगणायेत्यर्थः॥ एतद्द्वितीयंपर्युषितानीत्यर्थः॥ टोडरानंदेस्कांदेदमनमुपक्रम्य॥ तस्यमंजरी
भगवतःपरमप्रीतिकारिणी॥ शुष्कापर्युषितावापिनदुष्टाभवतिक्वचित्तिथितत्वेमात्स्ये॥ बि
ल्वपत्रंचमाध्यंचतमालामलकीदलं॥ कल्हारंतुलसीचैवपद्मंचमुनिपुष्पकं॥ एतत्पर्युषितंन
स्यात्कुशाश्चकलिकास्तथा॥ स्मृतिसाराववल्यां॥ जलजानांचसर्वेषांपत्राणांमहतस्यच॥ पु
ष्पस्यरजतसुवर्णोत्पन्नयोरपि॥ नपर्युषितदोषोस्तितीर्थतोयस्यचैवहि॥ मुकुलैर्नार्चये
त्पुष्पैःपंकजेर्विना॥ अथशिवनिर्माल्यनिर्णयः॥ सिद्धांतशेखरे॥ भ
वंचपंकजंजलजैर्विना॥
हिरण्यपागोरत्नताम्ररौप्यांशुकादिकान्॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत्॥ चान्द्र
न्नादियानीयंतांबूलंगंधपुष्पकं॥ दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः॥ आचार्यशिवसं
डानामाज्ञाभंगेतुलक्षकं॥ धनस्यभक्षणेतेषांपादोनंलक्षमीरितं निर्माल्येभक्षितेलक्षपादतः

शुद्धिरिति॥ स्नानं च भक्षणासमं तद्दृष्टं तु पेक्षणे॥ अकामाद्भक्षणे पद्मनिर्माल्यस्य ... सुधीः॥ प
ञ्चपंचकसाहस्रमर्दनसहितं ततः॥ कामतो भक्षणे दीक्षा प्रायश्चित्तं न चान्यतः॥ निर्माल्यलंघने प
प्रजपेद्रुद्रं ततः॥ स्पर्शश्च लंघनसमो विक्रयो भक्षणं तथा॥ स्मृत्यर्थसारेपि॥ शै
वसौर निर्माल्यनैवेद्यभक्षणे चांद्रं॥ अभ्यासे द्विगुणं॥ अत्याभ्यासे पतनम्॥ अन्यनिर्माल्येपि त्वनाप
द्येष्वेवमिति॥ इदं च ज्योतिर्लिंगाद्यतिरिक्तविषयम्॥ तथा च पुरुषार्थप्रबोधे भविष्ये॥ ज्योतिर्लिंगं वि
ना लिंगं यः पूजयति सत्तमः॥ तस्य नैवेद्यनिर्माल्यभक्षणात्पातकं॥ शालग्रामोद्भवे लिंगे बाण
लिंगे स्वयंभुवि॥ रत्नलिंगे तथार्षे च सुरसिद्धप्रतिष्ठिते॥ हृदये चंद्रकांते च स्वर्णरूप्यादिनिर्मिते॥ शि
वदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते॥ तथा॥ बाणलिंगे स्वयंभूते चंद्रकांते हृदि स्थिते॥ चांद्रायण
समं ज्ञेयं शंभोर्नैवेद्यभक्षणम्॥ लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते॥ सिद्धप्रतिष्ठिते चैव न चंडाधि
कृतिर्भवेत्॥ यत्र चंडाधिकारोस्ति तद्भोक्तव्यं न मानवैः॥ चंडाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः॥
त्रैविक्रम्याम्॥ बाणलिंगे च लौहे च सिद्धलिंगे स्वयंभुवि॥ प्रतिमासु च सर्वासु न चंडोधि
कृतो भवेत्॥ अत्र ब्रह्महापि शुचिर्भूत्वा निर्माल्यं प्रधारयेत्॥ तस्य पापं महच्छीघ्रं नाशयिष्ये म
हाव्रते इति स्कांदात् शुचिना नग्राह्यं शिवनिर्माल्यं किंतु स्नात्वेति स्मार्ताः॥ अनुपनीतेन न ग्राह्यमिति
श्रीदत्तः॥ शिवदीक्षाहीनैर्न ग्राह्यमिति शैवाः॥ तिथितत्वे हेमाद्रौ च वाराहे॥ अग्राह्यं शिवनैवेद्यं प
त्रं पुष्पं जलं फलं॥ शालग्रामशिलासंगात्सर्वं याति पवित्रताम्॥ पंचायतनपूजायां तंत्रेणानिवेदित
मित्यर्थः॥ शिवपुराणे॥ येवीरभद्रशयिताः शिवभक्तिपराङ्मुखाः॥ शं
भोरन्यत्र देवेषु ये भक्ता येन दीक्षिताः॥ तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥ काशीखंडे
जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः॥ एष जालंधरी बंधः समस्तसुरवल्लभः॥ तथा॥ स्ना
पयित्वा विधानेन यो लिंगस्नपनोदकं॥ त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति॥ लिंगस्नपनवा
र्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनं॥ गंगास्नानफलं तस्य जायते त्वविपाप्मनः॥ इदं पूर्ववाक्यवशाद्विश्वे
श्वरविषयमिति केचित्॥ काशीस्थपुराणप्रसिद्धसर्वलिंगविषयं॥ काशीखंडे रत्ने
श्वराख्याने तथैव दर्शनादिष्यते॥ अथ कृषिः॥ राजमार्तंडः॥ आर्क्षे पून
र्व्यौ स्वर्वैष्णवमघामूलानुराधाश्विनी॥ प्राजापत्यकरादितिवैवतयुक्प्रालेयपादेषु च॥ निर्दोषे वृ
षभे हले श्वसुमनोमालाभिरभ्यर्चिते दत्वाक्षेत्रयतेर्बलिं हलधरः क्षेत्रे ततः कर्षयेत्॥ प्राजेशाश्र
वणोत्तरादितिमघामार्तंडतिष्याश्विनी॥ पौष्णानुराधमरीचयः शतभिषक्स्वाती विशाखा तथा॥
॥ जीवार्केंदुसितेंदुनंदनदिने लग्ने च सौम्योदये॥ सस्यानां वपने तथैव लवने शस्तास्तथा रोपणे
॥ चंडेश्वरः॥ हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये॥ स्थिरलग्ने गुरौ वारे बी
जं धार्यं त्वशुक्रयोः॥ ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ लेखयित्वा इमं मंत्रं धान्या
गारे निधापयेत्॥ सस्यवृद्धिं परां कुर्यात्पूजितं प्रतिपूजयेत्॥ दक्षिणादिक्षु खगमनममनमभिनव
सुनारीषु॥ व्ययमपि सस्यधनानां नबुधाबुधवासरे कुर्युः॥ शनिवारे च नो कार्यो धनधान्यव्ययो
बुधैः॥ अथ वस्त्रम्॥ श्रीपतिः॥ रोहिणीषु करपंचकेश्विभे त्युत्तरासु वसुत

वसुद्वये॥रेवतीषुवसुदेवेनेचभेनव्यवस्त्रपरिधानमिष्यते॥जीर्णरवौसततमंबुभिरार्द्रमिंदौभौमे
शुचेबुधदिनेतुभवेद्धनाय॥ज्ञानायमंत्रिणिभृगौप्रियसंगमायमंदेमलायचनवांबरधारणंस्यात्॥
रोहिणीगुरुपुनर्वसूत्तरेयाविभर्तिनववस्त्रमुत्तमं॥सानयोषिदचलंवतेपतिंस्नानमाचरतिवारु
णीषिया॥० अथालंकारवलयादि॥दैवज्ञवल्लभः॥ नासत्यपुष्यवसु
भिःकरपंचकेनमार्त्तंडभौमगुरुदानवमंत्रिवारे॥मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणिवि
[illegible] ज्योतिर्निबंधे॥ [illegible]
[illegible]
[illegible]
सुभहेममणिविद्रुमकाचशंखाः॥ नारदः॥ सुतसुखार्थकराभवतिप्राह्णोत्तरादि
तिगुरुस्वसुखायभर्त्तुः॥तत्रैव॥शंखादिवरत्नानियुज्यादिशुत्तरासुच॥रोहिण्यांचैवगृह्णी
तभर्त्तुर्जीवितकांक्षिणी॥ अथसूचीकर्म॥ वासवादितिभत्वाष्ट्रमै
त्रचंद्राश्विनीषुच॥सूचीकर्मतनुत्राणमेभिःऋक्षैःप्रशस्यते॥ अथशय्या॥ ह
स्तादितिब्रह्मगुरूत्तराणियोन्याश्विमूलेंदुभचित्रभानि॥वारेषुजीवेंदुसितेंदुजानांशय्यासमा
रंभणमुत्तमंस्यात्॥ अथशस्त्रधारणम्॥ पुष्येवादितिचित्रयमतन
येशक्रोत्तरारेवती॥स्वातीवाजिविशाखमित्रसहितेभानौगुरौभार्गवे॥कुंभेकीटगृहेवृषेमृ
गपतौचंद्रेशुभैर्वीक्षितेसन्नाहःशरखड्गकुंतछुरिकाधार्य्यानृपाणांहिताः अथ
स्वामिसेवा॥चंडेश्वरः॥ रोहिण्युत्तरयोःपुष्येवसुवारुणयोरपि॥सेवेतस्वामिनंभृत्यः
शुभवारोदयेतथा॥ ज्योतिर्निबंधे॥ दासीदासादिभृत्यानांकुर्यात्संग्रहणंबु
धैः॥स्थिरलग्नेशुभैर्दृष्टेमंदवारेविशेषतः॥ अथगजाश्वदोला॥ स्वर्वापी
शप्रजेशादितिभद्वयानिहस्तादिपंचश्रवणोत्तराणि॥दोलादिमातंगतुरंगमाणामारोहणे
भीष्टफलप्रदानि॥ अथनृत्यम्॥ हस्तःपुष्योवासवंरोहिणीचज्येष्ठापौष्णं
वारुणंचोत्तराच॥सर्वाचार्यैःकीर्तितश्चक्रवर्तीनृत्यारंभेशोभनोयंभवर्गः॥ अथ
राजदर्शनम्॥श्रीपतिः॥ मृगाश्वितिष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभरेवमानि
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
॥श्रीपतिः॥ चित्रोत्तरादस्रवरौहिणी [illegible]
गमनंविदध्यात्॥पुमान्यस्त्रीनकदाचिदेव॥ चंडेश्वरः॥ हस्तमूलविशा
खासुरेवत्यांश्रवणेतथा॥मैत्रेचवारुणेप्रोक्तंयशुक्रायणमुच्यते॥सर्वत्रयामृतमपूर्वहुताश

नेष्विंद्राग्निवाजिवसुवारुणशंकरेषु॥ एतेषु गोमहिषदंतितुरंगमादिनानाप्रकारपशुजा-
तिगतिः प्रशस्ता॥ अथगजदंतच्छेदः॥ ज्योतिर्निबंधे॥ त्वाष्ट्रेवैष्णवेश्वि-
सामादित्येवसुदैवते॥ दंतिनांशुभदंकर्मपुष्येहस्तेचकीर्तितं॥ अथनिक्षेपः॥
भरणीत्रीणिपूर्वाणिआर्द्राश्लेषामघातथा॥ चित्राज्येष्ठाविशाखाचमूलंमृगपुनर्वसु॥ एभिर्द-
त्तंप्रयुक्तंचयच्चनिक्षिप्यतेधनं॥ हृतंनष्टंप्रणष्टंवाधावमानस्यधनिनोनोपपद्यते॥ अथऋण-
मोक्षः॥ श्रीधरः॥ वागीशमंदविसौशकलत्रपुत्रेरिक्तासुमंददिवसेकुलिकोद-
येच॥ मैत्रद्वितीयपदमैत्रमुहूर्तयुक्तेरात्रौदमेचऋणमोक्षमुशंतिसंतः॥ अथरा-
जमुद्रा॥ मृदुध्रुवक्षिप्रचरेषुभेषुयोगेप्रशस्तेशनिचंद्रवर्ज्जे॥ वारेतिथौपूर्णज-
याह्वयेचमुद्राप्रतिष्ठाशुभदामहीशां॥ अथनौःचंडेश्वरः॥ पौष्णाश्विनीतु-
रगवारुणमित्रचित्राशीतांशुरस्त्रिवसवोनलवंत्यमूनि॥ वारेचजीवभृगुनंदनकेप्रशस्तंनौ-
कादिसंघटनवाहनमेवकुर्यात्॥ अथभोगः॥ गुरुभार्गवमानुराधाविधातृ-
पौष्णाश्विरोहिणीषुस्यात्॥ स्वातुत्तरासुकुर्यात्शयनाशनभोगभोगादीन्॥ अथश्म-
श्रुकर्म॥ श्रीपतिः॥ पुष्येपौष्णेचाश्विनीध्रुवेदैवेचशाक्रेहस्तेधनेत्रिकेभेप्यदित्याः॥ क्षौरंका-
र्यंवैष्णवादित्रयेचमुक्त्वाभौमादित्यपातंगिवारान्॥ नस्नातभुक्तोत्कटभूषितानामभ्यंगयात्रा-
समरोत्सुकानां॥ क्षौरेविदध्यान्निशिसंध्ययोर्वाजिजीविषूणांनवमेनचाह्नि॥ त्रिस्थलीसेतौ
वृद्धगार्ग्यः॥ ॥ रव्यारसौरिवारेषुरात्रौपाते
व्रताहनि॥ श्राद्धाहप्रतिपद्रिक्ताभद्रासुक्षौरेषुवर्जयेत्॥ गार्ग्यः॥ षष्ठ्यमावास्याश्रीमायांचचतुर्दश्य-
ष्टमीतथा॥ आसुसन्निहितंपापंत्रिषुतैलेभगेक्षुरे॥ राजमार्तंडः॥ देव-
कार्येपितुःश्राद्धेरवेरंशपरिक्षये॥ क्षौरकर्मनकुर्वीतजन्ममासेचजन्मभे॥ बृहस्पतिः॥
राजकार्येनियुक्तानांनराणांभूपजीविनां॥ श्मश्रुलोमनखच्छेदेनास्तिकालविशोधनं॥
तथा॥ क्षौरंनैमित्तिकंकार्यंनिषेधेसत्यपिध्रुवं॥ पित्रादिमृतिदीक्षासुप्रायश्चित्तेचतीर्थके॥
केचित्तुनराहमन्यथापठंति॥ मुंडनस्यनिषेधेपिकर्तनंतुविधीयतइति॥ नारदः
नृपविप्राज्ञयायज्ञेमरणेबंधमोक्षणे॥ उद्वाहेखिलवारर्क्षतिथिषुक्षौरमिष्टदं॥ भारते.
प्राङ्मुखःश्मश्रुकर्माणिकारयीतसमाहितः॥ उदङ्मुखोवाथभूत्वातथायुर्विंदतेमहत्॥
अपरार्के॥ उदङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः॥ केशश्मश्रुलोमनखानुदक्कु-
संस्थानिवापयेत्॥ दक्षिणंकर्णमारभ्यधर्म्मार्थंपापसंक्षये॥ शिखाद्यंनवसंस्कारेशिखा-
द्यंतुशिरोवपेत्॥ यतीनांतुविशेषोनिगमे॥ कक्षोपस्थशिखावर्ज्जमृतुसंधिषुवापयेदि-
ति॥ अन्येपिविधिप्रतिषेधाःप्रागुक्ताः॥ अथेंधनसंग्रहः॥ ब्रह्मानिला-
र्कमघमूलत्रिपूर्वरौद्रेपौष्णानुराधगुरुविष्णुविशाखयुक्ते॥ वारेकुजार्कभृगुनंदनसोमजा-
नांभेष्विंधनस्यकरणंभवतिप्रशस्तम्॥ अथनवान्नम्॥ श्रीपतिः॥ रेवती-
श्रुतिपुनर्वसुहस्तब्रह्मतःपृथगपिद्वितयेपि॥ उत्तरासुकथितंशिशुकानांप्राशनंचसनवान्न

विधानं॥ अथनवभोजनपात्रम्॥ज्योतिर्निबंधे॥ भोज्यपात्रंसुधासिद्धौघटये
द्वासमाहरेत्॥तत्रान्नप्राशनप्रोक्तकालेभोजनमाचरेत्॥ अथनवपर्णफलादिभ
क्षणम्॥चंडेश्वरः॥ मूलाश्विनीतिष्यहरींद्रभेषुपौष्णोत्तरेंदवपुनर्वसुवासवेषु॥वा
रेषुभूमितनयार्कजवारवर्ज्जेतांबूलनूतनफलाद्यशनंहितार्थी॥ अथहोमेत्र्याहुतिपा
तः॥ ज्योतिषे॥ नरशिखिभृगुभास्कररिचंद्रमाकुजसुरेज्यविधुंतुदकेतवः॥रवि
भतोदिनभंगणयेत्क्रमात्खगत्रितयंत्रितयंन्यसेत्॥दिनकरार्कितमःकुजकेतवोहुतभु
जःशुभनाशकराःस्मृताः॥दहनचक्रमिदंप्रविलोक्यतांदहनकर्मणिसर्वसमृद्धये॥ अ
थशांतिरुक्ताविष्णुधर्मे॥ क्रूरग्रहसुखेचैवसंजातेहवनेशुभे॥शांतिंविधायगांद
द्याद्ब्राह्मणायकुटुंबिने॥आयसींप्रतिमांकृत्वानिक्षिपेत्तामधोमुखीं॥गोमूत्रमधुगंधाद्यैर
र्चितांप्रतिमांततः॥स्वस्थंनिधायसंपूज्यतत्रहोमोविधीयते॥अत्रापवादःक्रियासारे॥नित्ये
नैमित्तिकेदुर्गाहोमादौनविचारयेत्॥ अथज्वरादौफलं॥श्रीपतिः॥ स्वा
त्याश्लेषारौद्रर्क्षवासुशाक्रेरोगोत्पत्तिर्बाधतेयस्यपुंसः॥तस्येदेयजंमापततोनिःप्रयत्नःस्याद्दुग्धा
ध्वेलेच्छजन्मापिवैद्यः॥व्याध्युत्पत्तिर्यस्यमैत्रेसयोक्षिप्राणत्राणंजायतेतस्यकृच्छ्रात्॥वैश्वे
सौम्येरोगमुक्तिस्तुमासाद्विशत्यास्याद्धासराणांमघासु॥पक्षाद्धस्तेवासवेसद्विदैवेमूलाश्विन्यो
रग्निधिष्ण्येनवाहात्॥याम्येत्वाष्ट्रेवैष्णवेवारुणे वैनैरुज्यंस्यात्तुनमेकादशाहात्॥आहि
र्बुध्न्यतिष्यसंज्ञेयमाख्येप्राजापत्यादित्ययोस्सप्तरात्रात्॥ ज्योतिषे॥ एका
होनिधनंदशाहमनिलावारणावियन्पूर्विताःसप्तांकाविलयश्चमासयुगलंमासोश्वतिःपक्ष
कः॥द्वौमासावथविंशतिर्दशनिशाःपक्षांतपक्षानखाः॥मासोपक्षदशांतपक्षककुभःपी
डादिनान्यश्विभात्॥ दैवज्ञः॥ तुरगवरुणरौद्रावायुमैंद्रत्रिपूर्वायमदहनविशा
खापापवारेणयुक्ताः॥तिथिषुनवमिषष्ठीद्वादशीवाचतुर्थीभवतिमरणयोगोरोगिणां
कालहेतुः॥अत्रकुंभेहैमींनक्षत्रप्रतिमांकृत्वाद्वादशदलेषुसंकर्षणादिद्वादशमूर्तीर्द्वाद
शादित्यान्वासंपूज्यरुद्रवीराभित्तिलक्षीराज्यैर्गायत्र्यातद्दैवतायैवाष्टोत्तरशतंहुत्वादशोदनं
बलिंदत्वाचार्यायतांप्रतिमांदत्वाविप्रान्भोजयेदितिसंक्षेपः॥विशेषस्तुव्रतहेमाद्रौया
दार्थादर्शेचज्ञेयः॥ अथभेषजम्॥चंडेश्वरः॥ मूलानुराधमृग
तिष्यपुनर्वसौचपौष्णाश्विनीश्रवणशक्रकरत्रयेच॥वारेषुवाक्पतिसितेंदुदिनेप्रश
स्तंभैषज्यभक्षणममीषुहितंनराणाम्॥ अथारोग्यस्नानम्॥श्रीपतिः
रुद्रोर्वीरिभार्गवेचध्रुवेषुसार्पादित्यस्वातिषुक्तंभेषु॥पौष्णेचांतेवापिकुर्यात्कदाचित्स्ना
नेरोगनिर्मुक्तजंतुः॥चरविलग्नेरविभौमवारेरिक्तेतिथौस्याद्दृढलेचपक्षे॥धिष्ण्येचरे
रोगनिपीडितानांस्नानंनराणांनिरुजत्वकारि॥ अथदंतधावनम्॥पृथ्वीचं
द्रोदयेविष्णुः॥ प्रतिपद्दर्शषष्ठीषुचतुर्दश्यष्टमीषुच॥नवम्यांभानुवारेचदंतका
ष्ठंविवर्जयेत्॥नारदः॥चतुर्दश्यष्टमीपौर्णमासीसंक्रमणेषुच॥नंदासुचनवम्यांचदंत

काष्ठंविवर्जयेत्॥श्राद्धेयज्ञेचनियमेतथाप्रोषितभर्तृका॥व्यतीपातेचसंक्रांत्यांनंदाभूताष्टपर्व
सुतैलक्षौररतिमांसंदंतकाष्ठंचवर्जयेत्॥वसिष्ठः॥शन्यर्कशुक्रवारेषुकुजाहेव्रतवासरे॥
जन्माहेश्राद्धदिवसेदंतकाष्ठंविवर्जयेत्॥ हेमाद्रौस्कांदे॥ अभ्यंगेजलधि
स्नानेदंतधावनमैथुने॥जातेचनिधनेचैवतत्कालव्यापिनीतिथिः॥ संवर्त्तः रवौ
विवाहेऽप्याशौचेवर्जयेद्दंतधावनं॥ व्यासः॥ अलाभेदंतकाष्ठानांनिषिद्धायांतथा
तिथौ॥अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम्॥ अथामलकस्नानंव्यासः॥
श्रीकामःसर्वदास्नानंकुर्वीतामलकैर्नरः।सप्तमींनवमींचैवपर्वकालंविवर्जयेत्॥ चंद्र-
सूर्योपरागेचस्नानमामलकैस्त्यजेत्॥क्रतुः॥षष्ठीचसप्तमीचैवनवमीचत्रयोदशी॥संक्रां
तौरविवारेचस्नानमामलकैस्त्यजेत्॥पद्मे॥नवमीदशमीचैवतृतीयाचत्रयोदशी॥प्रतिप
द्द्वादशीकृष्णास्नानंतासुविवर्जयेत्॥यच्च॥दर्शेस्नानंनकुर्वीतमातापित्रोस्तुजीवतोः॥पुत्रः
कुर्वन्शिरःस्नानंपित्रोरुन्नतिजीवितेइतिकण्वयमाद्यैः॥स्नानमात्रनिषिद्धं।तद्भोगार्थस्नान
परंतच्छिरःस्नानंपित्रोरुल्लंघनेमित्तिकपरमिति॥हेमाद्रिः॥ अथतैलनिषेधः॥
कात्यायनः॥ पक्षादौचरवौषष्ठ्यांरिक्तायांचतथातिथौ॥तैलेनाभ्यज्यमानस्तु
चतुर्भिःपरिहीयते॥ गर्गः॥ पंचदश्यांचतुर्दश्यामष्टम्यांरविसंक्रमे॥द्वादश्यांसप्त
मीषष्ठ्योस्तैलस्पर्शंविवर्जयेत्॥नचकुर्यात्तृतीयायांत्रयोदश्यांतिथौतथा॥शाश्वतींगति
मन्विच्छन्दशम्यामपिपंडितः॥ तत्रैवायुर्वेदे॥ षष्ठ्यांदिनक्षयेष्टम्यांमे
कादश्यांचपर्वसु॥द्वादश्यांचचतुर्दश्यांपंचम्यांप्रतिपत्तिथौ॥व्रतेश्राद्धदिनेजन्मत्रितयेश्र
वणार्द्रयोः॥ज्येष्ठोत्तराफाल्गुनेषुव्यतीपातेचवैधृतौ॥विष्टियोगेचसंक्रांतौमन्वादिषुयु
गादिषु॥नाभ्यंगंतत्रबालानांवृद्धानांतुनदोषकृदिति॥व्यवहारतत्त्वे॥संक्रांतिभद्राव्यति
पातेवैधृतीषष्ठ्यष्टमीपर्वसुनार्कभूसुते॥स्नानेद्वितीयादशमीचगर्हिताःषष्ठ्यादिमाघा
रदधावनेऽधमाः॥अस्यापवादमाहतत्रैवप्रचेताः॥सर्षपंगंधतैलंचयत्तैलंपुष्पवासितं॥
अन्यद्रव्ययुतंतैलंनदुष्यतिकदाचन॥ आयुर्वेदे॥ निषिद्धतिथिवारर्क्षग्रह
रोष्वपिरात्रिषु॥किंचिद्गोघृतयुक्तंवाविप्रपादरजोन्वितम्॥भानौदूर्वान्वितंभौमेभूयुक्तं।
पुष्पयुग्गुरौ॥सर्वेषांसर्वदातैलमभ्यंगेषुनदुष्यति॥मंगलेष्वप्यदोषः॥मांगल्यंविद्यते
स्नानंवृद्धिःपूर्वोत्सवेषुच॥स्नेहपात्रसमायुक्तंमध्यान्हात्प्राकृतदिष्यते॥ इति
मदनपारिजातेकात्यायनोक्तेः॥हेमाद्रौबृहन्मनुः॥ तैलाभ्यंगोनार्कवारेनभौमे
नोसंक्रांतौवैधृतौविष्टिषष्ठ्योः॥पर्वस्वष्टम्यांनचेष्टःसरस्थःप्रोक्तामुक्त्वावासरेसूर्यसूनोः।
तिलस्नाननिषेधस्तुषट्त्रिंशन्मते॥नयासप्तम्यमावास्यासंक्रांतिग्रहजन्मसु॥धनपुत्र
कलत्रार्थीतिलपिष्टंनसंस्पृशेत्॥ अथगृहारंभः॥ ज्योतिर्निबंधेवा
दरायणः॥वैशाखेफाल्गुनेपौषेश्रावणेमार्गशीर्षके॥सूत्रारंभःशिलान्यासःस्तंभारंभः
प्रशस्यते॥ नारदः॥ सौम्याःफाल्गुनवैशाखमाघश्रावणकार्त्तिकाः॥मासास्तु

क्ते लौकिके पचने वा पाके कृतेपि गृह्याग्नौ पक्वचरुणैव कार्यमिति प्रतिभाति॥ मदनरत्नेप्ये
वं॥ विधुरो छिन्नाग्न्यादेस्तु दृष्टोदिविविधानेनाग्निसंपादनमित्युक्तं हरिहरभाष्ये॥ इति
पाकाग्निः॥ चंद्रिकायां मार्कंडेयः॥ अन्हः षट्सु मुहूर्तेषु गतेषु
प्रयतान्द्विजान्॥ प्रत्येकं प्रेषयेत्प्रेष्यान्प्रदायामलकोदकं॥ देवलः ततो
निवृत्ते मध्यान्हे क्लृप्तरोमनखान्द्विजान्॥ अभिगम्य यथामार्गं प्रयच्छेद्दंतधावनं॥ तैल
मभ्यंजनं स्नानं स्नानीयं च पृथग्विधं॥ पात्रैरौदुंबरैर्दद्याद्वैश्वदेविकपूर्वकं॥ औदुंबरैस्ता
म्रमयैः॥ अत्र क्षौरामलकस्नानादि निषिद्धतिथ्यादिव्यतिरिक्तविषयमिति हेमाद्रिमाध
वौ॥ यत्तु चंद्रिकायां प्रचेताः॥ तैलमुद्वर्तनं स्नानं दद्यात्पूर्वान्हए
व तु॥ श्राद्धभुग्भ्यो न स्वश्मश्रुच्छेदनं तु न कारयेदिति॥ तन्निषिद्धतिथ्यादिविषयं॥ निषि
द्धतिथ्यादि तु प्रागुक्तं॥ अभ्यंगे तु कलिकायां कात्यायनः॥ तैलमुद्वर्तनं देयं ब्राह्मणेभ्यः
प्रयत्नतः। तैरभ्यंगश्च कर्तव्यो वर्ज्यकालं न चिंतयेत्॥ अपरार्के प्रचेताः॥ स्नातोधिकारी भ
वति दैवे पित्र्ये च कर्मणि॥ श्राद्धकृच्छुक्लवासाः स्यान्मौनी च विजितेंद्रियः॥ हे
माद्रौ जाबालः॥ तांबूलं दंतकाष्ठं च स्नेह स्नानमभोजनं॥ रत्यौषधपरान्ना
नि श्राद्धकर्ता विवर्जयेत्॥ वस्त्रे विशेषमाह॥ तत्रैव भृगुः॥ नग्नः
स्यान्मलवद्वासा नग्नः कौपीनकेवलः॥ द्विकच्छोनुत्तरीयश्च अ
कच्छो वस्त्र एव च॥ नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटः स्मृतः॥ नग्नो द्विगुणवस्त्रः स्या
न्नग्नो रक्तपटः स्मृतः॥ नग्नस्तु स्विन्नवस्त्रः स्यान्नग्नः स्यूतपटस्तथा॥ ततः कर्ता ऊर्ध्व
पुंड्रं कुर्यात्॥ जपे होमे तथा दाने स्वाध्याये पितृकर्मणि॥ तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुंड्रवि
नाकृतमिति॥ हेमाद्रावुक्तेः॥ यज्ञो दानं जपो होमः स्वाध्यायः पि
तृकर्म च॥ वृथा भवति विप्रेंद्रा ऊर्ध्वपुंड्रं विना कृतमिति वृहन्नारदीयात्॥ ऊर्ध्वं च तिलकं
कुर्याद्दैवे पित्र्ये च कर्मणीति वृद्धपराशरोक्तेश्च॥ अन्ये तु॥ ऊर्ध्वपुंड्रं द्विजातीनामग्निहो
त्रसमो विधिः॥ श्राद्धकाले तु संप्राप्ते कर्ता भोक्ता च तत्त्यजेत्॥ वामहस्ते च दर्भाः स्युर्गृहे रंग
वलिं तथा॥ ललाटे तिलकं दृष्ट्वा निराशाः पितरो गता इति संग्रहोक्तेः॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा
चंद्राकारमथापि वा॥ श्राद्धकर्ता न कुर्वीत यावत्पिंडान्न निर्वपेत्॥ इति विश्वप्रकाशे व
चनाच्च न कार्यमित्याहुः॥ अत्राचाराद्व्यवस्था॥ अत एव वृहन्नारदीये॥ ऊर्ध्वपुंड्रं च तुल
सीं च श्राद्धे नेच्छंति केचनेति॥ ऊर्ध्वपुंड्रविधिर्विप्रविषयः निषेधः कर्तृपर इति पृथ्वीचंद्रः
यत्तु। हेमाद्रौ देवलः॥ ललाटे पुंड्रकं दृष्ट्वा स्कंधे मालां तथैव च॥ नि
राशाः पितरो यांति दृष्ट्वा च वृषलीपतिमिति तद्भिन्नत्रिपुंड्रविषयं॥ प्राक्पिंडदानाद्धार्ये
नीलं कुर्यात्तु विप्रहमित्याश्वलायनोक्तेः॥ पुंड्रं वर्तुलमित्यपरार्के मदनरत्ने च॥ पृथ्वी
चंद्रस्तु त्रिपुंड्रम्॥ ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुंड्रकं॥ निराशाः पितरो यांति दृष्ट्वा चै
व त्रिपुंड्रकमिति वृद्धपराशरोक्तेः॥ भोक्तुस्तिर्यग्लेपो भवत्येव॥ वर्जयेत्तिलकं भाले श्राद्ध

कालेचसर्वदा॥ तिर्यगप्यूर्ध्वपुंड्रंवाधारयेत्तुप्रयत्नतः इतिव्योक्तेरित्याह॥ ४
कालेचसर्वदा॥ तिर्यगप्यूर्ध्वपुंड्रंवाधारयेत्तुप्रयत्नतः इतिव्योक्तेरित्याह॥ ४
ष्वींचंद्रोदयेब्राह्मे॥ सदर्भेणतुहस्तेनयःकुर्यात्तिलकंबुधः॥ आचम्यसविशु
ध्येतदर्भत्यागेनचैवहि॥ ततःश्राद्धारंभकालमाह ऽपराह्णेगौतमः॥ आरभ्यकुतपेश्राद्ध
यीदारोहिणंबुधः॥ विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेत्॥ एतद्देवोदि
ष्टे॥ पार्वणेतूक्तंमात्स्ये॥ ऊर्ध्वंमुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयं॥ मुहूर्तपंचकंह्येतत्स्वधा
भवनमिष्यते॥ तथा॥ मध्याह्नेसर्वदायस्मान्मंदीभवतिभास्करः॥ तस्मादनं
तफलदस्तत्रारंभोविशिष्यते॥ ॥अथश्राद्धपरिभाषा॥
चंद्रिकायांकात्यायनः॥ दक्षिणंपातयेज्जानुदेवान्परिचरन्सदा॥ पातये
दितरंजानुपितॄन्परिचरन्सदा॥ बौधायनः॥ प्रदक्षिणंतु
देवानांपितॄणामप्रदक्षिणं॥ देवानामृजवोदर्भाःपितॄणांद्विगुणास्तथा॥ पृथ्वी
चंद्रोदयेशंखः॥ आवाहनार्घ्यसंकल्पेपिंडदानान्नदानयोः॥ पिंडाभ्यं
जनकालेतुतथैवांजनकर्मणि॥ अक्षय्यासनयोः पाद्येगोत्रनाम
प्रकाशनं॥ तत्रैवपरिशिष्टे॥ क्षणेचपिंडदानेचगंधधूपाक्षयेत
था॥ संकल्पेचासनेदीपेत्र्यंजनाभ्यंजनेतथा॥ अन्नार्घ्यदानयोस्तेषुगोत्रंनामचकीर्तयेत्
कलिकायांसंग्रहे॥ आसनावाहनेपाद्येअन्नदानेतथैवच॥ अक्षय्येपिंडदा
नेचषट्सुनामानिकीर्तयेत्॥ मत्स्य॥ संबंधंप्रथमंब्रूयाद्गोत्रंनामतथै
वच॥ पश्चाद्रूपंविजानीयात्क्रमएषसनातनः॥ तत्रैव॥ सकारेणतुव
क्तव्यंगोत्रंसर्वत्रधीमता॥ सकारःकुतपोज्ञेयस्तस्माद्यत्नेनतंवदेत्॥ यथाकाश्यपसगो
त्रेति॥ पराशरसगोत्रस्यवृद्धस्यतुमहात्मनः॥ भिक्षोःपंचशिखस्याहंशिष्यःपरमधार्मिक
इतिमोक्षधर्मप्रयोगाच्च॥ तेनगोत्रसगोत्रयोःपर्यायत्वात्॥ शाखाभेदाद्व्यवस्थेति॥
सूत्रपाणिः॥ एतयेषामाम्नातंतेषामेव॥ हेमाद्रौ॥ वृहस्पतिःपा
गोत्रंस्वरांतंसर्वत्रगोत्रस्याक्षय्यकर्मणि॥ गोत्रस्तुतर्पणेप्रोक्तःएवंदाताननुह्यतिसर्वत्रैव
पितुःप्रोक्तःपितातर्पणकर्मणि॥ पितुरक्षय्यकालेतुपित्रेसंकल्पनेतथा॥ शर्मन्नर्घ्यादि
केकार्येशर्मातर्पणकर्मणि॥ शर्मणोक्षय्यकालेतुपितॄणांदत्तमक्षय्यं॥ स्वरांतेसंबुद्ध
त्वमिति॥ हेमाद्रिः॥ तत्रैवचंद्रिकायांस्मृत्यंतरे॥ गोत्रस्यत्वपरिज्ञाने
काश्यपंगोत्रमुच्यते॥ तस्मादाहश्रुतिःसर्वाःप्रजाःकाश्यपसंभवाः॥ यत्तुसंस्कारभास्करः॥
त्रयंनाशानवधीःपुरोहितगोत्रेणाचार्यगोत्रेणवेति॥ तद्विवाहपरंनामोच्चारणेविधे
समाह॥ हेमाद्रौबौधायनः॥ शर्मांतंब्राह्मणस्योक्तंवर्मांतं
क्षत्रियस्यतु॥ गुप्तांतंचैववैश्यस्यदासांतंशूद्रजन्मनः॥ पित्रादिनामाज्ञानेतत्रैवपृथि
वीपतिपितावाच्यस्तितावांतरिक्षसत्॥ अभिधानापरिज्ञानेदिविषत्प्रपितामहः॥ आ
पित्रादीनांनामयदापुत्रैर्नज्ञायतेतदा॥ आपस्तंबसूत्रेप्येवं॥ एतदन्यशाखापरं॥

श्वलायनानांतूक्तंसूत्रे॥ यदिनामान्नविद्यात्ततःपितामहप्रपितामह
हेतिब्रूयात्॥ तत्कारिकापि॥ नामानिचेन्नजानीयात्तत्तत्ता
दिवदेत्क्रमात्॥ततइतिसंबंधमात्रपरंनत्वित्र्यादावपितथेति॥ गौडाः॥
स्त्रीणांदांतंनामज्ञेयं॥दान्तनामस्त्रीणामिति॥ पृथ्वीचंद्रोदयेगोभिलोक्तेः
केचिद्देवीशब्दांतमाहुः॥अन्येतुदेवीदासीतिद्वयोःसमुच्चयमाहुः॥ हेमाद्रौ
नारायणः॥ विभक्तिभिस्तुयत्किंचिद्दीयतेपितृदेवते॥तत्सर्वंसफलंज्ञे
यंविपरीतंनिरर्थकं॥ चंद्रिकास्मृत्यर्थसारयोः॥नारदीयेच॥ अ
क्षय्यासनयोःषष्ठीद्वितीयावाहनेतथा॥अन्नदानेचतुर्थीचशेषाःसंबुद्धयःस्मृताः
यत्तुव्यासः॥ चतुर्थीचासनेनित्यंसंकल्पेचविधीयते॥प्रथमातर्पणेप्रोक्ता
संबुद्धिमपरेजगुरिति॥अत्रशाखाभेदाद्व्यवस्थेतिहेमाद्रिः॥ हेमाद्रौभृगुः
अर्घ्यावनेजनंपिंडमन्नंप्रत्यवनेजनं॥संबुद्धिंतत्रकुर्वीतशेषेषुषष्ठीविधीयते॥ हे
माद्रौप्रभासखंडे॥ यज्ञोपवीतिनाकार्यंदैवंकर्मप्रदक्षिणं॥प्राचीनावी
तिनाकार्यंपितृकर्माप्रदक्षिणं॥अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैवसव्यापसव्येते
ये॥तस्योपवीतस्थानीयत्वात्॥अपसव्यंत्वमाहसव्यंकृत्वाकश्चित्सगोत्रजइतिब्राह्मे
चेतिवाचस्पतिः॥यत्तुकेचित्॥ सदोपवीतिनाभाव्यमित्यस्यपुरुषार्थत्वा(त्)
त्प्राचीनावीनकालेप्युपवीतांतरेणतत्कार्यमेवेति॥तन्न॥ विशेषेणाबाधा
त्॥जमदग्निः॥सूत्रस्तोत्रजपंपत्न्याःपिंडाघ्राणंचदक्षिणांआव्हानंस्वागतंचार्घ्यंवि
नाचपरिवेषणं॥निसर्जनंसौमनस्यमाशिषंप्रार्थनंतथा॥विप्रप्रदक्षिणंचैवस्व
स्तिवाचनकंविना॥पित्र्यमुद्दिश्यकर्तव्यंप्राचीनावीतिनासदा॥ हेमाद्रौसंग्र
हे॥ आदौविप्रांघ्रिशौचांतेअभ्यर्चनेविकिरेकृते॥पिंडानभ्यर्च्यपीत्वाचविस
र्ज्यब्राह्मणांस्तथा॥आचामेच्छ्राद्धकर्ताचस्थानेष्वेतेषुसप्तसु॥आद्यंतयोर्द्विराचामे
च्छेषेषुतुसकृत्सकृत्॥तत्रैव॥श्राद्धारंभेऽवसानेचपादशौचार्चनांतयोः॥विकिरे
पिंडदानेचषट्स्वाचमनमिष्यते॥ आश्वलायनः॥ दानाध्ययन
देवार्चाजपहोमव्रतादिकान्॥नकुर्याच्छ्राद्धदिवसेप्राग्द्विजानांविसर्जनात्॥एतन्नि
त्यवर्जमितिबोपदेवः॥इदंविष्णुभिन्नदेवपरं॥विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांत
रं॥पितृभ्यश्चापितद्देयंतदानंत्यायकल्प्यते॥पितृशेषंतुयोदद्याद्धरयेपरमात्मने॥
रेतोधाःपितरस्तस्यभवंतिक्लेशभागिनइतिस्कांदात्॥पितरःसर्वमनुष्याविष्णुनाश्नितम
श्नंतीतिश्रुतेः॥यःश्राद्धकालेहरिभुक्तशेषंददातिभक्त्यापितृदेवतानां॥तेनैवपिंडा(ः)
स्तुलसीविमिश्राआकल्पकोटिंपितरःसुतृप्ताइतिब्राह्मोक्तेश्चेतिश्रीधरस्वामिनृसिंहपरि
चर्यादयः॥एतत्सर्वंनिबंधविरोधान्निर्मूलं॥ अत्रविशेषोहेमाद्रौविष्णु
धर्मे॥श्राद्धान्हितुसममभ्यर्च्यनृवराहंजनार्दनं॥ शिवपुराणे॥ पूज

पित्वाशिवंभक्त्यापितृश्राद्धंप्रकल्पयेत्॥सर्वनिषेधस्तुविहिताभिन्नपरः॥ तथा
हेमाद्रौ॥ दैव्यर्घ्यादक्षिणांगादिःपादजान्वंसमूर्द्धसुशिरोंसजानुपादेषुवा
मांगादिर्चपैतृके॥ कालिकायांस्मृत्यंतरे॥ श्राद्धारंभेचयेदर्भाः
पादशौचेविसर्जयेत्॥अर्चनादौतुयेदर्भाउच्छिष्टांतेविसर्जयेत्॥मार्जनादौतुयेदर्भाः
पिंडोत्थानेविसर्जयेत्॥उत्तानादौतुयेदर्भादक्षिणांतेविसर्जयेत्॥प्रार्थनादौतुयेद
र्भानमस्कारेविसर्जयेत्॥ऊहमाहविष्णुः॥मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः
मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितं॥यथान्यायमितिपत्रबहुवचनातः॥पितृश
ब्दस्तत्रसर्वपितृवाचित्वान्नोहः तत्रापिसुधंतांपितरइत्यत्रोहएव॥सर्वपितृवाचित्वेउ
त्तरमंत्रद्वयवैयर्थ्यात्॥बहुवचनंततोघतेप्रकृतावसमर्थत्वात्पाषाणितिवत्॥अग्ना
नेचनोहः॥तस्माद्दचंनोहेदितिनिषेधात्॥एकोदिष्टेप्येवम्॥प्रेतैकोद्दिष्टेत्वेकवन्मंत्रा
नूहेनैकोद्दिष्टे॥ इतिविष्णूक्तेरूहः॥ अत्रबहुवचनस्यापू
होवचनात्॥इत्यादौतुविशेषंवक्ष्यामः॥शेषाणामितिपितृव्यादेकोद्दिष्टेआवाहना
दिमंत्रवर्ज्जकार्यमितिकल्पतरुः॥ऊहयोग्यपितृपदवान्मंत्रएवतत्रनप्रयोज्यः॥नत्वूह
नापिपितृपदरहितः॥ प्रयोज्यइतिशूलपाणिः अर्थांतरे
चोक्तंप्राक्॥बव्हृचकारिकापि॥अर्घ्यप्रदानमात्रेतुमात्रादिपदमाचरेत्॥शुंधंतामिति
पित्रादौमात्रादिपदमाचरेत्॥मातृश्राद्धेपिंडदानेयेचत्वामंत्रास्त्वित्यत्रनोहइतित्रिका
त्॥तथामातुःश्राद्धेप्यनूहेनकुर्यात्पिंडानुमंत्रणं॥दशादानमुपस्थानंतद्वत्कार्यमिति
स्थितिः॥प्रवाहणमनूहेनतद्वत्प्राशनमिष्यते॥ तथा॥ आयंतुनस्त्विो
सीतिउशंतस्त्वेतियानितु॥अनूह्यःपितृशब्दोत्रपितृसामान्यवाचकः॥आपस्तंबानांतु
वक्ष्यते॥ हेमाद्रौमार्कंडेयः॥ स्नातःस्नातान्समाहूतान्स्वा
गतेनार्चयेत्पृथक्॥ कालिकायांनारदीये प्रायश्चित्तविशु
द्धात्मातेभ्योनुज्ञांप्रगृह्यच॥दद्याद्देवमहत्दंडार्थंहिरण्यंकुशमेवच॥ तत्रैवसंग्र
हे॥ तिथिवारादिकंज्ञात्वासंकल्प्यचयथाविधिः॥प्राचीनावीतिनाकार्यं
सर्वसंकल्पनादिकं॥संबंधंप्रथमंब्रूयात्नामगोत्रेतथैवच॥वस्वादिरूपतांचापिस्व
पितॄणामनुक्रमात्॥ चंद्रोदयेनारदीये॥ श्राद्धार्थंसमनुप्रा
प्तान्विप्रान्भूयोनिमंत्रयेत्॥ आपस्तंबस्तु॥ पूर्वेद्युर्निमंत्रणंपरे
द्युर्द्वितीयंतृतीयमामंत्रणमित्याह॥यूयंमयानिमंत्रणीयाइतिनिवेदनरूपमाद्यं॥तद्वि
धिमाहशौनकः॥ गृहीत्वामुकसंज्ञस्यामुकगोत्रस्यचामुके॥श्राद्धेतुर्वैस्व
देवार्थंकरणीयः क्षणस्त्वया॥ इत्येवंश्राद्धकृद्ब्रूयाद्दोतथेति
वदेत्तुसः॥श्राद्धस्यकर्त्तासंब्रूयात्प्राप्नोतुभवानिति॥सवदेत्प्राप्नवानीतिइतरस्तंप्रति
द्विजः॥दिवोयार्वणोपुरूरवार्द्रवोवाच्यौ॥पित्रादेरप्यनेनैववरणीतविधिनाद्विजान्॥

ततः कर्त्ता बह्वृचो नाहिताग्निः पिंडपितृयज्ञे परिस्तरणादीध्माधानांतं कुर्यात्॥ अर्द्धाधा
नितोप्येवमिति प्रयोगपारिजाते परिशिष्टे च॥ भाष्यकारमते आह्निकेप्येवं॥ वृत्तिकारम
तेनेदं॥ हेमाद्रौ शंभुः॥ संमार्जितोपलिप्ते तु द्वारि कुर्वीत मंडले
॥ उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवं॥ व्याघ्रः॥ उत्तरेऽक्षतसंयुक्तान्
पूर्वाग्रान्विन्यसेत्कुशान्॥ दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेत्कुशान्॥ त
त्रैव बौधायनः॥ चतुरस्रं त्रिकोणं च वर्तुलं चार्द्धचंद्रकं॥ कर्त्तव्यमानुपूर्व्ये
ण ब्राह्मणादिषु मंडलं॥ तत्रैव लौगाक्षिः॥ हस्तद्वयमितं का
र्यं वैश्वदेविकमंडलं॥ तद्दक्षिणे चतुर्हस्तं पितॄणामंघ्रिशोधने॥ कालिकायां सं
ग्रहे॥ प्रादेशमात्रं देवानां चतुरस्रं तु मंडलं॥ त्यक्त्वा षडंगुलं तस्माद्दक्षिणे वर्तु
लं तथैव तु क्रमम्॥ यत्तु स्मृत्यंतरे॥ गर्त्तः पंचांगुलो विप्रे जानुमात्रे
महीभुजि॥ प्रादेशमात्रो वैश्ये च साधिकः स तु शूद्रके तिर्यगूर्ध्वप्रमाणेन व्याख्यातो दैव
पित्र्ययोः॥ चतुरस्रं वर्तुलं च कथितं गर्त्तलक्षणं॥ पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजा
न्॥ तिष्ठंश्चेत्क्षालनं कुर्यात्ते निराशाः पितरो गता इति॥ तन्मूलत्वे मंडलाद्येष्वपृथक्त्वेयं॥
तत्र गोमये हेमाद्रौ भृगुः॥ अत्यंतजीर्णदेहाया वंध्यायाश्च विशेषतः॥ आर्त्तायानवसूतायाः
न गोर्गोवरमाहरेत्॥ मात्स्ये॥ अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्य
वत्॥ विप्राणां क्षालयेत्पादानभिवंद्य पुनः पुनः प्रत्यङ्मुखः स्वस्थितः कुर्यात् विप्रपादाभिषे
चनं तत्रैव भविष्ये॥ प्रक्षालयेद्द्विजपादान् शन्नोदेवीरिति त्वृचा॥ पृथ्वीचंद्रो
दये वृद्धवसिष्ठः॥ न कुशाग्रे स्थितैः हस्तैस्तु पाद्यं दद्याद्विचक्षणः॥ कालि
कायां संग्रहे॥ ततः प्रक्षालयेत्पादौ भार्याप्लावितवारिणा॥ तथा॥ श्राद्ध
काले यदा पत्नी वामे नीरप्रदा भवेत्॥ आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ त
त्रैव॥ नाधः प्रक्षालयेत्पादौ कर्त्ता पित्रादिकर्मसु॥ पाद्यानंतरमर्घ्यमपि दद्यादिति
हेमाद्रिः॥ तत्रैव लौगाक्षिः॥ मंडलादुत्तरे देशे दद्यादाचमनीय
कं॥ तत्रैव॥ विधाय क्षालनं तेषां द्विराचमनमिष्यते॥ स्वयं चापि
द्विराचामेद्विधिः श्रद्धयान्वितः॥ हेमाद्रौ नारदीये॥ यत्राचमनवारी
णि पादप्रक्षालनोदकैः॥ संगच्छंते वृथा श्राद्धमासुरं तत्प्रचक्षते॥ व्यासः स
मेनैवासनं धृत्वा दक्षिणे दक्षिणं करं॥ व्याहृतीभिः समस्ताभिरासने सूपवेशयेत्॥ स
माध्वमिति चैवोक्त्वा दक्षिणं जानु संस्पृशन्॥ आस्यतामिति तु ब्रूयादासनं संस्पृशन्नपि॥
हेमाद्रौ शातातपः॥ द्वौ दैवे पूर्वगौ विप्रौ प्राङ्मुखावुपवेशयेत्॥ पित्र्ये तूदङ्मु
खांस्त्रींश्च बह्वृचाध्वर्युसामगान्॥ याज्ञवल्क्यः॥ द्वौ दैवे प्राक्
त्रयः पित्र्ये उदगेकैकमेव वा॥ यत्तु हेमाद्रौ हारीतः॥ दक्षिणाग्रदर्भेषु प्राङ्मुखान्ब्राह्मणा
न्भोजयेदुदङ्मुखान्नित्ये करिति॥ तन्मैत्रायणीयविषयं॥ प्राङ्मुखान्भोजयेदुदङ्मुखा

नित्येक इतितत्परिशिष्टात्॥ विकल्प इति हेमाद्रिः॥ माधवीये यमः॥ भि
क्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः॥ उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत्॥
कौर्मे॥ अतिथिर्यस्य नाश्नाति न तत् श्राद्धं प्रचक्षते॥ विप्रनियमो माधवीये
पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः॥ उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयंतः परस्परम्॥
तत्रासनानि॥ पृथ्वीचंद्रोदये यमः॥ आसनं कुजपं दद्यादित्यर्हाः पवित्रकं॥ हेमाद्रौ चम
त्कारखंडे॥ पितॄणां घटितं हैमराजतं वापि चासनं॥ येन ताम्रमयं दत्तमासनं पितृकर्म
णि॥ स वै दिव्यासनारूढो नहि प्रस्रवते दिवः॥ हेमाद्रौ नागरखंडे॥
अथ शंकुमयं पीठं प्रदेयं नोपवेशने॥ कालिकायां संग्रहे॥ क्षौमं दु
कूलमध्यमानापंक्तिर्यथा भवेत्॥ दक्षिणासंस्थिता येषा पितॄणां श्राद्धकर्मणि॥ पु
लस्त्यः॥ श्रीपर्णी वारुणी क्षीरी जंतुकाम्रकदंबकम्॥ सप्तमं वाकुलं पीठं पितॄणा
दत्तमक्षयं॥ संग्रहे शमी चकाश्मरी शेलु कदंबो वारुणस्तथा॥ पंचाशनानि शस्तानि श्राद्धे देवा
र्चने तथा॥ कारिका॥ द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रानुदगाननान्॥
पैठीनसिः॥ कुतपः श्राद्धवेलायां श्रोत्रियो यद्दृश्यते॥ आश्वलाय
नः॥ नीवीवासोदशांतेन स्वरक्षार्थं प्रबंधयेत्॥ वृद्धयाज्ञवल्क्य
आश्वलायनः॥ नीवीवासोदशांतेन स्वरक्षार्थं प्रबंधयेत्॥ वृद्धयाज्ञ
वल्क्यस्तु॥ दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयं॥ यजुकानीय
नीवीकार्या दशायुनिर्वा मकुक्षौ कुशैः सहेति तद्वृद्धिश्राद्धे॥ पितॄणां दक्षिणे पार्श्वे विपरी
तां तु दैविक॥ इतिस्मृत्यंतरात्॥ वामदक्षिणे वेत्याचारात्व्यव
स्थितिमदनपारिजातेः॥ आचार्यः॥ प्राणायामत्रयं कृत्वा गाय
त्रीस्मरणं तथा॥ श्राद्धकर्तास्मीति वदेत् विप्रैर्वाच्यं कुरुष्व च॥ ब्राह्मे॥
ततस्तिलान् गृहे तस्मिन् विकिरेच्चाग्रदक्षिणाम्॥ अद्ध्यापरयापुक्तौ जपेदपहता मित्य
चाप्रोक्षेत्॥ पराशरः॥ तद्विष्णोरिति मंत्रेण गायत्र्याव
प्रयत्नतः॥ प्रोक्षयेदन्नजातं तु भूद्रदृष्ट्यादि शुद्धये॥ हेमाद्रौ ब्रह्मांडे॥
श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं॥ ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते॥ देव
ताभ्यः पितृभ्यश्च महायोगिभ्य एव च॥ नमः स्वधायै स्वाहायै नित्यमेव नमो नमः॥ आदि
मध्यावसाने षु त्रिरावृत्त्या जपेद्बुधः॥ पितरः क्षिप्रमायांति राक्षसाः प्रद्रवंति च॥ त
त्रैव स्कांदे॥ तिलारक्षंत्वसुरान् दर्भा रक्षंति राक्षसान्॥ पंक्तिं वै श्रोत्रि
यो रक्षेदतिथिः सर्वरक्षकः॥ वसिष्ठः॥ शुद्धवतीभिः कूष्मांडीभिः
पावमानीभिश्चपाकादि प्रोक्षयेत्॥ अथ देवार्चा॥ तत्र प्रत्युपवा
रमाघ्रतयोरायोर्दद्यादित्युक्तं च तौ स्मृत्यर्थसारे च॥ हेमाद्रौ ब्राह्मे॥
आसने ष्वासनं दद्याद्वामे वा दक्षिणेपि वा॥ पितृकर्मणि वामे च दैवे दद्यात्तु दक्षिणे॥ प्र

वेत्॥ आसनेष्वासनं दद्यान्नतु पाणौ कदाचन॥ धर्मोसीत्यथ मंत्रेण गृह्णी
युस्तेतु तान्कुशान्॥ धर्मोसि विशिराजा प्रतिष्ठित इति मंत्रतः॥ गालवः॥ द
र्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे॥ दैवे क्षणः क्रियतां तु निरंगुष्ठकरं ततः॥ ॐ तथे
ति द्विजा ब्रूयुस्ते प्राप्नोतु भवानिति॥ कर्त्ता ब्रूयात्ततो विप्रः प्राप्नवानीति वै वदेत् पृ
थ्वीचंद्रोदये बृहन्नारदीये॥ पृथ्वीचंद्रोदये बृहन्नारदीये॥
यवैर्दर्भैश्च विश्वेषां देवानामिदमासनं॥ दत्वेति भूयो दद्याद्धि दैवे क्षण इति क्षणं॥ तच्च ष
ष्ठ्या चतुर्थ्या वा कार्यमिति स एव॥ ततोर्घ्यं कल्पयेदिति मन्वादयः॥ शौनकजयंताभ्यामर्घ्य
रहितस्य देवार्चनस्योक्तेराश्वलायनानां दैवेर्घ्यदानं नेति वोपदेवः॥ तन्न॥
परिशिष्टप्रयोगपारिजातविरोधात्॥ वृद्धिश्राद्धे तु दैवेप्यर्घ्यं दद्यात्॥ देवेभ्योपि पृथग्दद्या
त्॥ देवेभ्योपि पृथग्दद्यादिहार्घ्यं श्रुतिचोदनादिति॥ शौनकोक्तेः॥ अथा
र्घ्यपात्रं॥ पृथ्वीचंद्रोदये मात्स्यपाद्मयोः॥ पात्रं वनस्पतिमयं तथा पर्णमयं पुनः॥ जलजं
वापि कुर्वीत तथा सागरसंभवं॥ ब्राह्मे॥ सौवर्णं ताम्ररौप्याश्मस्फाटिकं
शंखशुक्तयः॥ भिन्नान्यपि हि योज्यानि पात्राणि पितृकर्म्मणि॥ हेमाद्रौ प्रजा
पतिः॥ सौवर्णं राजतं ताम्रं खाङ्गं मणिमयं तथा॥ यज्ञियं चमसं वापि अ
र्घार्थं कल्पयेद्बुधः॥ अत्र विप्रैकत्वद्वित्वचतुष्टादावप्यर्घ्यपात्रे द्वे एव॥ मानवसूत्रे तु॥ दै
वे वैश्वदेविके त्रीणि पित्र्ये एकैकमुभयत्र वेत्युक्तम्॥ तदेकविप्रपरं पात्रालाभपरं वेति हेमा
द्रिः॥ मदनरत्ने तु दैवे एकं पात्रमुक्तं॥ पृथ्वीचंद्रोदयेपि
त्रीणि पैतृकपात्राणि द्वे द्वे वैश्वदेविक इति॥ बृहत्पराशरोक्तेर्द्वे एवेत्याह॥
बह्वृचानां तु दैवे विप्रद्वित्वेप्येकमर्घ्यपात्रमर्द्धशो दद्यादित्युक्तं परिशिष्टे प्रयोगपारिजाते
च॥ कलिकायां हारीतः॥ दत्तमक्षय्यतां याति खड्गेनार्
घ्यं तु यत्कृतं॥ वृद्धमनुः॥ मृण्मयं दारुजं पात्रमयःपात्रं च यद्भवेत्।
राजते दैविके कार्ये शिलापात्रं विवर्जयेत्॥ पुराणसमुच्चये मृन्मयं भवं तथा कांस्यमार
कूटं जतुसंभवं॥ त्रपुसीसलोहभवं सदा पात्रं विवर्जयेत्॥ तत्रैव॥ अ
ष्टांगुलं भवेत्पात्रं पितृणां राजतं शुभं॥ दशांगुलं तु देवानां सौवर्णं शक्तितः कृतं॥ स्थाप
येदर्घ्यपात्रे द्वे तु जलेन त्रकुशोपरि॥ द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत्॥ यज्ञपार्श्वः
पवित्रे स्थ इति मंत्रेण पवित्रे छेदयेत्तु ते॥ ओषधीमंतरे कृत्वा अंगुष्ठांगुलिपर्वणोः॥
स्फेन काष्ठेन लोहेन न मृण्मयनखादिभिः॥ वशिष्ठः॥ तूष्णीं प्रो
क्ष्यांभसा पात्रे कुर्यादूर्ध्वबिले ततः॥ हृदयेत्पात्रयुग्मं तु कृत्वोपरि पवित्रके॥ वृ
द्धपराशरः॥ पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः॥ प्राङ्मुखोमरतीर्थेन शन्नोदेव्योदकं
क्षिपेत्॥ यवोसीति यवांस्तत्र तूष्णीं पुष्पाणि चंदनं॥ मानवसूत्रे॥
सुमनसः प्रक्षिप्योत्पूयं यवान् प्रक्षिप्येति॥ यवोसीति मंत्रः पाद्मे॥ यवोसि धान्यराजो सिवा

रुणीमधुमिश्रितः॥ निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् रा जौवा वारुणीमधुसंपृत इति परिशिष्टपाठः॥ गोभिलेन तु॥ य वोसि सोमदेवत्य इति तिलमंत्रोत्र स्वाहा प्रयुक्त उक्तः॥ हेमाद्रौ यम॥ यवहस्तस्ततो देवान् विज्ञाप्यावाहनं प्रति॥ आवाहयेदनुज्ञातो विश्वेदेवा सहस्तु वा॥ वृद्धपराशरः॥ ततः सव्यकरं न्यस्य विप्रदक्षि णजानुनि॥ देवानावाहयिष्येहमिति वाचमुदीरयेत्॥ आ वाहयेत्यनुज्ञातो विश्वेदेवास आगत॥ विश्वेदेवाः शृणुतेममिति मंत्रद्वयं पठेत्॥ श्राद्धविशेषे विश्वेदेवानामाज्ञाने हेमाद्रौ बृहस्पतिः॥ उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः॥ अयमुच्चारणीयस्तैर्मंत्रः॥ श्रद्धासमन्वितैः॥ आगच्छंतु महाभागा विश्वेदेवा महाबलाः॥ ये पत्र विहिताः श्राद्धे सावधाना भवंतु ते॥ इदं चावाहनमर्घ्यपात्रासा दनात्॥ प्राक् हेमाद्रिणोक्तं॥ तत्र कात्यायनः आ वार्य्यं तत्रैव तत्स्त्रात्॥ अन्यैस्तदुत्तरम्॥ पृथ्वीचंद्रो दये शंखः॥ सयवं पुष्पमादाय चरणादिशिरोंतकं॥ अर्च नेत्पर्चनं कुर्यादंतरे चोदकं तथा॥ पित्र्ये तु मूर्द्धादिपादपर्यंतं पित्र्ये कार्य्यं तु पूजनं पादप्रभृति मूर्द्धांतं दैविके पूजनं भवेत्॥ शिरःप्रभृति पादांतं नमो व इति पैतृके॥ इति मदनरत्नेश्वचेत॥ सोक्तः॥ कालिकायां संग्रहे॥० तिष्ठन्कृतांजलिर्भूत्वा पठेन्मंत्रौ समाहितः॥ विश्वेदेवाः शृणुतेमा गच्छंत्वपरं ततः॥ हेमाद्रौ जा तूकर्ण्यः॥० ततोर्घ्यपात्रसंपत्तिं वाचयित्वा द्विजोत्तमान्॥ तदर्ये चार्घ्यपात्रं तु स्वाहार्घ्या॥ इति विन्यसेत् ४ गार्ग्यः॥ दत्वा हस्ते पवित्रं च कृत्वा पूजां च पादतः॥ यादिव्या इति मंत्रेण हस्ते त्वर्घ्यं विनिक्षिपेत्॥ संग्रहे॥ विश्वेदेवा इदं वो र्घ्यमिति दानं समादिशेत्॥० तदंते स्वाहा नमः॥ इति वा च्य॥ यादिव्या इति मंत्रेण स्वाहाकारनमोंतकमिति हेमाद्रौ नागरखं डात्॥ अथ वैणस्तेनुपाधमर्घ्यमाचमनीयमिति द्विजकरे निनयेदि त्यस्यैव त्रयमुक्तं॥ गभस्तिः॥ अर्घ्यं च पिंडप्रदा नं च स्वस्त्यक्षय्ये तथैव च॥ गंधपुष्पादिकं सर्वं हस्तेनैव तु दापये त्॥ प्रतिविप्रं यादिव्येमा इति॥ बह्वृचानां त्वनेनैवार्घ्या र्घ्यानुमंत्रणं॥ ततः पात्रं दक्षिणे देवेभ्यः॥ स्थान मसीति न्युब्जमुत्तानं वा कार्यमिति गारुड उक्तं॥ एतदापस्तंबानां

नियतमन्येषां न॥ हेमाद्रौ विष्णुधर्मे॥ गंधैः पुष्पै
श्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः॥ अर्चयेद्ब्राह्मणान् शक्त्या श्रद्दधानः
समाहितः॥ पृथ्वीचंद्रोदये मार्कंडेयः॥ चंदनागरुक
र्पूरकुंकुमानि प्रदापयेत्॥ विष्णुः॥ चंदनकुंकुमकर्पूरा
गरुपद्मकान्यनुलेपनार्थेति॥ व्यासः अपवित्रकरेण गंधै
र्गंधद्वारेति पूजयेत्॥ कालिकायां स्मृतिः॥ गंधद्वारेति वै गंध
मापनेति च पुष्पकं॥ धूरसीत्यमुना धूपं उद्दीप्यस्वेति दीपकं॥ युवं वस्त्रा
णि मंत्रेण वस्त्रं दद्यात्प्रयत्नतः॥ आसने स्वासनं ब्रूयात् अर्घ्ये स्व
र्घ्यं द्विजोत्तमः॥ सुगंधश्च सुपुष्पाणि सुमाल्यानि सुधूपकं॥ सु
ज्योतिश्चैव दीपे तु स्वाच्छादनमिति क्रमः॥ विप्राणां गंधेन वर्तुलं त्रि
पुंड्रं वा न कार्यं॥ हेमाद्रौ देवलः॥ ललाटे पुंड्रं
वर्तुलमित्यपरार्के॥ मदनरत्ने च॥ पुंड्रं त्रिपुंड्रं वर्तुलम
र्द्धचंद्रं च॥ ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्दै त्रिपुंड्रकं॥ ऊ
र्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि॥ निराशाः पितरो यांति
दृष्ट्वा चैव त्रिपुंड्रकमिति॥ वृद्धपराशरोक्तेः॥ तिर्य
क्लेपो भवत्येव वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा॥ तिर्यगू
र्ध्वं त्रिपुंड्रं वा धारयेत्तु प्रयत्नतः॥ इति व्यासोक्तेरिति पृथ्वीचंद्रः
पत्तु दृहन्नारदीये ऊर्ध्वपुंड्रं च तुलसीं श्राद्धे नेच्छंति केचनेति॥ तच्छ
न्त्रपरं॥ हेमाद्रौ ब्राह्मे॥ तिलकं मृगनाभिं च रोचनां
रक्तचंदनं॥ कालेयकं न्यग्गंधं तुरुष्कं चापि वर्जयेत् कस्तूर्यां विक
ल्पः॥ इति हेमाद्रिः॥ वृद्धशातातपः॥ प
वित्रं तु करे कृत्वा यः समालभते द्विजान्॥ राक्षसानां भवेच्छ्राद्धं नि
राशैः पितृभिर्गतैः॥ पुष्पं तु ब्राह्मे जाती चंपकलोध्रश्च म
ल्लिका बाणबर्बरी॥ चूताशोकाटरूषं च तुलसी शतपत्रकं॥
कुब्जकं तगरं चैव भृंगमारण्यकेतकी॥ यूथिकामतिमुक्तं च श्रा
द्धयोग्यानि भो द्विजाः॥ कमलं कुमुदं पद्मं पुंडरीकं च यत्नतः॥
इंदीवरं कोकनदं कह्लारं च निवेदयेत्॥ हेमाद्रौ वायुभविष्य
योः॥ सुकुमारैः किसलयैर्यवदूर्वांकुरैरपि॥ संपू
जनीयाः पितरः श्रेयःकामेन सर्वदा॥ स्कांदे॥ जात्यश्च स
र्वे दातव्या मल्लिकाश्वेतयूथिका॥ जलोद्भवानि सर्वाणि कुसु
मानि च चंपकं नत्रैव दृहमनुः॥ न निष्कृतः शिखा वर्जमासं शिरसि धारयेत्॥ वर्ज्या

निष्ठ्वीचंद्रोदयेभविष्ये।।केतकीतुलसीपत्रंबिल्वपत्रंचवर्जयेत्।।द्रोणांचकरवी
रंचधत्तूरंकिंशुकंतथा।। माधवीयेस्मृत्यर्थसारेचतुलसीनिषि
द्धा।। तुलसीनिषेधोनिर्मूलइतिहेमाद्रिः।। समूल
त्वेपिपिंडपरः।। तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः।। प्र
यांतिगरुडारूढास्तत्पदंचक्रपाणिनइतिप्रयोगपारिजातेयाज्ञोक्तेरितिवोपदेवः।।
बृहत्पराशरः।। नजातिकुसुमैर्विद्वान्बिल्वपत्रैस्तुनार्चयेत्।।
जयादिकुसुमंभिंडीरूपिकासकुरंटिका।। पुष्पाणिवर्ज्जनीया
निश्राद्धकर्म्मणिनित्यशः।। हेमाद्रौशंखः।। उग्रगंधी
न्यगंधीनिचैत्यवृक्षोद्भवानिच।। पुष्पाणिवर्जनीयानिरक्तवर्णा
नियानिच।। जलोद्भवानिदेयानिरक्तान्यपिविशेषतः।। चं
गिरा।। नजातिकुसुमानिदद्यान्नकदलीपत्रमिति।। जा
त्यांविकल्पइतिहेमाद्रिः।। निषेधःपिंडविषयः।। कुंदं
शंभोचनोदद्यान्नोअर्कंगरुडध्वजे।। पिंडेजातीचनोदद्याद्देवीमर्क
णानार्चयेत्।। इतिवृद्धयाज्ञवल्क्योक्तेरितिवोपदेवः।। स्मृ
तिसारे।। अगस्त्यंभृंगराजंचतुलसीशतपत्रकं।। चंपकं
तिलपुष्पंचषडेतेपितृवल्लभाः।। केतकीकरवीरंचबकुलंकुंदकंत
था।। पाटलांचैवजातींचश्राद्धेयत्नेनवर्जयेत्।।
केचित्पिंडेपितुलसीमाहुः।। पितृपिंडार्चनंश्राद्धेयैःकृतंतुलसीदलैः
प्रीणिताःपितरस्तैस्तुयावच्चंद्रार्कमेदिनीतिमार्कंडेयोक्तेः धूपस्तत्रै
वविष्णुधर्मे।। धूपस्तुगुग्गुलोदेयस्तथाचंदनसारजः।।
अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच।। विष्णुः।। घृतमधुयु
क्तंगुग्गुलुश्रीखंडदेवदारुसरलादिदद्यादिति।। तत्रैवदेवलः।। येहि
प्राणिगजाधूपाहस्तवानाहृतास्त्वये।। नतेश्राद्धेनियोक्तव्यायेचकेचिच्च
गंधयः।। घृतंचकेवलंदद्याद्दुष्टंवात्रणगुग्गुलं।। दीप
माहविष्णुः।। घृतेनदीपोदातव्यस्तिलतैलेनवापुनः।।
वसामेदोद्भवंदीपंप्रयत्नेनविवर्जयेत्।। वस्त्रंब्राह्मे।।
कौशेयंक्षौमकार्पासंदुकूलमहतंतथा।। श्राद्धेष्वेतानियोदद्यात्
मानाप्नोतिचोत्तमान्।। हेमाद्रौब्रह्मवैवर्त्ते।। यज्ञोप
वीतंदातव्यंवस्त्राभावेविजानता।। पितृभ्योवस्त्रदानस्यफलंतेनाप्नु
तेखिलं।। तत्रैवयामे।। निष्क्रयोवायथाशक्तिवस्त्राभावेप्र
दीयते।।अन्यान्यपिचदेयानितत्रैवकालिकापुराणे।।धात्वादिनिर्मितारम्यादीपि

कांश्राद्धकर्मणि॥ पितॄनुद्दिश्य यो दद्यात्स भवेद्भ्राजनं श्रियः॥ यो धूपदानपात्रं तु पात्रं भारार्त्रिकस्य च॥ दद्यात्पितृभ्यः प्रयतः स स्वर्गे स्थापागतिः॥ विष्णुधर्मे॥ यः कंचुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत्॥ ज्वरो भवति दुःखानि स कदाचिन्न पश्यति॥ स्त्रीणां श्राद्धे तु सिंदूरं दद्युश्चांजनकानि च॥ निमंत्रिताभ्यः स्त्रीभ्यो ये ते स्युः सौभाग्यसंयुताः॥ हेमाद्रावादित्यपुराणे॥ न कृष्णवर्णादातव्यं नापि कार्पाससंभवं॥ पितृभ्यो नापि मलिनं न्नोपयुक्तं कदाचन॥ नच्छिद्रितं नापदशं न धौतं कारुणापि च॥ कार्पासनिषेधोन्यसंभवे॥ तत्रैव॥ पितॄनुद्दिश्य वासोभिर्दद्याद्यज्ञोपवीतकं॥ यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलं॥ एतद्यतिस्त्रीशूद्रश्राद्धेष्वपि देयमिति हेमाद्रिः॥ तत्रैव नृसिंहपुराणे॥ कमंडलुं ताम्रमयं श्राद्धेषु प्रददाति यः॥ काष्ठेन निर्मितं वापि नारिकेलमयं तथापि वा॥ दद्यात्कमंडलुं श्राद्धे स श्रीमानभिजायते॥ यो मृत्तिकाविरचितान्श्राद्धेषु च घटान्शुभान्॥ प्रदद्यात्करकान्वापि सोक्षयं विंदते सुखं॥ तत्रैव॥ उपानच्छत्रवस्त्राणि भुक्तिपात्रं कमंडलुं॥ शयनाशनयानादि दर्पणव्यजनानि च॥ अन्नं सुसंस्कृतं गंधांस्तांबूलं दीपचामरं॥ पितृभ्यो यः प्रयच्छेत्तु विष्णुलोकं स गच्छति॥ सौरपुराणे॥ चामरं तालवृंतं च श्वेतच्छत्रं च दर्पणं॥ दत्वा पितॄणामेतानि भूमिपालो भवेदिह॥ तत्रैव नंदिपुराणे॥ अलंकाराः प्रदातव्या यथाशक्ति हिरण्मयाः॥ केयूरहारकटकमुद्रिकाकुंडलादयः॥ स्त्रीश्राद्धेषु प्रदेयाः स्युरलंकारास्तु योषितां॥ मंजीरमेखलादामकर्णिकाकंकणादयः॥ तथा॥ आदर्शव्यजनं छत्रं शयनाशनपादुकाः॥ मनोज्ञाः पटवासाश्च सुगंधाश्चूर्णमुष्टयः॥ अंगारधानिकाः शीतियोगपट्टाश्च यष्टयः॥ कटिसूत्राणि रौप्याणि मेखलाश्चैव कंबलाः॥ कर्पूरादेश्च भांडानि तांबूलाधारभाजनं तथा॥ भोजनाधारपात्राणि पतद्ग्राहास्तथैव च॥ तथांजनशलाकाश्च केशानां च प्रसाधनम्॥ एतान्दद्यात्तु यः सम्यक् सोश्वमेधफलं लभेत्॥ स्कांदे सौवर्णं राजतं वापि कांस्यं नाप्यथ निर्मितं॥ दत्वा भोजनपात्रं तु सम्राट् भवति भूतले॥ वामनपुराणे॥ वंदीकृतास्तु ये केचित्स्वयं वा परद्विषा परैः॥ येन केनाप्युपायेन यस्तान्मोचयते नरः॥ पितरस्तस्य गच्छंति शाश्वतं पदमव्ययं॥ पराशरः॥ वाचयेत्तु द्विजश्रेष्ठान्द्विवासो दत्वा विधानतः॥ नारदीये॥ दैवेष्वसमनुज्ञातो यो यजेत्पितृगणांस्तथा॥ तत्र पित्र्ये आसनाद्यर्घ्यसमर्चनकांडं वैश्वदेविकं ज्ञेयं॥ विशेषस्तूच्यते॥ तत्रासने द्विगुणाभु

याःकुशाः॥ अत्रावाहनमासनात्पूर्वंवाऽर्घ्यस्मरणोत्तरंवाऽग्नौकरणोत्तरंवेतित्रि
षुपक्षाउक्ताः॥ एषांशाखाभेदेनव्यवस्था॥ द्वितीयपक्षस्तु
बहुसंमतः॥ तत्रार्घ्यमाहाश्वलायनः॥ तैजसाश्ममयमृण्मयेषु
त्रिषुपात्रेष्वेकद्रव्येषुवादर्भान्तर्हितेष्वपः॥ शन्नोदेवीरभीष्टयइत्य
नुमंत्र्यतिलानावपतितिलोसिसोमदेवत्योगोसवोदेवनिर्मितः॥ प्रत्नवद्भि
प्रत्तःस्वधयापितॄनिमाँल्लोकान्प्रीणयाहिनःस्वधानमइति॥ अश्म
मयंस्फाटिकादि॥ मृन्मयंहस्तकृतमेव॥ कुलालचक्रनिष्पन्न
मासुरंदैविकंततः॥ तदेवहस्तघटितंदैविकंकेवलंतथेतिछंदोगपरिशिष्टा
त्॥ अन्यान्यपिपात्राणिहेवमुक्तानि॥ मनुः॥ अन्नाभावे
द्विजाभावेयद्येकोब्राह्मणोभवेत्॥ पात्राण्यासादयेत्त्रीणितुब्राह्मणसं
ख्यया॥ दत्तकादेःकर्तुर्द्विपितृत्वादावपिवचनात्त्रीण्येवपात्राणीतिहरिह
रः॥ माधवीयेवैजवापः॥ अर्घ्येपितॄणांत्रीण्येवकुर्या
त्पात्राणिधर्मवित्॥ एकस्मिन्वाबहुषुवाब्राह्मणेषुयथाविधि॥
हेमाद्रावप्येवं॥ अत्रानुमंत्रणंसकृत्॥ तिलोसीत्यस्यप्रतिपा
त्रमावृत्तिः॥ पितृशब्दस्योहश्चेतिवृत्तिकृत्॥ दर्भश्चत्रिगुणंपवि
त्रम्॥ तिस्रःतिस्रःशलाकास्तुपितृपात्रेषुपार्वणे॥ एकोद्दि
ष्टेशलाकैकांनिधायोदकमाहरेत्॥ इतिहेमाद्रौचतुर्विंशतिमतात्॥
तत्रैवविष्णुः॥ दक्षिणाग्रेषुदर्भेषुदक्षिणापवर्गचमसेषुपवित्रांतर्हितेष्वपआसि
चेच्छन्नोदेवीरितिमंत्रेणजलासेचनंत्वच्चभिन्नविषयंअस्मिन्पक्षेप्रतिपात्रंमंत्रावृ
त्तिः॥ कारिकायां॥ गंधपुष्पाणिचैतेषुपात्रेषुप्रक्षिपेत्तथा॥
ब्राह्मे॥ जलंक्षीरंदधिघृतंतिलतंडुलसर्षपान्॥ कुशाग्रमधुपु
ष्पाणिदत्त्वावामेततःस्वयम्॥ जातूकर्ण्यः॥ ततोर्घ्यपात्रसंपत्तिं
वाचयित्वाद्विजोत्तमान्॥ तदग्रेचार्घ्यपात्राणिस्वधार्घ्याइतिविन्यसेत्॥
ततस्तिलहस्तोविप्रसव्यजानोर्दक्षिणाकारस्यावाहनंप्रच्छेत्॥ अत्रगो
त्रसंबंधनामानिद्वितीयांतत्वंचप्रागुक्तं॥ वैजवापगृह्ये॥ ति
ष्ठन्पितॄनावाहयिष्यामीत्यामंत्र्य॥ कौर्मे अपसव्यंततःकृत्वापितॄणांद
क्षिणामुखः॥ आवाहनंततःकुर्यादुशंतस्त्वेत्यृचाबुधः॥ आ
वाह्यतदनुज्ञातोजपेदायंतुनस्ततः॥ अत्रसव्यस्यापिप्रागुक्तोविकल्पः॥ अ
त्रापिमंत्रादावस्मत्पितरममुकशर्माणममुकगोत्रंवसुरूपमावाहयामीत्याद्यूह्यमूर्धा
द्यापादांतंतिलान्विकीर्यायंतुनइतिसर्वांतेसकृज्जपेदितिनिबंधाः॥ अत्रो
पवेशनसंदेशनयोरर्घ्याचमनीयान्यपिहेमाद्रिणोक्तानि॥तान्यथर्ववेदिनांनियता

तितान्येषाम्॥ तेषां च प्रपितामहादिपित्रं तं प्रातिलोम्येन सर्वः प्रयोगः॥ वाराहे॥ गंधपुष्पा
र्चनं कृत्वा दद्याद्धस्ते तिलोदकं॥ गार्ग्यः॥ शिरस्तः पादतो वापि
सम्यगभ्यर्चयेत्ततः॥ ततः स्वधार्घ्या इति पितृपितामहादिविप्रायेप्रत्येकं नि
वेदयेदिति कारिकायां हेमाद्रौ च॥ आश्वलायनः॥ अपसव्येन त
र्पणं शुंधंतां तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं तेऽर्घ्यं पिताम
हेदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यमित्यपः स्रवंताः प्रतिग्राहयिष्यान्सकृत्सकृत्स्वधाऽर्घ्या इति
स्तुति स्वनुस्रष्टास्वनुमंत्रयीत या दिव्या आपः पृथिव्या संब
भूवुर्या अंतरिक्षा उत पार्थिवीर्याः॥ हिरण्यवर्णा यज्ञियास्तान आपः
शंस्योना भवंत्विति॥ अर्घ्यादिप्रागंधादेर्यज्ञोपवीतमेव॥ अ
र्घ्यदानात्प्रागमात्रयोदद्यात्॥ यद्यप्यत्र सव्येन दक्षिणेन वार्घ्यं दद्यादित्यु
क्तं॥ तथापि दक्षिणेनेत्यभिमतोऽर्थः॥ कारिकायां हेमाद्रौ चैवम्
पित्रादेस्त्रिभिः पात्रैर्दद्यात्॥ पितुः स्थाने विप्रत्रयं चेत् एकार्घ्यं वि
भज्य दद्यात्॥ त्रयाणां स्वधार्घ्या इति सकृन्निवेदनं॥ एवं पिता॥
महादावपि॥ अन्यजलदानमर्घ्यमंत्राश्च प्रतिविप्रमावर्तंते॥ तेषु
गंधादौ च प्रतिविप्रं पदार्थानुसमयः कांडानुसमयो वा॥ पित्रादित्रया
णामेकविप्रपक्षे त्रिभिः पात्रैरेकस्यैवार्घ्यं दद्यादिति वृत्तिः॥ कारिकापि॥
स्वधार्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत्॥ विवेदनात्प्राक् प्राचीनावी
तमेवेत्यर्थः॥ अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना॥
सव्यहस्तगृहीतेन निनयेत्पितृतीर्थतः॥ दत्वा दत्वा निनीतास्ता या दि
व्या चानुमंत्रयेत्॥ यत्तु॥ या दिव्या इति मंत्रेण हस्तेष्वर्घ्यं विनिक्षि
पेत्॥ इति॥ यच्च वाराहे॥ तिलांबुना चापसव्यं दद्या
दर्घ्यादिकं द्विज इति॥ यच्च व्यासः गोत्रसंबंधना
मानि पि तृणामनुकीर्तयन्॥ एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनि
क्षिपेत्॥ इति॥ तद्बह्वृचातिरिक्तविषयं॥ तत आचामेत्॥
एवं मातामहेष्वपि॥ आश्वलायनः॥ संस्रवान्समवनीय तता॥
भिरद्भिः पुत्रकामो मुखमनक्ति संस्रवः॥ शेषः॥ संस्रवो हि परिशिष्टो भवतीति
शतपथश्रुतेः॥ केचित्तु हस्तगलितं बुवदंति॥ समवनीयान्यैर्दे
पात्रे पितृपात्रे आसिंचेदिति वृत्तिः॥ प्रथमे पात्रे संस्रवान्समवनीयेति का
तीयसूत्राच्च॥ ब्राह्मेतु॥ प्रतिबिंबावलोकनमुक्तं
स्कांदे॥ आयुःकामस्य नेत्रासेचनमुक्तं॥ पित्र्ये विप्रैः प्राङ्मु
खस्य कर्तुरभिषेकः कार्य इति केचित्॥ आश्वलायनः नोद्धरेत्प्र

ग्राः कुशाः॥ अत्रावाहनमासनात्पूर्वं वार्घ्यक्षरणोत्तरं वाग्नौकरणोत्तरं वेति स्म
तिषु पक्षा उक्ताः॥ एषां शाखाभेदेन व्यवस्था॥ द्वितीयपक्षस्तु
बहुसंमतः॥ तत्रार्घ्यमाहाश्वलायनः॥ तैजसाश्ममयमृण्मयेषु
त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भांतर्हितेष्वपः॥ शन्नोदेवीरभीष्टय इत्य
नुमंत्र्य तिलानावपति तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः॥ प्रत्नवद्भिः
प्रत्तः स्वधया पितॄनिमांल्लोकान्प्रीणयाहि नः स्वधा नम इति॥ अश्म
मयं स्फाटिकादि॥ मृन्मयं हस्तघटितमेव॥ कुलालचक्रनिष्पन्न
मासुरं दैविकं न तत्॥ तदेव हस्तघटितं दैविकं केवलं तथेति छंदोगपरिशिष्ट
त्॥ अन्यान्यपि पात्राणि स्मृत्युक्तानि॥ मनुः॥ अन्नाभावे
द्विजाभावे यद्येको ब्राह्मणो भवेत्॥ पात्राण्यासादयेत्त्रीणि तु ब्राह्मणस्
स्य या॥ दत्तकादेः कर्तुर्द्विपितृत्वादावपि वचनात्त्रीण्येव पात्राणीति हरिह
रः॥ माधवीये वैजवापः॥ अर्घ्ये पितॄणां त्रीण्येव कुर्या
त्पात्राणि धर्मवित्॥ एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि॥
हेमाद्रावप्येवं॥ अत्रानुमंत्रणं सकृत्॥ तिलोसीत्यस्य प्रतिपा
त्रमावृत्तिः॥ पितृशब्दस्यानूहश्चेति त्रिस्थलीत्॥ दर्भाश्च त्रिगुणाः पवि
त्रम्॥ तिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पावने॥ एको
द्दिष्टे शलाकैकां निधायोदकमाहरेत्॥ इति हेमाद्रौ चतुर्विंशतिमतात्॥
तत्रैव विष्णुः॥ दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गं चमसेषु पवित्रांतर्हितेष्वपः आसि
चेच्छन्नोदेवीरिति मंत्रेण जलासेचनं त्वेकं च भिन्नविषयं अस्मिन्पक्षे प्रतिपात्रं मंत्रावृ
त्तिः॥ कारिकायां॥ गंधपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ॥
त्राहो॥ जलं क्षीरं दधि घृतं तिलतंडुलसर्षपान्॥ कुशाग्रमधुपु
ष्पाणि दत्वा वामे ततः स्वयम्॥ जानूकार्यः॥ ततोर्घ्यपात्रसंपत्तिं
वाचयित्वा द्विजोत्तमान्॥ तदग्रे वार्घ्यपात्राणि स्वधार्घा इति विन्यसेत्॥
ततस्तिलहस्तो विप्रसव्यजानोर्दक्षिणां करं न्यस्यावाहनं इच्छेत्॥ अत्र गो
त्रसंबंधनामानि द्वितीयांतत्वं च प्रागुक्तं॥ वैजवापगृह्ये॥ ति
ष्ठन्नू पितॄनावाहयिष्यामीत्यामंत्र्य॥ कौर्मे अपसव्यं ततः कृत्वा पितॄणां द
क्षिणामुखः॥ आवाहनं ततः कुर्यादुशंतस्त्वेति चाबुधः॥ आ
वाह्य तदनुज्ञातो जपेदायंतु नस्ततः॥ अत्र सव्यस्यापि प्रागुक्तो विकल्पः॥ अ
त्राद्यमंत्रादस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपमावाहयामीत्याद्युक्त्वा मूर्धा
दिपादांतं तिलान्विकीर्यायंतु न इति सर्वांते सकृज्जपेदिति निबंधाः॥ अत्रो
त्तेशानसंदेशनयोर्घार्घ्याचमनीयान्यपि हेमाद्रिणोक्तानि॥ तान्यथर्ववेदिनां नियता

तिरस्समन्नस्यमंडलेनविवर्जितं॥ हेमाद्रौहारीतः॥ भूमावेवनि
दध्यान्नोपरिपात्राणीति॥ तानितुहेमाद्रावत्रिराह॥ भोजनेहैम
रौप्याणिदैवेपित्र्येयथाक्रमम्॥ हारीतः॥ राजतपार्णताम्रकांस्य
पात्राणिभोजनेइति॥ अन्यान्यपिहेमाद्रावत्रिराह॥ सौवर्णानी
हरौप्याणिकांस्यानितदसंभवे॥ अन्यान्यपिहिकार्याणिदारुजान्य
पिजानता॥ नायसान्यपिकार्याणियेत्रलानिनतुक्वचित्॥ न
चसीसमयानीहशस्यंतेत्रपुजान्यपि॥ अत्रिः॥ पंचाशत्पलिकंकां
स्यंह्यधिकंभोजनायवै॥ गृहस्थैस्तुसदाकार्यमभावेहेमरौप्ययोः॥
पालाशेभ्योविनानस्युःपर्णपात्राणिभोजने॥ पृथ्वीचंद्रस्तु॥ कां
स्यपात्रेहविर्दृष्ट्वानिराशाःपितरोगताइतिब्रह्मोक्तेः॥ कांस्यपात्रनिषेधमा
ह॥ वोपदेवस्तुस्मृतिसंग्रहमुदाजहार॥ श्राद्धेपलाशपात्राणि
मधूकोदुंबराणिच॥ पारिकाकुटजप्लक्षकाकचानिक्रमाज्जगुः॥
कदलीचूतपनसजंबुपुन्नागचंपकाः॥ अलाभेमुख्यपात्राणांग्राह्याः
स्युःपितृकर्मणीति॥ हेमाद्रौतुकदलीपत्रनिषेधमाहांगिराः॥
नजातीकुसुमानिदद्यान्नकदलीपत्रमिति॥ क्रतुः॥ असुराणांकुले
जातारंभास्वर्वपरिग्रहः॥ तस्यादर्शनमात्रेणनिराशाःपितरोगताः॥
एवंपात्राण्यासाद्यभस्ममर्यादांकृत्वाविप्रहस्तशोधनंकुर्यात्॥ तत्रापिशं
गरक्षार्णोइतिमंत्रद्वयंकेचित्पठंति॥ मात्स्येअकृत्वाभस्ममर्यादांयःकुर्या
त्पाणिशोधनं॥ आसुरंतद्भवेच्छ्राद्धंपितृणांनोपतिष्ठते॥ तत्रैवब्र
ह्मांडे॥ प्रक्षाल्यहस्तपात्रादिपश्चाद्भिर्विधानवत्॥ प्रक्षालनज
लंदर्भैस्तिलैर्मिश्रंक्षिपेच्छुचौ॥ मंडलोपरीतिहेमाद्रिः॥ अथा
ग्नौकरणम्॥ हेमाद्रौमार्कंडेयः॥ आहिताग्निस्तुजुहुयाद्दक्षि
णाग्नौसमाहितः॥ अनाहिताग्निश्चौपासनेअग्न्यभावेद्विजेप्सु वा॥ वा
यवीये॥ आहृत्यदक्षिणाग्निंतुहोमार्थंवैप्रयत्नतः॥ अग्न्यर्थेलौकि
कंवापिजुहुयात्कर्मसिद्धये॥ आहिताग्निःसर्वाधानी॥ अर्द्धाधा
नीतुगृह्येग्नावेवेतिचंद्रिका॥ परार्कमिताक्षरामाधवादयः॥ तस्यापिदक्षिणा
ग्नौ॥ लौकिकोगृह्यइतिहेमाद्रिः॥ कल्पतरुश्च॥ आद्यपक्षएवतुयुक्तः
बहुसंमतश्च॥ यद्यपिस्मार्तमग्नौकरणंश्रौतेदक्षिणाग्नौनयुक्तं॥ तथापिवच
नाद्भवतीतिहेमाद्रिचंद्रिकादयः॥ इदंदर्शश्राद्धएव॥ आद्यिकादिषुतुस
र्वाधानीयाग्नौअर्द्धाधानीगृह्येकुर्यादिति॥ हेमाद्रिर्माधवश्च॥ पक्षांतकर्मनिर्वर्त्य
वैश्वदेवंचसाग्निकः॥ पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति॥ लोगाक्ष्यादिभिःक्र

प्रथमंपात्रंपितॄणामर्घ्यपातितं॥ आरतास्तत्र तिष्ठंतिपितरःशौनकोब्रवीत्॥
यावद्विप्रविसर्जनमितितुर्यपादेपाठः॥ अत्रिः॥
पितृपात्रंसमुत्तानयन्नदेशान्नचालयेदाश्राद्धसमाप्तेः॥० यस्मात्तत्रवनीयपा
त्रेणाश्नाति॥ यद्वाप्रथमपात्रमेवन्युब्जंकुर्यादिति॥ कामा
भावेपीदमेवशेषप्रतिपादनं॥ हेमाद्रौकौर्मे॥ संस्रवांश्चततःसर्वान्पात्रे
कुर्यात्समाहितः॥ पितृभ्यःस्थानमसीतिन्युब्जपात्रंनिधापयेत्॥ अ
लपाणीयमस्तु॥ येनेकंप्रथमंपात्रंतस्मिन्पैतामहंन्यसेत्॥ प्र
पितामहंततोन्यस्यनोद्धरेन्नचचालयेदित्याह॥ अथसंस्रवानानीयतृती
येनाच्छाद्यन्युब्जीकुर्यादितिसर्वैकवाक्यतयार्थइतिकेचित्॥ अत्रिःगंधा
दिभिस्तदभ्यर्च्यतृतीयेनापिधापयेत्॥ पितृभ्यःस्थानमसीतिप्रचेतोदेशेर्च
तेर्चयेत्॥ अर्चनंन्युब्जीकृतेपितुस्तं॥ न्युब्जमुत्तरतोन्यसेदिति
प्रचेतसोक्तेः॥ सर्वविप्रोत्तरतोन्यसेदितिहेमाद्रिकल्पतरू॥ वि
प्रवामेइतिहलायुधः॥ कर्तुर्वामेइतिशूलपाणिः॥ उत्तानंविवृतं
वापिपितृपात्रेनतद्भवेदितिउशनसोक्तेर्न्युब्जनेवसाधुः॥ मातामहादि
संस्रवानपिपितृपात्रएवगृहीत्वाप्रयाजवत्तंत्रेणन्युब्जीकुर्यादितिशूलपाणिः॥
एकोद्दिष्टेतूहेनन्युब्जीनेतिपितृभक्तौश्रीदत्तः॥ यमोपिस्यपृष्टमुत्तानम
न्यत्रनीतिमुद्धाटितंतथा॥ पात्रेदृष्ट्वाव्रजंत्याशुपितरस्तंशपंतिच॥
वैश्वदेवेउत्तानमितिमदनपारिजातः॥ वैजवापः॥ तस्योपरिकु
शान्दत्वाप्रदद्याद्देवपूर्वकं॥ गंधपुष्पाणिधूपंचदीपवस्त्रोपवीतके॥
अत्रगंधादेर्दैवेपित्र्येचपदार्थानुसमयस्ययाज्ञवल्क्येनकांडानुसमयेनविकल्पोज्ञे
यः॥ बह्वृचानांतुसूत्रेदेवानुक्तेःकांडानुसमयएव॥ अत्रप्रा
चीनावीतिनामगोत्रसंबुध्याद्युक्तंप्राक्॥ अन्यद्देववत्॥ गंधं
तेष्वाचमनंच॥ हेमाद्रौकालिकापुराणे॥ निर्वर्त्यब्राह्म
णादेशात्क्रियामेवंयथाविधि॥ भाजनानिततोदद्यात्स्वशोचंपुनःक्र
मात्॥ आदेशान्मात्राणिदद्यादित्यन्वयः॥ तेनतत्रापिप्रश्नोनुज्ञे
ज्ञेये॥ तत्रैवब्राह्मे॥ मंडलानिचकार्याणिनैवारेचूर्णकैः
शुभैः॥ गौरमृत्तिकयावापिभस्मनागोमयेनवा॥ भृगुः॥ भ
स्मनावारिणावापिकारयेन्मंडलंततः॥ चतुःकोणंद्विजाग्र्यस्यत्रिकोणंक्षत्रि
यस्यतु॥ मंडलाकृतिवैश्यस्यशूद्रस्याभ्युक्षणंस्मृतं॥ बह्वृचप
रिशिष्टेतुदेवेचतुरस्रंपित्र्येवर्तुलंमंडलंकृत्वाक्रमेणसयवान्सतिलांश्चदर्भान्दद्या
दित्युक्तं॥ मार्कंडेयः॥यातुधानाःपिशाचाश्चक्रूराएवचैवराक्षसाः॥ हरं

उद्ध्रियतामग्नौचक्रियतामित्यामंत्रयतेकाममुद्धीयतांकाममग्नौचक्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ नष्टाग्निविधुरादेर्विशेषोबृहन्नारदीये॥ नष्टाग्निर्दू
रभार्य्यश्चपार्वणेसमुपस्थिते॥ संधायाग्निंततोहोमंकृत्वातंविसृजेत्पुनः॥
अपाश्चेतितत्कालेग्निंसंधायहुत्वात्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥ पा
णिहोमस्तुछंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासनेनाऽ
ग्नौकुर्वीतलौकिके॥ पाणौहोमंप्रशंसंतितत्त्वापस्तंबशाखिनां॥
स्नातकाविधुरावास्युर्यदिवाब्रह्मचारिणः॥ अग्नौकरणहोमंतुकुर्युस्तेलौ
किकेनले॥ अथाश्वायेमनोऽत्रोतिरुद्धुष्यव्याहृतीर्हुनेत्॥ ततोनु
ज्ञातोग्नौधनाधाज्यभागांतेयन्मेमातेत्याद्यैर्जुहुयात्॥ तत्रसप्तान्त्याहुतयः
षडाज्यस्येतित्रयोदश॥ व्यत्ययोवा॥ यथायन्मेमाताप्रलुलो
भतन्मेरेतः पितावृंक्तांयास्मिंस्तीतिद्वाभ्यांअमुष्मैस्वाहेतिपितुर्नाम्नाद्वौहोमौ
॥यन्मेपितामहीप्रलुलोभतन्मेरेतःपितामहोवृंक्तांअंतर्दधेइतितन्नाम्नापितामहायद्वौ
यन्मेप्रपितामहीतन्मेरेतःप्रपितामहोवृंक्तांअंतर्दधेऋतुभिरितितन्नाम्नाप्रपितामहाय
द्वौ॥ मातामहेषुतूहः॥ यन्मेमातामहीतन्मेमातामहोवृंक्ताम्॥
अन्यंमातामहाद्दद्मित्याद्यौ॥ यन्मेमातुःपितामहीप्रलु०रेतोमातुःपितामहो
वृंक्तां॥अन्यंमातुःपितामहाद्दद्म्॥ यन्मेमातुःप्रपितामहीप्रलु०रेतोमातुःप्रपिता
महोवृंक्तां॥ अन्यंमातुःप्रपितामहाद्दद्म्॥ सर्वत्रामुष्याइत्यत्रङें॰तंत
न्नामयोज्यं॥ तद्गृह्यसंग्रहे॥ योऽयंपित्रादिशब्दानांस्थानेमाता
महादिकः॥ अग्नौहोमेतथास्पर्शेजलपिंडादिदानके॥ यन्मेमाताम
हीत्यादितःस्त्रीदाहरणंभवेत्॥ ततोपिचेहैत्येकान्नाहुतिः॥ ततःस्वा
हापित्रेइत्याधेराज्यंहुत्वास्विष्टकृतंहुत्वासर्वभक्ष्यंकिंचिदादायदध्युद्घंभस्मापोह्यतत्तू
ष्णींस्वाहाकारेणजुहोति॥ परिषेचनंतस्थालीपाकवत्॥ अ
यमग्नौकरणहोमोमासिकश्राद्धएव॥ तच्च॥स्मार्ताग्न्यभावेनकार्यमितिकेचित्॥
कार्यमेवेतिबहवः॥ अतएवसर्वाधानिनोहोमवर्जंमासिश्राद्धमुक्तंसुदर्शनभा
ष्ये॥ महालयेतद्दित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेनस्मार्तेऽपा
र्वणवत्कार्यमितित्वस्मद्गुरवः॥ आह्निकादिषुतुस्मार्तेपार्वणविधिरेव॥
एवंमातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायांमातृश्राद्धेवैकृतहोमेन
प्राकृतहोमबाधः॥अन्वष्टकासुमातृश्राद्धंनेतिभाष्ये॥तत्रापिश्राद्धांतरवत्क्रिया
माणेतुयन्मेमातेत्यादौगुणत्वेपिमातृप्राधान्यंविवक्षितं॥मासिश्राद्धेनकल्पोव्याख्या
तइतिसूत्रात्॥आग्नेय्येवमतोनाकार्येतिवचनादग्निशब्दस्यैववैकृतदेवताभिधायि
त्वम्॥तेनामुष्याइत्यत्रामुकशर्मभ्यांपितृभ्यामित्याद्यूहःकार्यः॥तच्चमासिश्राद्धंजीव

मोक्तोर्विह्नतद्क्षिणाग्निसत्वात्॥ अतएवात्रवचनेसाग्निकः॥ आहिताग्नि
क्तो हेमाद्रिणा॥ एतदायसंवादीनामेव॥ आश्वलायनस्याहिताग्नेःपार्व
णेवेतिवृत्तिः॥ अर्द्धाधानिनः गृह्येएवव्यतिषंगेणेतिप्रयोगपारिजातेपरिशिष्टेच॥
बोपदेवस्त्वाह॥ होमशेषःपिंडपितृयज्ञपरः॥ पितृयज्ञेतुजुहुयाद्दक्षिणा
ग्नौसमाहितः॥ श्राद्धेत्वौपासनाग्नौतुनिरग्निर्लौकिकेनले॥ अनग्निर्दूर
भार्यश्चपार्वणेसमुपस्थिते॥ संधायाग्नितःकुर्यात्होमममग्निमुत्सृजेदितित्रिकांड
मंडनोक्तेः॥ दर्शश्राद्धेगृह्याग्नावेवेतिलौकिकाग्न्यादिविधानंवनेतृतीयादिविषयम्
षट्चस्त्वनग्नेरपिपाणिहोमएव॥ अग्निपाणीविनासूत्रेविधानात्तदुक्त
मेः॥ दर्शश्राद्धेगृ॥ अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेदितिमनूक्तेश्च
॥एवंतावदेवम्॥ क्वचित्साग्नेरपिपाणिहोमउक्तोगृह्यपरिशिष्टे॥
अन्वष्टक्यंचपूर्वेद्युर्मासीनांवन्हौहोमोविधीयते॥ पित्र्यब्राह्मणहस्तेस्यादु
त्तरेषुचतुर्ष्वपीति॥ एकोद्दिष्टसपिंडीकरणेशुद्धेतन्निषेधात्
बह्वृचभाष्यकारास्तुसर्वैकोद्दिष्टेषुपाणिहोममाहुः॥ इदंबह्वृचानामेव।
अन्येरतत्वे॥ स्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसूत्रेनात्रापूर्वः॥
स्थालीपाकश्चोद्यते॥ सर्वश्राद्धेषुप्रसंगात्॥ तेनानुवादोयमि
तिवृत्तिकारोक्तेः॥ पार्वणेआर्थिकस्यानंगस्यव्यतिषंगस्यवार्षिकादिष्वि
नतिदेशादर्द्धाधानिनोपिपाणिहोमएवेतिवृत्तिसारसः॥ एवंमासिकाद
वपि॥ षोडशेमासिकेश्राद्धेसपिंडीकरणेतथा पाणावेवतुहोत
व्यमन्यत्राग्नौतुहूयते॥ इतिबोपदेवोदाहृतवचनाच्च॥ भाष्यका
रमतेतु॥ सूत्रेस्थालीपाकेनेतिकरणत्वान्नित्यवच्छ वणाच्च
पार्वणांगम् अतःकाम्यादिषुतदभावेकार्यस्यपिंडदानस्याप्यभावः॥
एतदेवानुसृत्यविज्ञतावपिवार्षिकादौव्यतिषंगउक्तः॥ प्रयोगपारिजातेपरिशि
ष्टेच॥ तेनैतन्मतेऽर्द्धाधानिनोऽग्नावेव॥ वस्तुतस्तुस्थालीपाके
नसहशाखपाप्रसरंप्रहरतीतिवत्सहभावमात्रश्रुतेः पत्नीवतेत्यत्रत्विवोपलक्ष
णमिवनांगत्वम्॥ नत्वेचानांगानुरोधेनप्रधानभूतपिंडदानत्यागोयुक्तः॥
तेनव्यतिषंगाभावेप्यग्नौहोमोभवतीतिबोपदेवः॥ अनाहिताग्नेर्गृह्याग्निमत
स्तुसर्वमतेऽग्नावेव॥ वार्षिकादौवृत्तिमतेव्यतिषंगोनअन्यमतेत्वस्ति॥
अत्रयथाचारमनुष्ठेयं॥ आश्वलायनः॥ उद्धृतघृतान्नमन्नमनुज्ञापयत्य
ग्नौहोमोभवतिकरिष्येकरवैकरवाणीतिवाप्रत्यभ्यनुज्ञाक्रियतांकुरुष्वकुर्वित्यथाग्नौ
जुहोतियथोक्तंपुरस्तादिति॥ व्यतिषंगपक्षेइदमितिवृत्तिः॥
करवैकरवाणीत्यत्राग्नावित्यनुषंगः॥पुरस्तात्पिंडपितृयज्ञे॥तच्चैवम्॥मेक्षणेनाधा

नम इतिस्वाहाकारेणवाग्निंसर्वेयज्ञोपवीतीमेक्षणमनुप्रहृत्येति॥ अवदानसंपदाउ
पस्तरणाद्यएवेत्यर्थः॥ अनुषंगपक्षेऽतिप्रणीतेयंहोमोन्यथामुख्यो॥ अ
तिप्रणीतेऽग्न्याविधामुपसमाधायेतिबह्वृचपरिशिष्टात्॥ केचित्तस्यरक्षोनिवर्ह
णार्थत्वान्मुख्यमेववदंति॥ तदेतद्विरोधाच्चिंत्यं॥ प्रयोगपारिजातेप्येवं॥ शौ
नकः॥ स्वाहाकारेणहोमेतुभवेद्यज्ञोपवीतवान्॥ प्रयोगपारिजातेपि॥ तत्र
प्रागग्नयेहुत्वापश्चात्सोमायहूयते॥ अग्नौयज्ञोपवीत्येवप्रक्षिपेन्मेक्षणंततः॥
छंदोगपरिशिष्टे॥ अग्नौकरणहोमश्चकर्तव्यउपवीतिना॥ अपसव्येनवा
कार्योदक्षिणाभिमुखेनच॥ कातीयानांत्वपसव्येनैव॥ पिंडपितृयज्ञव
द्धुत्वेतिसर्वातिदेशात्॥ सव्यंतुछंदोगपरं॥ गोभिलेनैतदुत्तरमेवापसव्यो
क्तेः॥ छंदोगाजुहुयुःसव्येनापसव्येनयाजुषाइतिवृद्धयाज्ञवल्क्योक्तेश्च॥
अथपाणिहोमः आश्वलायनः॥ अभ्यनुज्ञायांपाणिष्वेवेति
पिंडपितृयज्ञकल्पाभावेनाग्न्यभावेकाम्यादिष्वित्यर्थः॥ तेनबह्वृचानामेको
द्दिष्टेपाणिहोमोभवत्येवनिषेधोन्यपरः॥ पाणिष्वितिवचनात्सर्वविप्रपाणि
षुहोमइतिवृत्तिः॥ एवंमानामहेपि॥ शौनकोपि॥ सर्वेषामुपवि
ष्टानांविप्राणामग्रपाणिषु॥ विभज्यजुहुयात्सर्वंसोमायेत्यादिमंत्रतः॥
यत्तुहेमाद्रौकात्यायनः॥ पित्र्येयःपंक्तिमूर्द्धन्यस्तस्यपाणावनग्निकः॥
हुत्वामंत्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेत् इति॥ तद्बह्वृचातिरिक्तानां॥
यत्तुतत्रैवमात्स्ये॥ अग्न्यभावेतुविप्रस्यपाणौवा जलेपिवा॥ अज
कर्णेश्वकर्णेवागोष्ठेवाथशिवांतिकेइति॥ तत्तीर्थश्राद्धविषयं॥ तथ
दापांसमीपेस्याच्छ्राद्धंज्ञेयोविधिस्तदेतितत्रैवकात्यायनोक्तेः॥ निर्जलेत्वज
कर्णादौयत्तुचंद्रोदयेयमः॥ दैवविप्रकरेऽनग्निःकृत्वाग्नौकरणंद्विजइति॥
तदभार्यपरम्॥ अपत्नीकोयदाविप्रःश्राद्धंकुर्वीतपार्वणम्॥ पित्र्य
विप्रैरनुज्ञातोविश्वेदेवेषुहूयतेइति॥ तत्रैवकात्यायनोक्तेः॥ हूयते
इतिच्छांदसोव्यत्ययः॥ हेमाद्रौवायवीये॥ विधुरोदैविकेकुर्यात्
शेषंपित्र्येनिवेदयेत्॥ दैवविप्रानेकत्वेतत्रैव॥ वैश्वदेवेयदेकस्मिन्
भवेयुर्द्व्यादयोद्विजाः॥ तदैकपाणौहोतव्यंस्याद्विधिर्विहितस्तदा॥ सोप्या
द्यः॥ प्रथमंवानियम्येतेतिन्यायात्॥ तेनमृतभार्यस्यदैवेहोमः॥ अनु
पनीतब्रह्मचार्यादेस्तुपित्र्ये॥ अग्न्यभावःस्मृतस्तावद्यावद्भार्यांनविंदतीति॥
हेमाद्रौजातूकर्ण्योक्तेः॥ सभार्यनष्टाग्नेरपिपित्र्यविप्रकरेइतिपृथ्वीचंद्रः
उपवीतेनदैवहोमःप्राचीनावीतेनपित्र्ये॥ यदासर्वत्रदैवपित्र्यकरयोर्विकल्पइतिहेमा
द्रौमदनपारिजातेच॥ यदातुपितृमातामहयोर्दैवपित्र्यविप्रभेदेनपाणिहोमइत्यपरा१

र्कचंद्रिकादयः॥ यदातुदैवं तत्रंतदा तंत्रेणसकृदेवपाणिहोमइतिकेचित्॥ हे
माद्रिस्तुमातामहस्यभेदेपिकुर्यात्तंत्रेणसाग्निकइतिकात्यायनस्मृतेर्भेदमाह॥ एवं
पित्र्येपिमाधवीयेप्येवं॥ एवंसाग्नेरपिविदेशादौपाणिहोमोज्ञेयः॥ य
त्तुकार्ष्णाजिनिर्विनाश्राद्धमेवनास्तीत्युक्तंतत्सपिंडीकरणवार्षिकाद्यकरणपरंयत्किं
चिदेवपरंतुबृहन्नारदीये॥ अनग्निर्दूरभार्यश्चपार्वणेसमुपस्थिते॥
आत्मभिःकारयेच्छ्राद्धंसाग्निकैर्विधिवद्द्विजाः॥ क्षयाहदिवसेप्राप्तेस्वस्या
ग्निर्दूरगोयदि॥ तथैवभ्रातरस्तुश्चैलौकिकाग्नाविति स्थितिः॥
औपासनाग्नौदूरस्थेसमीपेभ्रातरिस्थिते॥ यद्यग्नौजुहुयाद्वापिपाणौवास
ह्रिपातकी॥ औपासनाग्नौदूरस्थेकेचिदिच्छंतिसत्तमाः पाणावेवतु
होतव्यमितितेनतत्समंजसं॥ तद्धदानादरादुपेक्ष्यं॥ हेमाद्रौय
मः॥ अग्नौकरणवत्तत्रहोमोविप्रकरेभवेत्॥ पर्युक्ष्यादर्भानास्ती
र्यपतोग्निसमोद्विजः॥ मेक्षणेनकरेणवाहोमः मेक्षणप्रहरणं
नेतिवृत्तिः॥ स्मृतिरत्नावल्यां॥ नानुज्ञापाणिहोमेस्यात्तस्तःपर्यूहनोक्षणे
नाग्नेतमधादितिचतस्मातामिध्ममेक्षणे॥ कर्काचार्योप्येवमाह॥
माधवीयेचंद्रिकायांचानुज्ञादिसर्वंभवतीत्युक्तं॥ पाणिहोमेप्रश्नाद्याह
परार्केशौनकः॥ अनग्निकश्चेदाज्यंगृहीत्वाभवत्स्ववाग्नौकरणमितिपूर्व
वत्तथास्त्विति॥ आश्वलायनः॥ यदिपाणिष्वाचांतेष्वन्यदन्नमनुदि
शत्यन्नमन्नेसृष्टंदत्तमध्रुवमिति॥ पाणौहुतंपात्रेनिधायविधायविप्रेणाचम्य
भोजनार्थमन्नेपरिविष्टेहुतशेषंपात्रेषुदद्यादित्यर्थः॥ सृष्टंप्रभूतम्॥ नैमित्ति
कंचेदमाचमनंनहुतभक्षणनिमित्तंअन्नपाणितलेदत्तंपूर्वमश्नंत्यबुद्धयः॥ पि
तरस्तेनतृप्यंतिशेषान्नंनलभंतिच॥ यच्चपाणितलेदत्तंपच्चान्यदुपकल्पि
तम् एकीभावेनभोक्तव्यंपृथग्भावोनविद्यते॥ इतिवह्वृचपरिशि
ष्टात् हेमाद्रावप्याचमनेहेत्वर्थवादउक्तः॥ पाण्यास्योहिद्विजःस्मृतइति
भाष्येत्वाचांतेषुभक्षितेषु॥ चमुभक्षणे॥ भक्षणोत्तरंचनाचमनं॥
अग्निसाम्यात्॥ पूर्वनिषेधस्तुसपिंडीकरणेज्ञेयः॥ददातिचोदितत्वात्॥नत्व
त्र॥जुहोतिचोदितत्वादित्युक्तंतन्वेतद्बहुसमतं॥ यत्तुबौधायनेन॥ तस्मिंस्तु
प्राशितेदद्याद्यदन्नंप्रकृतंभवेदितिभक्षणमुक्तंतच्छाखीयानामेवेतिहेमाद्रिः॥
तत्रैवयमः॥पित्र्यपाणिहुताच्छेषंपितृपात्रेषुनिःक्षिपेत्॥अग्नौकरणशेषंतुनदद्या
द्वैश्वदेविके॥एतदग्निहोमेपिसमं॥तथाकर्कस्तु॥ स्रुवेहुतशेषदत्तेनविशेषान्सर्वे
विप्रेषुदद्यादित्याह॥ तत्रैववृद्धवसिष्ठः॥ पित्र्यविप्रकरेहुत्वाशेषंपा
त्रेषुनिक्षिपेत्॥पिंडेभ्यःशेषयेत्किंचिन्नदद्याद्वैश्वदेविके॥अथापस्तंबानसूत्रम्॥

उध्रियतामग्नौ च क्रियतामित्यामंत्रयते काममुध्रीयतां काममग्नौ च क्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ नष्टाग्निविधुरादेर्विशेषोव्हन्नारदीये॥ नष्टाग्निर्दे
रभार्यश्चयावरोसमुपस्थिते॥ संधायाग्निंततोहोमंकृत्वातंविसृजेत्पुनः॥
अयाश्चेति तत्कालेग्निंसंधायहुत्वात्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥ या
ग्निहोमस्तुक्तंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासनेनः
ग्नौकुर्वीतलौकिके॥ पाणौहोमंप्रशंसंतितत्वापस्तंबशाखिनां॥
स्नातकाविधुरावास्युर्यदिवाब्रह्मचारिणः॥ अग्नौकरणहोमंतुकुर्युस्तेलौ
किकेनले॥ अयाश्चाग्ने मनोजोतिरुद्धध्मग्राह्नतीर्हुनेत्॥ ततोनु
ज्ञातोग्नौधनाघाज्यभागांतेपत्नेमातेत्याद्यैर्जुहुयात्॥ तत्रसप्तान्नाहुतयः
षडाज्यस्येतित्रयोदश॥ व्यत्ययोवा॥ यथायन्मेमाताप्रलुलो
भतन्मेरेतः पितावृंक्तांपाभ्रिष्टं तीतिद्वाभ्यांअमुष्मैस्वाहेतिपितुर्नाम्नाहोमो
॥यन्मेपितामहीप्रलुलोभतन्मेरेतःपितामहोवृंक्तांअंतर्दधेइतितन्नाम्नापितामहायहो
यन्मेप्रपितामहीतन्मेरेतःप्रपितामहोवृंक्तांअंतर्दधे ऋतुभिरितितन्नाम्नाप्रपितामहाय
हो॥ मातामहेषूहः॥ यन्मेमातामहीतन्मेमातामहोवृंक्ताम्॥
असंमातामहाद्रुदमित्याद्यैः॥ यन्मेमातुःपितामहीप्रलु० रेतोमातुःपितामहो
वृंक्तां॥ असंमातुःपितामहाद्रुदं॥ यन्मेमातुःप्रपितामहीप्रलु० रेतोमातुःप्रपिता
महोवृंक्तां॥ असंमातुःप्रपितामहाद्रुदं॥ सर्वत्रामुष्याइत्यत्रङें॰तंत
तन्नामयोज्यं॥ तदुक्तंसंग्रहे॥ योज्यःपित्रादिशब्दानांस्थानेमाता
महादिकः॥ अन्नहोमेतथास्पर्शेजलपिंडादिदानके॥ यन्मेमाताम
हीत्यादितःऊहोदाहरणंभवेत्॥ ततोपिचेहेत्येकान्नाहुतिः॥ ततःस्वा
हापित्रेइत्याद्यैराज्यंहुत्वास्विष्टकृतंहुत्वासर्वमस्यंकिंचिदादायोदगग्रेभस्मापोह्यत्रतू
ष्णींस्वाहाकारेणजुहोति॥ परिषेचनांतंस्थालीपाकवत्॥ अ
यमग्नौकरणहोमोमासिकश्राद्धएव॥ तच्च॥ स्मार्ताग्न्यभावेनकार्यमितिकेचित्॥
कार्यमेवेतिबहवः॥ अतएवसर्वाधानिनोहोमवर्जमासिश्राद्धमुक्तंसुदर्शनभा
ष्ये॥ महालयेतद्दित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेनस्मार्तत्रेया
वेणवत्कार्यमितित्वस्मद्गुरवः॥ आह्निकादिषुतुस्मार्त्तेपार्वणविधिरेव॥
एवंमातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायांमातृश्राद्धेवैकृतहोमेन
प्राकृतहोमबाधः॥ अन्वष्टकासुमातृश्राद्धंनेतिभाष्ये॥ तत्रापिश्राद्धांतरवत्क्रिया
मात्रेणतुयन्मेमातेत्यादौगुणत्वेपिमातृप्राधान्यंविवक्षितं॥ मासिश्राद्धेतुकल्पोव्याख्या
तइतिसूत्रात्॥ आग्नेय्येवमंत्रोनाकार्येतिवचनादग्निशब्दस्यैववैकृतदेवताभिधायि
त्वम्॥ तेनामुष्याइत्यत्रामुकशर्मभ्यांपितृभ्यामित्याद्यूहः कार्यः॥ तत्रमासिश्राद्धंजीव

त्पित्रादिनाप्युक्तममृतपित्रादिनाचकार्यमित्युक्तंसुदर्शनभाष्येतत्प्रकारस्तुवक्ष्यते॥
मातापित्रोर्हित्वादौतुनोहः॥तस्माद्बुधश्चोहेदितिनिषेधात्भर्तृनाम्नोहाद्वाभार्याश्चपत्नी
संनह्येतिवत्॥उपदेशिमतेतूहः॥यथायन्मेमातरौप्रलुलुभतुश्चरत्यावततुरतेऽस्याध
स्तत्कृतमासिश्राद्धनिर्णयेज्ञेयमितिदिक्॥ अन्यत्प्राग्वत्॥
अथपरिवेषणम्॥ तच्चोपवीत्यैवाज्येनदेवपूर्वमामासुपक्वमितिपा
त्राण्युपस्तीर्यकुर्यादितिहेमाद्रिः॥ भारतेदानधर्मेपि॥ आमाहु
तिंविनानैवयत्किंचित्परिविष्यते॥दुराचारैश्चयद्भुक्तंतंभागंरक्षसांविदुः॥ त
त्रैवशौनकः॥ विधिनादेवपूर्वंतुपरिवेषणमाचरेत्॥तत्रैवधर्मःफलस्था
नेतत्प्रोक्तास्वयंचपरिवेषणे॥ तत्रैववायुभविष्ययोः॥ भार्याया
श्राद्धकालेतुप्रशस्तंपरिवेषणं॥ ब्रह्मांडे॥ नापवित्रेणनैकेनहस्तेननविना
कुशं॥नायसेनायसेनैवश्राद्धेतुपरिवेषयेत्॥ वसिष्ठः॥ आयसेनतुपात्रेण
यदन्नंसंप्रदीयतेभोक्ताविष्टासमंभुंक्तेदाताचनरकंव्रजेत्॥ पैठीनसिः॥
सीसकायसरीतिपात्राण्ययज्ञीयानि॥ तत्रैवहारीतः॥ सौवर्णराजताभ्यां
चखड्गेनौदुंबरेणवा॥दत्तमक्षयतांयातिफल्गुपात्रेणवापुनः॥ कार्ष्णाजिनिः
दर्व्यादेयंघृतंचान्नेसमस्तव्यंजनानिच॥उदकंचैवपक्वान्नेनोदर्व्यातुकदाचन॥ य
मः॥ पत्रपांविषमदातुश्चनिष्कृतिर्नचविद्यते॥ पृथ्वीचंद्रोदयेपराशरः॥
सर्वदाचतिलाग्राह्याः॥पितृकृत्येविशेषतः॥भोज्यपात्रेतिलान्दृष्ट्वानिराशाःपितरो
गताः॥ चंद्रिकायांवृद्धशातातपः॥ हस्तदत्तास्तुयेस्नेहालवणव्यंजना
दयः॥पितॄणांनोपतिष्ठंतिभोक्ताभुंजीतकिल्बिषं॥घृतपात्रेविशेषोग्रंथांतरेओदने
परमान्नेचपात्रमासाद्यसुधधीः॥घृतेनक्षरयेत्पात्रंनहृतंरुधिरंभवेत्॥घृतादिपात्रं
भूमौस्थापयेन्नभोजनपात्रं इतिमदनरत्ने॥संग्रहे॥ हस्तदत्तंतु
नाश्नीयाल्लवणंव्यंजनादिकं॥अपक्वंतैलपक्वंचहस्तेनैवप्रदीयते॥पात्रालंभ
नमुक्तंचतुर्विंशतिमते॥उत्तानंदक्षिणंसव्यंनीचंपात्रास्युपस्पृशेत्॥याज्ञवल्क्यः॥
दत्वान्नंपृथ्वीपात्रमितिपात्राभिमंत्रणम्॥कृत्वेदंविष्णुरित्यन्नेद्विजांगुष्ठंनिवेशये
त्॥ बौधायनः॥ विप्रांगुष्ठेनानखेनानुदिशतिपृथिवीतेपात्रंद्यौरपि
धानंब्राह्मणस्यमुखेऽमृतेऽमृतंजुहोमि॥ब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जु
होम्यक्षितमसिमामेपितॄणांक्षेष्ठाअमुत्रामुष्मिंल्लोकइति॥आज्यंजुहोम्यग्नेस्वाहा
शब्दःकातीयसूत्रेउक्तः॥मैत्रैःस्वधाशब्दः॥अंगुष्ठेविशेषमाह॥ हेमाद्रौधौ
म्यः॥ परिहृत्यनखांगुष्ठंद्विजस्यान्नेनिवेशयेत्॥तथा॥उत्तानेनतुहस्तेनद्विजां
गुष्ठंनिवेशनम्॥यःकरोतिद्विजोमोहात्तद्वैरक्षांसिभुंजते॥तत्रैवयमः॥विष्णोहव्यंचकव्यं
चब्रूयाद्रक्षस्वचेत्क्रमात्॥दैवेपित्र्येचेत्यर्थः॥तत्रैवात्रिः॥संबंधनामगोत्राणीदं

न्नंततःस्वधा॥ पितृक्रमादुदीर्येतिस्वसत्तांविनिवर्त्तयेत्॥ इत्येनामुक्तमन्नाद्यमिदम् न्नमुदीरयेत्॥ अत्रान्नदानेचतुर्थीस्यादित्यादिविशेषाः पूर्वमुक्ताः अत्रपूर्वोक्तमंत्रो तेऽत्रपुरूरवार्द्रसंज्ञकाविश्वेदेवादेवताइदमन्नंसपरिकरंहव्यंअयंब्राह्मणआस्वाहव नीयार्थेदत्तंदास्यमानंचातृप्तेःगयेयंभूःगदाधरोभोक्ताइदमन्नंब्रह्मसोवर्णपात्रस्थ मन्नमक्षय्यवटच्छायास्थममुकेभ्योविश्वेभ्योदेवेभ्यइदमन्नममृतरूपंपरिविष्टंप रिवेक्ष्यमाणंचातृप्तेःस्वाहानमोनममेति वह्वृचपरिशिष्टहेमाद्र्याद्यनुमतःप्रयोगः॥ एवंपित्रेअमुकगोत्रवसुरूपादितन्नलामञेये॥ ततोपिदेवासइतिद्वेयेचेहपितर॥ इतिपित्रेकेचित्रपंपतिततोऽच्छिद्रंवाचयेत्॥ तत्रैवप्रचेताः॥ आपोशानकरे वि प्रेसंकल्प्याच्छिद्रभाषणात्निराशाःपितरोयांतिदेवैःसहनसंशयः॥ पारस्कारः॥ संकल्प्यपितृदेवेभ्यःसावित्रीमधुमज्जपः॥ श्राद्धंनिवेद्यापोशानंजुषध्वेसोथभोज नं॥ निवेद्येतिब्रह्मार्पणंकृत्वेत्यर्थः॥ अतएववृद्धन्नारदीयेऽन्नत्यागमुक्त्वोक्तं ॥ दत्तंहविश्चतत्कर्मविष्णवेवैसमर्पयेदिति॥ यत्तुकात्यायने कार्ष्णाजिनिः॥ अपसव्येनकर्तव्यंपितृकृत्यमशेषतः॥ अ न्नदानादृतेसर्वमेवंमातामहेष्वपीति॥ तदप्येतत्परं॥ तच्चब्रह्मा र्पणंब्रह्महविःहरिर्दाताचतुर्भिश्चेतिकेचित्पठंति॥ धर्मप्रदीपे॥ ततोन्नंपि तृदेवेभ्यःसंकल्प्यचयथाविधि॥ दत्तंयद्दास्यमानंचआतृप्तेर्नममेतिच॥ तथा॥ आद्रीयान्नस्यसंकल्पोभूमावेवप्रदीयते॥ हस्तेमुदीपमानंतु पितृणांनोपतिष्ठते॥ वैश्वदेवस्यवामेतुपितृपात्रस्यदक्षिणे॥ संक ल्पोदकदानंस्यान्नित्यश्राद्धेयथारुचि॥ प्रचेताः॥ आपोशानंप्रदायाथसा वित्रींत्रिर्जपेदथ॥ मधुवाताइतित्र्यृचंमध्वित्येतत्रिकंतथा॥ मि ताक्षरायांपारस्करः॥ संकल्प्यपितृदेवेभ्यः सावित्रीमधुमज्ज पः॥ श्राद्धंनिवेद्यापोशानंजुषध्वेसोथभोजनम्॥ गायत्रीत्रिः सकृद्वापिजपेद्व्याहृतिपूर्विकांमधुवाताइतित्र्यृचमध्वित्येतत्रिकंतथा॥ याज्ञवल्क्यः॥ सव्याहृतिकांगायत्रीमधुवाताइत्यृचं॥ ज प्त्वायथासुखंवाच्यंभुजीरंस्तेपिवाग्यताः॥ यथासुखंजुषध्वमितिवा च्यं॥ अत्रिः॥ असंकल्पितमन्नाद्यंपाणिभ्यांयदुपस्पृशे त्॥ अभोज्यंतद्भवेदन्नंपितृणांनोपतिष्ठते॥ अन्नंद त्तंनगृह्णीयाद्यावत्तोयंनसंपिबेत्॥ आपोशानेविशेषः स्मृतिसमुच्चये॥ आपोशानंवामभागेसुरापानसमंभवेत्॥ दक्षभागेजयःकुर्यात्सोमपानफलंलभेत्॥ तथा॥ पुनराद्यर्थ्या पोशानंसुरापानसमंभवेत्॥ हेमाद्रावत्रिः॥ दत्तेवाप्यथ

वं।अन्यथाऊर्ध्वंमुहूर्त्तात्कुतपाद्यंमुहूर्त्तचतुष्टयं।मुहूर्त्तपंचकंह्येतत्स्वधाभवनमिष्यते।इत्यादि
विरोधात्।दीपिकापि॥एकोद्दिष्टमुपक्रमेतत्कुतपेइति।माधवीयेव्यासोपि।कुतपप्रथमेभागे
एकोद्दिष्टमुपक्रमेत्।आवर्त्तनसमीपेवातत्रैवनियतात्मवान्।तेनकुतपादिरौहिणांतोमुख्यः
कालः॥पृथ्वीचंद्रोदयेप्येवं।दिनद्वयेनसमव्याप्तौचपूर्वा।विषमव्याप्तावाधिक्येननिर्णयः।अ
व्याप्तौपूर्वैव।परविद्धायानिषेधात्।सचवक्ष्यते।पूर्वदिनग्रहणेरौहिणलंघनापत्तेः।परैवेतिगौ
डाः॥शुक्लकृष्णवशात्स्ववेदशाखाभेदेवाव्यवस्थेत्यन्ये॥तन्न॥परविद्धानिषेधप्राबल्यात्।अत्रमू
लंकालमाधवीयेज्ञेयम्।पार्वणंत्वपराह्णेकार्यं।पूर्वोक्तवचनात्।मध्याह्नव्यापिनीयास्यात्सै
कोद्दिष्टेतिथिर्भवेत्।अपराह्णव्यापिनीयानुपार्वणेसातिथिर्भवेदितिपृथ्वीचंद्रोदयेगौतमोक्ते
श्च॥पूर्वेद्युरेवपरेद्युरेववाअपराह्णव्याप्तौसैवग्राह्या।दिनद्वयेतद्व्याप्तौतदस्पर्शेंऽशतःसम
व्याप्तौवापूर्वैव।विषमव्याप्तौत्वधिकाग्राह्या।अपराह्णव्यापिनीयास्यादाब्दिकस्ययदातिथिः।
महनीयतत्तद्विद्वांसःप्रशंसंतिमहर्षयइतिमरीचिस्मृतेः॥दर्शंचपौर्णमासंचपितुःसांवत्सरंदिनं
पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यते।इत्यपरार्केनारदोक्तेः।द्व्यहेप्यव्यापिनीचेत्स्यान्मृताहस्यय
दातिथिः।पूर्वविद्धाप्रकर्त्तव्यात्रिमुहूर्त्ताभवेद्यदीति॥सुमंतूक्तेः॥पूर्वस्यांनिर्वपेत्पिंडानित्यांगि
रसभाषितमितिहेमाद्रौपाठः॥तत्रैववृद्धमनुः॥नद्व्यहव्यापिनीचेत्स्यान्मृताहस्ययदातिथिः
पूर्वविद्धैवकर्त्तव्यात्रिमुहूर्त्ताचयाभवेत्॥मदनरत्नेप्येवं॥यत्तुकार्ष्णाजिनव्यासौ॥अह्नोस्तम
यवेलायांकलामात्रायदातिथिः।सैवप्रत्याब्दिकेज्ञेयानापरापुत्रहानिदेति।तत्त्रिमुहूर्त्तस्तुतिः॥
पूर्वेद्युःसायंत्रिमुहूर्त्ताभावेतुपरैव।त्रिमुहूर्त्तानचेद्ग्राह्यापरैवकुतपेहिसेति।कालादर्शेगोभिलो
क्तेः।कालादर्शेपि।प्रत्याब्दिकेप्येवमेवतिथिर्ग्राह्यापराह्णिकी।उभयत्रतथात्वेतुमहत्त्वेनविनि
र्णयः॥अन्यत्रापि॥समत्वेपूर्वविद्धैवस्यात्तथात्वेपिसायदि।त्रिमुहूर्त्ताभवेत्सायंसर्वेष्वयं।विनि
र्णयः॥अन्यत्रापि।सायंतन्यस्त्रंचेन्मृततिथिःसैवाब्दिकेमासिकेग्राह्यासाल्पपराह्णयोर्यदित
दायत्राधिकासामता।तुल्याचेदुभयापराह्णसमयेपूर्वानचेत्तद्द्वये।पूर्वेद्युर्वत्रिमुहूर्त्तगास्तसमयेनो
चेत्परैवोचिता।माधवपृथ्वीचंद्रौतुदिनद्वयेपराह्णव्याप्त्यंशतःसमव्याप्तौचक्षयेपूर्वावृद्धौपरा।
खर्वोदर्पौपरेपूज्यावित्युक्तेः।अपराह्णद्वयव्यापिनीतस्यचयादातिथिः।क्षयेपूर्वाचकर्तव्यावृ
द्धौकार्यातथोत्तरेतिबोधायनोक्तेः।क्षयाहस्यतिथिर्यातुअपराह्णद्वयेयदि।पूर्वाक्षयेतुकर्त्तव्या
वृद्धौकार्यातथोत्तरेति।बृहन्नारदीयाच्चेत्याहतुः।वृद्धिक्षयौचात्रपरतिथेर्नतुग्राह्यतिथेः।त
स्याःक्षयेपराह्णद्वयव्याप्तेरसंभवात्।तदाहमाधवः॥नग्राह्यतिथिगौवृद्धिक्षयावूर्ध्वतिथे
स्तुताविति॥यत्तुपृथ्वीचंद्रः॥पूर्वोक्तवचनेषुयत्रसायाह्नास्तसमययोगिनीतिथिरुक्ता।तत्रा
पराह्णव्यापिनीज्ञेया।सायाह्नेत्रिमुहूर्त्तःस्यात्तत्रश्राद्धंनकारयेदितिमात्स्यादौसायाह्नेनिषेधात्
यच्चत्रिमुहूर्त्तादिग्रहणं।तत्कालाद्वाहीपराह्णरूपत्रिमुहूर्त्तपरमित्याह॥तद्धेमाद्रिमदनरत्नका
लादर्शादिग्रंथविरोधाल्लक्षणापत्तेश्चिंत्यं।तस्मात्पूर्वोक्तमेवसाधुः।यदाविघ्नवशाद्दिनेसांव
त्सरंश्राद्धंनकृतंतदारात्रावपिकार्यं।मृताहंसमतिक्रम्यचंडालेष्वभिजायते।इतिमरीचिनाम्

तस्मात् एव ज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठाना
दंपत्योः पार्वणं मिथः॥ अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः। मातामहस्य तत्पत्न्या श्रा
द्धं पार्वणवद्भवेत्। इत्युक्तं। पत्न्याः कर्तृत्वेपि पार्वणमेव। सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममं
त्रकं। सपिंडीकरणं कुर्युस्ततः पार्वणमेव चेति लौगाक्षिस्मृतेः। तत्र पत्न्यपि कुर्वीत सापिंड्यं
पार्वणं तथेति सुमंतूक्तेश्चेति निर्णयामृते उक्तं। अन्ये त्वेतत्याक्षिकपार्वणपरमाहुः॥
॥अत एव। भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत्। न तेन तृप्यते भ
र्ता हत्वा तु नरकं व्रजेदिति वचनस्य पाहे पाक्षिकैकोद्दिष्टप्रशंसार्थेन पार्वणनिषेधार्थमित्युक्तं। त्रि
स्थलीसेतौ भट्टचरणैः। स्वभर्तृप्रभृति त्रिभ्य इत्यनेन विरोधाच्च। अपुत्राणां त्वाह। हेमाद्रौ वायवीये।
अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यात् एकोद्दिष्टं न पार्वणं। मित्रबंधुस
पिंडेभ्यः स्त्रीकुमारीभ्य एव च। इत्याद्येमासिकं श्राद्धं सांवत्सरमतोन्यथा। पारिजाते तु अन्यथा पार्व
णमित्युक्त्वा सर्वत्र पार्वणमुक्तं। एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तं। पृथ्वीचंद्रोदये
वृद्धगार्ग्यः॥ मातुः सहोदरायाश्च पितुः सहभवाच या। तयोश्च नैव कुर्वीत पार्वणं पिंडदाः ह्नेते॥ प्र
चेताः॥ सपिंडीकरणादूर्ध्वमेकोद्दिष्टविधीयते। अपुत्राणां च सर्वेषामपत्नीनां तथैव च। अप
त्नीनां ब्रह्मचार्यादीनां। मार्कंडेयपुराणे॥ प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः। मृताहनि
यथान्यायं नृणां यद्वदिहोदितम्॥ नृणामिति दृष्टांतात्प्रोविप्रहतपाषंडादीनां सपिंडनाभावेपि
सांवत्सरमेकोद्दिष्टं कार्यमेवेति शूलपाणिः॥ अत्रि वृद्धवसिष्ठौ॥ सपिंडीकरणादूर्ध्वं यत्र यत्र
प्रदीयते। भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च। पितृव्यगुरुवे श्राद्धमेकोद्दिष्टं न पार्वणं॥ यत्तु
यात्रकर्ण्यः॥ पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च। मातामहस्यासुतस्य श्राद्धादि पितृवद्भ
वेदिति। तदावश्यकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः। युक्तं त्वेवं॥ मातुः पितरमारभ्य त्रयो मा
तामहाः स्मृताः। तेषां च पितृवच्छ्राद्धं कुर्युर्दुहितृसूनव इति। पुलस्त्योक्तेर्मातामहस्य पार्वणमेव
तत्साहचर्यात्पितृव्यादेस्तथा। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्वणमिति स्मृत्यंतरे पक्षद्वयमु
क्तत्वात्विकल्पः॥ केचित्त्वापस्तंबादिवाक्यानि उक्त्वा माध्यमीनानां नैव कार्यं सपिंडने
तस्य पितृव्यादिपरत्वात् हीनत सपिंडनपितृव्यादिपराणीत्याहुः। मातासपत्नीमाता। एकोद्दिष्टं
तु कनिष्ठपरमिति। पृथ्वीचंद्रोदयेप्येवं॥ विशेषस्त्वधिकारिनिर्णये प्रागुक्तः। केचित्तु भ्रात्रभावे
पितामहवार्षिकमप्यावश्यकं। पुत्राभावे च जन्तुनः। पत्नी माता तथा पिता। वित्ताभावे पिसश्चि
ष्यः कुर्यात्तस्यौर्ध्वदेहिकमिति मार्कंडेयपुराणादित्याहुः। तन्न। पौत्रेणैकादशाहादिकर्तव्यं श्राद्ध
षोडशमिति कात्यायनविशेषोक्तेः॥ ॥अथ सपादद्वैधे निर्णयः॥ तत्रैकोद्दिष्टं मध्याह्ने
कार्यं॥ मध्याह्नः पंचधाभक्ते दिने तृतीयभाग इति माधवः॥ आमश्राद्धं तु पूर्वाह्ने एकोद्दिष्टं तु म
ध्यतः। पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति हारीतोक्तौ प्रातः शब्दसाहचर्यात्। तत्रापि कु
तपादिमुहूर्तेद्वयं ज्ञेयम्। आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं
तु न लंघयेदिति श्लोकगोतमोक्तेरेतत्परत्वात्। रौहिणो नवमो मुहूर्तः। मैथिलाः श्राद्धकौमुदीवे

वं।अन्यथाऊर्ध्वमुहूर्त्तात्कुतपाद्यंमुहूर्त्तचतुष्टयं।मुहूर्त्तपंचकंह्येतत्स्वधाभवनमिष्यते।इत्यादि
विरोधात्।दीपिकापि॥एकोद्दिष्टमुपक्रमेतत्कुतपेइति।माधवीयेव्यासोपि।कुतपप्रथमेभागे
एकोद्दिष्टमुपक्रमेत्।आवर्त्तनसमीपेवातत्रैवनियतात्मवान्।तेनकुतपादिरौहिणांतोमुख्यः
कालः॥पृथ्वीचंद्रोदयेप्येवंदिनद्वयेनसमव्याप्तौचपूर्वा।विषमव्याप्तावाधिक्येननिर्णयः।अ
व्याप्तौपूर्वैवपरविद्धायानिषेधात्।सचवक्ष्यते।पूर्वदिनग्रहणोरौहिणलंघनापत्तेः।परैवेतिगौ
डाः॥शुक्लकृष्णवशात्स्ववेदशाखाभेदेनव्यवस्थेत्यन्ये॥तन्न॥परविद्धानिषेधप्राबल्यात्।अत्रमू
लंकालमाधवीयेज्ञेयम्।पार्वणंत्वपराह्णेकार्यं।पूर्वोक्तवचनात्।मध्याह्नव्यापिनीयास्यात्से
कोद्दिष्टेतिथिर्भवेत्।अपराह्णव्यापिनीयातुपार्वणेसातिथिर्भवेदितिपृथ्वीचंद्रोदयेगौतमोक्ते
श्च॥पूर्वेद्युरेवपरेद्युरेववाअपराह्णव्याप्तौसैवग्राह्या।दिनद्वयेतद्व्याप्तौतदस्पर्शेशनैःसम
व्याप्तौवापूर्वैव।विषमव्याप्तौत्वधिकाग्राह्या।यापराह्णव्यापिनीयास्यादाब्दिकस्ययदातिथिः
महतीयत्रतद्वृद्धौप्रशस्तेतिमहर्षयइतिमरीचिस्मृतेः॥दर्शंचपौर्णमासंचपितुःसांवत्सरंदिनं
पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यते।इत्यपरार्केनारदोक्तेः।अह्नेव्यापिनीचेत्स्यात्मृताहस्यय
दातिथिः।पूर्वविद्धाप्रकर्त्तव्यात्रिमुहूर्त्ताभवेद्यदीति॥सुमंतूक्तेः॥पूर्वस्यांनिर्वपेत्पिंडानित्यंगि
रसभाषितमितिहेमाद्रौपाठः॥तत्रैववृद्धमनुः॥नद्यहव्यापिनीचेत्स्यात्मृताहस्ययदातिथिः
पूर्वविद्धैवकर्त्तव्यात्रिमुहूर्त्तावयाभवेत्॥मदनरत्नेप्येवं॥यत्तुकार्ष्णाजिनव्यासो॥अन्होस्तम
यवेलायांकलामात्रायदातिथिः।सैवप्रत्याब्दिकेज्ञेयानापराप्रुत्नहानिदेतितत्रिमूहूर्त्तस्तुतिः॥
पूर्वेद्युःसायंत्रिमुहूर्त्ताभावेतुपरैव।त्रिमुहूर्त्तानचेद्ग्राह्यापरैवकुतपेहिसेति।कालादर्शेगोभिलो
क्तेः।कालादर्शेपि।प्रत्याब्दिकेप्येवमेवतिथिर्ग्राह्यापराह्णिकी।उभयत्रतथात्वेतुमहत्त्वेनविनि
र्णयः॥अन्यत्रापि॥समत्वेपूर्वविद्धैवस्यात्तथात्वेपिसायदि।त्रिमुहूर्त्ताभवेत्सायंसर्वेषांपंचविनि
र्णयः॥अन्यत्रापि।सायंतन्यस्तंचेन्मृततिथिःसैवाब्दिकेमासिकेग्राह्यासास्यपराह्णयोर्यदित
दापत्राधिकासामता।तुल्याचेदुभयापराह्णसमयेपूर्वानचेत्तद्द्वये।पूर्वैवत्रिमुहूर्त्तगाल्पसमयेनो
चेत्परैवोचिता।माधवपृथ्वीचंद्रौतुदिनद्वयेपराह्णव्याप्त्यावशतःसमव्याप्तौचक्षयेपूर्वावृद्धौपरा।
स्वर्वौदयौपरोपूज्याविन्युक्तेः।अपराह्णद्वयव्यापिन्यतीतस्यचयादातिथिः।क्षयेपूर्वाचकर्त्तव्यावृ
द्धौकार्यातथोत्तरेतिबोधायनोक्तेः।क्षयाहस्यतिथिर्यातुअपराह्णद्वयेयदि।पूर्वाक्षयेतुकर्त्तव्या
वृद्धौकार्यातथोत्तरेति।वृहन्नारदीयाच्चेत्याहतुः।वृद्धिक्षयौचात्रपरतिथेर्नतुग्राह्यतिथेः।त
स्याःक्षयेपराह्णद्वयेव्याप्तेरसंभवात्।तदाहमाधवः॥नग्राह्यतिथिगौवृद्धिक्षयावूर्ध्वतिथे
स्तुताविति॥यत्तुपृथ्वीचंद्रः॥पूर्वोक्तवचनेषुयत्रसायान्हास्तसमययोगिनीतिथिरुक्तातत्रा
पराह्णव्यापिनीज्ञेया।सायान्हत्रिमुहूर्त्तःस्यात्तत्रश्राद्धंनकारयेदितिमात्स्यादौसायान्हेनिषेधात्
यच्चत्रिमुहूर्त्तादिग्रहणं।तच्छ्राद्धार्हापराह्णरूपत्रिमुहूर्त्तपरमित्याह॥तद्धेमाद्रिमदनरत्नका
लादर्शादिग्रंथविरोधाल्लक्षणापत्तेःचिंत्यं।तस्मात्पूर्वोक्तमेवसाधुः।यदाविघ्नवशाद्दिनेसांव
त्सरंश्राद्धंनकृतंतदारात्रावपिकार्यं।मृताहंसमतिक्रम्यचंडालेष्वभिजायते।इतिमरीचिनाम्

त्ताहानिकमेदोषैकेः।नचनक्तंश्राद्धंकुर्वीतारब्धेचाभोजनसमापनमित्यापस्तंबेनगौणकालोक्ते
रितिमाधवः॥आरब्धेश्राद्धविघ्नवशाद्रात्रिपातभोजनसमाप्तिर्नरात्रौकार्या।शेषसमाप्तिःपर
दिनएवेतिहरदत्तः॥ग्रहणदिनेवार्षिकमापतितद्दिनएवान्नेनामेनहेम्नावाकुर्यात् नोत्तरदिने
इत्युक्तंप्राक्ग्रहणनिर्णये।तच्चप्रथमाब्दिकंत्रयोदशेमलमासेकार्यंअन्यथातु।प्रत्यब्दंद्वादशे
मासिकार्योपिंडक्रियासुतैः।क्वचित्त्रयोदशेपिस्यादाद्यंमुक्त्वातुवत्सरमितिलघुहारीतोक्तेःइद
मन्याधिमासपरं।द्वादशेत्रयोदशेवातीतइत्यर्थः॥तेनयत्रद्वादशमासिकंशुद्धमासेभवतितत्रत्र
योदशेधिकेएवाद्याब्दिकंकार्यं।यत्राधिकमध्येद्वादशंमासिकंतत्रतस्यद्विरावृत्तिंकृत्वाचतुर्द
शेशुद्धेएवप्रथमाब्दिकमितिनिष्कर्षः।माधवीयेहेमाद्रौचैवं।द्वितीयादिकंतुशुद्धमासएवनाधि
केनाप्युभयोःमलमासमृतानांतुयदासएवाधिकस्यात्तदातत्रैवकार्यमन्यथाशुद्धएवेतिप्रागु
क्तम्॥दर्शेवार्षिकंचेत्तदापूर्वंवार्षिकंकृत्वाततःपिंडपितृयज्ञाद्दर्शश्राद्धंचेतिनिर्णयदीपेक्रमउ
क्तः।स्मृतिसारेपि॥दर्शेक्षयाहेसंप्राप्तेकथंकुर्वीतयाज्ञिकाः।आदौक्षयाहंनिर्वर्त्यपश्चाद्दर्शोवि
धीयतेइति।युक्तंत्वेवं।तद्वचनेमूलाभावात्।पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति दर्शश्राद्धे
पिंडपितृयज्ञानंतर्यात्तस्याब्दिकेप्यतिदेशप्राप्तेः।पितृयज्ञानंतरंवार्षिकं ततोदर्शश्राद्धमिति।
व्यतिषंगस्तुनभवतितस्यार्थिकत्वात्॥कालादर्शेपि। निमित्तानियतिश्चात्रपूर्वानुष्ठानकारण
मिति।सर्वान्प्रत्येकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वं।देवज्ञानीयेप्येवं।एवंमासिका
दिष्वपिज्ञेयं।प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपीतिसर्वातिदेशात्।मृताहेवृषोत्सर्गउ
क्तोहेमाद्रौविष्णुधर्मे॥अयनद्वितयेचैवमृताहेबांधवस्यच।उत्सृजेन्नीलवृषभंकौमुद्याःसमु
पागमे।कौमुदीकार्त्तिकी॥ ॥अथशुद्धिश्राद्धं॥दिवोदासीये।सपिंडकर
णादूर्ध्वंयावदब्दत्रयंभवेत्।तावदेवनभोक्तव्यंक्षयेहनिकदाचन।वर्षांतसपिंडनेप्येतत्तुल्यं
मृताहनितुसंप्राप्तेयावदब्दचतुष्टयं।वह्निःश्राद्धंप्रकुर्वीतनकुर्याच्छ्राद्धभोजनं।प्रथमेस्थीनिम
ज्जाचद्वितीयेमांसभक्षणं तृतीयेरुधिरंप्रोक्तंश्राद्धंशुद्धंचतुर्थकमिति।श्राद्धकाशिकोक्तेः।अ
शुद्धंकिंचिदितिज्ञेयं।स्मृत्यंतरे।सप्तत्रिंशच्चयोमासान्श्राद्धेभुंक्तेतमोहतः।सपंक्तिदूषितःपापः
प्रेताशीचभवेत्तुसः।तत्रप्रथमेब्देवर्षांतसपिंडनपक्षेमृताहात्पूर्वेह्निसपिंडनमब्दपूर्तिश्राद्धंचकृत्वा
परेह्निवार्षिकंकुर्यादितिस्मृत्यर्थसारेउक्तं।कालकांडेहेमाद्रिस्तु।मृताहेसपिंडीकरणेनैववार्षि
कसिद्धिः।पूर्णेसंवत्सरेपिंडःषोडशःपरिकीर्तितः।तेनैवचसपिंडत्वंतेनैवाब्दिकमिष्यतेतिवच
नादित्याह।इदमेवचयुक्तम्॥ ॥अथक्षयाहाज्ञानेमरीचिः॥श्राद्धविघ्नेसमुत्प
न्नेअविज्ञातेमृतेहनि।एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः।विशेषतइत्युक्तेःशुक्लैकादश्याम
पि।बृहस्पतिः॥नज्ञायतेमृताहश्चेत्प्रमीतेप्रोषितेसति।मासश्चेत्प्रतिविज्ञातस्तद्दर्शःस्यात्तथाब्दिकं
दिनमासौनविज्ञातौमरणस्ययदापुनः।प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा॥मदनरत्ने
भविष्ये॥मृताहंयोनजानातिमानवोविनतात्मज।तेनकार्यममावस्यांश्राद्धंसंवत्सरंसदा।दिन
मेवतुजानातिमासंनैवंतुयोनरः मार्गशीर्षेथवाभाद्रेमाघेवातद्दिनंभवेत्।निर्णयामृतेतु।यदा

मासोनविज्ञातोविज्ञातंदिनमेवतु। तदाचाषाढकेमासिमाघेवातद्दिनंभवेत्। इतिबृहस्पतिस्मृतेरप्या
ढोयुक्तः। कालादर्शेपि। मासाज्ञानेदिनज्ञानेकार्यमाषाढमाघयोरित्युक्तं। हेमाद्रौप्रभासखंडे। मृता
हंयोनजानातिमासंवापिकथंचन। तेनकार्यममायांस्यात्श्राद्धंमाघेथमार्गके॥ भविष्ये॥ मृ
तवार्त्ताश्रुतेर्यातुतिथौतौपूर्वोक्तक्रमेणतु। पूर्वोक्तेति। प्रस्थानदिनाज्ञानेमासज्ञानेचतद्दर्शे। मासाज्ञा
नेदिनज्ञानेचमार्गोदाविति च। श्रवणदिनेपिज्ञेयमित्यर्थः। श्रवणदिनमासाज्ञानेमाघमार्गदर्शे
कार्यंपूर्वोक्तप्रभासखंडात्। अतोत्रलोपइतिशूलपाण्युक्तंहेयं। तिथितत्त्वेयमः॥ गतस्यनभवे
द्वार्त्तायावद्द्वादशवार्षिकी। प्रेतावधारणंतस्यकर्त्तव्यंसुतबांधवैः। यन्मासियद्दहयोस्तन्मासित
द्दहःक्रिया। दिनाज्ञानेकुहूस्तस्यआषाढस्याथवाकुहूः॥ ॥अथश्राद्धविघ्नेनिर्ण
यः॥ तत्रविप्रस्यनिमंत्रणोत्तरंसूतकेमृतकेचाशौचाभावः। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्म
णि। निमंत्रणाद्धिविप्रस्यस्वाध्यायादिरतस्यच। देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्रा
ह्मोक्तेः। कर्तुस्तुविष्णुराह। व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे। आरब्धेसूतकंनस्यादनारब्धेतु
सूतकं। श्राद्धप्रारंभस्तेनैवोक्तः। प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः। नांदीमुखंविवाहादौश्रा
द्धेपाकपरिक्रियेति। माधवीयेब्राह्मेपि। श्राद्धादौपितृयज्ञेचकन्यादानेचनोभवेत्। मिताक्षरा
यांस्मृत्यंतरे। सद्यःशौचंप्रकृत्य। यज्ञसंभृतसंभारेविवाहेश्राद्धकर्मणीति। तिथितत्त्वादिगौडग्रं
थास्तुनिमंत्रणोत्तरंकर्तुर्भोक्तुश्चनाशौचं। निमंत्रणोत्तरंश्राद्धप्रारंभःस्यादितिस्मृतिरितिवि
ष्णूक्तेः॥ यत्तुश्राद्धेपाकपरिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः। दातृगृहेमरणादौब्राह्मेउक्तं। भो
जनार्द्धेतुसंभुक्तेविप्रेदातुर्विपद्यते। गृहेइतिशेषः। यदाकश्चित्तदोच्छिष्टंशेषंत्यक्त्वासमाहितः
आचम्यपरकीयेनजलेनशुचयोद्विजाइति। अस्यश्राद्धविषयत्वंहेमाद्रिणोक्तं। पृथ्वीचंद्रोदयेप्ये
वं। ममतुप्रतिभाति। इदंविवाहादिविषयंनतुश्राद्धविषयं। तत्पदाभावात्। विवाहोत्सवयज्ञेषुतू
पक्रम्यभुंजानेषुतुविप्रेषुत्वंतरामृतसूतके। अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति। षट्त्रिं
शन्मतैकवाक्यत्वात्। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणीतिपूर्वोक्तविरोधाच्च॥ श्राद्धेतुयद्यपि
विष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्त्तुरेवसः॥ भोक्तुस्तुदोषोस्त्येव। अपिदातृग्रहीत्रो
श्चसूतकेमृतकेतथा। अविज्ञानेनदोषःस्यात्श्राद्धादिषुकथंचन। विज्ञानेभोक्तुरेवस्यात्प्रायश्चि
त्तादिकंक्रमादितिमाधवीये॥ ब्राह्मोक्तेः। आदिशब्देनाशौचमुच्यते। तथाहविष्णुः॥ ब्राह्मणादीना
माशौचेयःसकृदेवान्नमश्नातितस्यतावदाशौचं। यावत्तेषामाशौचव्यपगमेप्रायश्चित्तंकुर्यादिति
यत्तुदेहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्राह्मेतत्श्राद्धकालीनस्यनिषेधकं। नतदुत्तरका
लीनस्य। शुद्धिदीपस्तुनिमंत्रितेष्वित्यामश्राद्धपरं। भोजनार्द्धेत्वित्यादितत्श्राद्धपरमित्याह। प्राय
श्चित्तंत्वाहमार्कंडेयः॥ भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः। एतत्कामतः। अभ्यासेशंखः।
ब्राह्मणस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति। अज्ञानात्तुछागलेयः॥ एकाहंचत्र्यहंपंचसप्तरा
त्रमभोजनं। ततःशुचिर्भवेद्विप्रःपंचगव्यंपिबेन्नरः॥ इति। वर्णक्रमेणेदं। अभ्यासेतुद्विगुणमित्यादि
मिताक्षरामाधवीयादौज्ञेयं। मिताक्षरामाधवीयादौतुश्राद्धेकर्तुर्भोक्तुश्चसर्वथादोषाभावउक्तः॥

त्ताहानिक्रमेदोषोक्तेः। नचनक्तंश्राद्धंकुर्वीतारब्धेचाभोजनसमापनमित्यापस्तंवेनगौणकालोक्ते
श्चेतिमाधवः॥ आरब्धश्राद्धविघ्नवशाद्रात्रिपातभोजनसमाप्तंतद्रात्रौकार्य्यं। शेषसमाप्तिःपर
द्दिनएवेतिहरदत्तः॥ ग्रहणादिनेवार्षिकप्राप्तौतद्दिनएवान्नेनामेनहेम्नावाकुर्यान्नोत्तरदिने
इत्युक्तंप्राक्ग्रहणनिर्णये। तच्चप्रथमाब्दिकंत्रयोदशेमलमासेकार्यंअन्यथा। प्रत्यब्दंद्वादशे
मासिकार्योपिंडक्रियामुनेः। क्वचित्त्रयोदशेपिस्यादाद्यंमुक्त्वानुवत्सरमितिलघुहारीतोक्तेःइद
मत्याधिमासपरं। द्वादशेत्रयोदशेवातीतइत्यर्थः॥ तेनयत्रद्वादशमासिकंशुद्धमासेभवतितत्र
त्रयोदशेधिकेएवाब्दिकंकार्यं। यत्राधिकमध्येद्वादशंमासिकंतत्रतस्यद्विरावृत्तिंकृत्वाचतुर्द
शेशुद्धेएवप्रथमाब्दिकमितिनिष्कर्षः। माधवीयेहेमाद्रौचैवं। द्वितीयादिकंतुशुद्धमासएवनाधि
केनाप्युभयोः। मलमासमृतानांतुयदासएवाधिकस्तात्तदातत्रैवकार्यमन्यथाशुद्धएवेतिप्रागु
क्तम्॥ दर्शेवार्षिकंचेत्तदापूर्ववार्षिकंकृत्वाततःपिंडपितृयज्ञादर्शश्राद्धंचेतिनिर्णयदीपेक्रमउ
क्तः। स्मृतिसारेपि॥ दर्शेक्षयाहेसंप्राप्तेकथंकुर्वंतियाज्ञिकाः। आदौक्षयाहंनिर्वर्त्यपश्चाद्दर्शोवि
धीयतेइति। युक्तंत्वेवं। तद्वचनेमूलाभावात्। पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति दर्शश्राद्धे
पिंडपितृयज्ञानंतर्योक्त्याब्दिकेप्यतिदेशप्राप्तेः। पितृयज्ञानंतरंवार्षिकं ततोदर्शश्राद्धमिति।
व्यतिषंगस्तुनभवतितस्यार्थिकत्वात्॥ कालादर्शेपि। निमित्तानियतिश्चात्रपूर्वानुष्ठानकारण
मिति। सर्वात्मनैकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वं। देवजानीयेप्येवं। एवंमासिका
दिष्वपिज्ञेयं। मत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपीतिसर्वातिदेशात्। मृताहेवृषोत्सर्गउ
क्तोहेमाद्रौविष्णुधर्मे॥ अयनद्वितयेचैवमृताहेबांधवस्यच। उत्सृजेन्नीलवृषभंकौमुद्यांसमु
पागमे। कौमुदीकार्त्तिकी॥ ॥अथशुद्धिश्राद्धं॥ दिवोदासीये। सपिंडकर
णादूर्ध्वंयावदब्दत्रयंभवेत्। तावदेवनभोक्तव्यंक्षयेहनिकदाचन। वर्षांतसपिंडनेप्येतत्तुल्यं
मृताहनितुसंप्राप्तेयावदब्दचतुष्टयं। बहिःश्राद्धंप्रकुर्वीतनकुर्याच्छ्राद्धभोजनं। प्रथमेस्थीनिम
ज्जाचद्वितीयेमांसभक्षणं तृतीयेरुधिरंप्रोक्तंश्राद्धंशुद्धंचतुर्थकमिति। श्राद्धकाशिकोक्तेः॥
शुद्धंकिंचिदितिज्ञेयं। स्मृत्यंतरे। सप्तत्रिंशच्चयोमासान्श्राद्धेभुंक्तेनमोहतः। स्वपंक्तिदूषितःपापः
प्रेतासीचभवेत्तुसः। तत्रप्रथमेऽब्देवर्षांतसपिंडनपक्षेमृताहात्पूर्वेन्हिसपिंडनमब्दपूर्तिश्राद्धंचकृत्वा
परेद्युर्वार्षिकंकुर्यादितिस्मृत्यर्थसारेउक्तं। कालकांडेहेमाद्रिस्तु। मृताहेसपिंडीकरणेनैववार्षि
कसिद्धिः। पूर्णेसंवत्सरेपिंडःषोडशःपरिकीर्त्तितः। तेनैवचसपिंडत्वंतेनैवाब्दिकमिष्यतेतिवच
नादित्याह। इदमेवचयुक्तम्॥ ॥अथक्षयाहाज्ञानेमरीचिः॥ श्राद्धविघ्नेसमुत्प
न्नेअविज्ञातेमृतेहनि। एकादश्यांतुकर्त्तव्यंकृष्णपक्षेविशेषतः। विशेषतइत्युक्तेशुक्लैकादश्याम
पि। बृहस्पतिः। नज्ञायतेमृताहश्चेत्प्रमीतेप्रोषितेसति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शस्यादथाब्दिकं
दिनमासौनविज्ञातौमरणस्ययदापुनः। प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा॥ मदनरत्ने
भविष्ये॥ मृताहंयोनजानातिमानवोविनतात्मज। तेनकार्यममावस्यांश्राद्धंसंवत्सरंसदा। दिन
मेवतुजानातिमासंनैवंतुयोनरः। मार्गशीर्षेथवाभाद्रेमाघेवातद्दिनंभवेत्। निर्णयामृतेतु। यदा

मासोनविज्ञातोविज्ञातंदिनमेवतु। तदाचाषाढकेमासिमाघेवातद्दिनंभवेत्। इतिबृहस्पतिस्मृतेरत्रा
प्युक्तः। कालादर्शेपि। मासाज्ञानेदिनज्ञानेकार्यमाषाढमाघयोरित्युक्तं। हेमाद्रौप्रभासखंडे। मृता
हंयोनजानातिमासंवापिकथंचन। तेनकार्यममायांस्यात्श्राद्धंमाघेथमार्गके॥ भविष्ये॥ मृ
तवार्त्ताश्रुतेर्यास्यात्तोयपूर्वोक्तक्रमेणतु। पूर्वोक्तेति। प्रस्थानदिनाज्ञानेमासज्ञानेचतद्दर्शे। मासाज्ञा
नेदिनज्ञानेचमार्गोदावितिच। श्रवणदिनेपिज्ञेयमित्यर्थः। श्रवणदिनमासाज्ञानेमाघमार्गदर्शे
कार्यंपूर्वोक्तप्रभासखंडात्। अतोत्रलोपइतिशूलपाण्युक्तंहेयं। तिथितत्त्वेयमः॥ गतस्यनभवे
द्वार्त्तायावद्द्वादशवार्षिकी। प्रेतावधारणंतस्यकर्त्तव्यंसुतबांधवैः। यन्मासियद्दहयोतस्तन्मासित
द्दहःक्रिया। दिनाज्ञानेकुहूस्तस्यआषाढस्याथवाकुहूः॥ ॥अथश्राद्धविघ्ननिर्ण
यः॥ तत्रविप्रस्यनिमंत्रणोत्तरंसूतकेमृतकेचाशौचाभावः। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्म
णि। निमंत्रणाद्धिविप्रस्यस्वाध्यायादिरतस्यच। देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्रा
ह्मोक्तेः। कर्त्तुस्तुविष्णुराह। व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे। आरब्धेसूतकंनस्यादनारब्धेतु
सूतकं। श्राद्धप्रारंभस्तेनैवोक्तः। प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः। नांदीमुखंविवाहादौश्रा
द्धेपाकपरिक्रियेति। माधवीयेब्राह्मेपि। आरब्धेपितृयज्ञेचकन्यादानेचनोभवेत्। मिताक्षरा
यांस्मृत्यंतरे। सद्यःशौचंप्रकृत्य। यज्ञसंभृतसंभारेविवाहेश्राद्धकर्मणीति। तिथितत्त्वादिगौडग्रं
थास्तुनिमंत्रणोत्तरंकर्त्तुर्भोक्तुश्चनाशौचं। निमंत्रणोत्तरंश्राद्धेप्रारंभःस्यादितिस्मृतिरितिवि
ष्णूक्तेः॥ यत्तुश्राद्धेपाकपरिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः। दातुर्गृहेमरणादौब्राह्मेउक्तं। भो
जनार्द्धेतुसंभुक्तेविप्रेदातुर्विपद्यते। गृहेइतिशेषः॥ यदाकश्चित्तदोच्छिष्टंशेषंत्यक्त्वासमाहितः
आचम्यपरकीयेनजलेनशुचयोद्विजाइति। अस्यश्राद्धविषयत्वंहेमाद्रिणोक्तं। पृथ्वीचंद्रोदयेप्ये
वं। ममतुप्रतिभाति। इदंविवाहादिविषयंनतुश्राद्धविषयं। तत्पदाभावात्। विवाहोत्सवयज्ञेषुत्वंतु
पक्वंभुंजानेषुतुविप्रेषुत्वंतरामृतसूतके। अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति। षट्त्रिं
शन्मतेकवाक्यत्वात्। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणीतिपूर्वोक्तविरोधाच्च॥ श्राद्धेतुयद्यपि
विष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्त्तुरेवसः॥ भोक्तुस्तुदोषोस्त्येव। अपिदातृग्रहीत्रो
श्चसूतकेमृतकेतथा। अविज्ञातेनदोषःस्यात्श्राद्धादिषुकथंचन। विज्ञातेभोक्तुरेवस्यात्प्रायश्चि
त्तादिकंक्रमादितिमाधवीये॥ ब्राह्मोक्तेः। आदिशब्देनाशौचमुच्यते। तथाहविष्णुः॥ ब्राह्मणादीना
माशौचेयःसकृदेवान्नमश्नातितस्यतावदाशौचं। यावत्तेषामाशौचव्यपगमेप्रायश्चित्तंकुर्यादिति
यत्तुदेहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्राह्मंतच्छ्राद्धकालीनस्यनिषेधकं। नतदुत्तरका
लीनस्य। शुद्धिदीपस्तुनिमंत्रितेष्वित्यामश्राद्धपरं। भोजनार्द्धेत्वित्यादितन्नश्राद्धपरमित्याह। प्राय
श्चित्तत्त्वेहमार्कंडेयः॥ भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः। एतत्कामतः। अभ्यासेशंखः।
ब्राह्मणस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति। अज्ञानात्तुछागलेयः॥ एकाहंचत्र्यहंपंचसप्तरा
त्रमभोजनं। ततःशुद्धिर्भवेद्विप्रःपंचगव्यंपिबेन्नरः॥ इति॥ वर्णक्रमेणेदं। अभ्यासेतुद्विगुणमित्यादि
मिताक्षरामाधवीयादौज्ञेयं। मिताक्षरामाधवीयादौतुश्राद्धेकर्त्तुर्भोक्तुश्चसर्वथादोषाभावउक्तः॥

आशौचमध्येश्राद्धदिनप्राप्तौतुमाधवीयेकालादर्शेचऋष्यशृंगः॥देयेपितॄणांश्राद्धेतुआशौचंजाय
तेयदा।आशौचेतुव्यतिक्रांतेतेभ्यःश्राद्धंप्रदीयते।श्राद्धचिंतामणौज्योतिषे।इतिसंवत्सरश्राद्ध
माशौचान्तेइतिचयत्।मलमासेपितृकार्यमितिभागुरिभाषितं।आशौचांतदिनत्वेननिमित्त
त्वादित्यर्थः।एतन्मासिकाब्दिकपरंनदार्शिकादौ।अतएवसुदर्शनभाष्येपरपक्षेप्याशौचेति
नियमात्।कृष्णपक्षेश्राद्धलोपेप्रायश्चित्तमेवनतुगौणकालेकरणम्।तच्चोपवासः॥वेदोदिता
नांनित्यानांकर्मणांसमतिक्रमे।स्नातकव्रतलोपेचप्रायश्चित्तमभोजनमितिमनूक्तेरित्युक्तं॥
आशौचेतुप्रायश्चित्तमपिनमुख्यकालेनाधिकारात्।आशौचांतेअसंभवेतुव्यासः।श्राद्धविघ्नेस
मुत्पन्नेअंतरामृतसूतके।अमावास्यांप्रकुर्वीतशुद्धावेकेमनीषिणः॥हेमाद्रौषट्त्रिंशन्मतेपि॥
मासिकेचाब्दिकेत्वह्निसंप्राप्तेमृतसूतके।वदंतिशुद्धौतत्कार्यंदर्शेवापिविचक्षणाः॥गोभिलः॥
देयेमन्याब्दिकेश्राद्धेअंतरामृतसूतके।आशौचानंतरंकुर्यात्तन्मासेदर्शएववा॥मरीचिः॥श्राद्धवि
घ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि।एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः।विशेषतःइत्युक्तेःशुक्ला
यामपिआशौचेतरविघ्नेएतदितिमाधवपृथ्वीचंद्रौ॥यत्त्वत्रिः॥तदहःश्वोथवाद्व्यहेनकेनचित्सूत
कादिना।सूतिकानंतरंकुर्यात्पुनस्तदहरेवचेति।तत्पूर्वकालाभावेज्ञेयं।एतदाब्दिकेतरश्राद्ध
परं॥यत्तुदेवलः॥एकोद्दिष्टेतुसंप्राप्तेयदिविघ्नःप्रजायते।मासेऽन्यस्मिन्तिथौतस्मिन्श्राद्धंकु
र्यात्प्रयत्नतः॥इति।तदपिमासिकपरमितिमदनरत्नेहेमाद्रौच।इदमपिपूर्वकालासंभवे।व्या
ध्यादौविस्मरणेचैवंज्ञेयं॥ ॥अथभार्यारजोदर्शने॥ तत्रदार्शिकमासेनका
र्यं॥श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितं।अमावास्यादिनियतंमाससंवत्सरादृतइति।
हेमाद्रौहारीतोक्तेः॥व्याघ्रपादोपि॥आर्तेवैदेशकालानांविप्लवेसमुपस्थिते।आमश्राद्धंद्विजैः
कार्यंशूद्रःकुर्यात्सदैवहि॥दीपिकापि॥दर्शेतुभार्यार्तवेप्यामश्राद्धविधिंप्रवासिविधुराद्याश्चा
चरेयुर्द्विजाः।वस्तुतस्तुपाकाभावेद्विजातीनामामश्राद्धविधीयते।इतिसुमंतूक्तेः।पाककर्त्तरे
सत्पन्नेनान्यथामेनेतियुक्तं॥मासिकानिसपिंडानिअमावास्यातथाब्दिकं।अन्नेनैवतुकर्त्तव्यं
यस्यभार्यारजस्वलेति।कलिकायांचवचनाच्च।कालादर्शेतु।स्त्रियारजोदर्शनेदर्शश्राद्धंपंच
मेहनीति।पक्षांतरमुक्तं।पारिजातेप्येवं।एवंमहालययुगादावपि।आब्दिकंतुरजोदर्शनेपितृ
दिनेएवकार्यं॥पुष्पवत्सुचदारेषुविदेशस्थोप्यनग्निकः।अन्नेनैवाब्दिकंकुर्याद्धेम्नावामेन
वाक्वचिदिति।माधवीयेलौगाक्षिस्मृतेः॥मरीचिरपि॥अनग्निश्चप्रवासीचयस्यभार्यारजस्व
ला।आमश्राद्धंप्रकुर्वीतनतत्कुर्यान्मृतेहनीति।कार्ष्णाजिनिः॥आपन्नोप्याब्दिकंनैवकुर्यादा
मेनकुत्रचित्।अन्नेनतदमायांतुकृसरेवाहरिवासरे।प्रयोगपारिजाते॥रजस्वलायांभार्यायांस्या
द्धेयःपरित्यजेत्।सर्वेनएकमाप्नोतियावदाभूतसंप्लवं।मासिकानिसपिंडंचअमावास्यातथा
ब्दिकं।अन्नेनैवतुकर्त्तव्यंयस्यभार्यारजस्वला॥देवयाज्ञिकनिबंधेपि॥भर्तुःश्राद्धंपंचमेह्नि
कुर्याद्भार्यारजस्वला।पुत्रःपित्रोःप्रकुर्वीतमृतेहनिशुचिर्यतः॥कालादर्शेपि॥रजस्वलाग
नेऽनग्निर्विदेशस्थोथवाब्दिके।दर्शादाविवनामेनत्वन्नेनश्राद्धमाचरेत्॥अन्यत्रापि॥विदेश

गोवाऽनिर्गताग्निको वा रजस्वलायामपि धर्मपत्न्यां। श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना नतु पंचमे
ह्नि॥ एवं मासिकेपि॥ यत्तु मरीचिः॥ आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला॥ पंचमेहनि तच्छ्राद्धं
न तत्कुर्यान्मृतेहनि। माधवीये। श्राद्धदानं न कर्तव्यं कर्तव्यं पंचमेऽहनीति। उत्तरार्द्धं॥ तदपुत्रस्त्रीक
र्तृकश्राद्धविषयं। अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके। रजस्वला भवेत्सा तु कुर्यात्तत्पंचमेहनी
ति श्लोकगौतमोक्तेः॥ दैवे कर्मणि पित्र्ये च पंचमेहनि शुध्यतीति। प्रभासखंडाच्च। नन्वशुद्धित्वादेव
तत्र पंचमेऽहन्यर्थात् श्राद्धं प्राप्तमिति वचनं व्यर्थं मैवं॥ गर्भिणीसूतिकादिश्च कुमारी वाथ रोगि
णी। यदाऽशुद्धा तदान्येन कारयेत्प्रयता स्वयमिति॥ हेमाद्रौ भविष्योक्तेः॥ अनुपनीतस्त्रीशूद्राश्च
श्राद्धमृत्विजा वा कारयेयुः स्वयं वामंत्रकं कुर्युरिति स्मृत्यर्थसाराच्चान्यद्वाराकरणनिवृत्यर्थत्वात्त
स्य। तदुक्तं दिशाऽऽशौचानंतरं श्राद्धकर्तृत्वमतावदेव। वाक्यवैयर्थ्याच्च। अतः पत्नी पंचमेहनीति शु
क्तम्॥ यत्तु संग्रहात्पित्र्यदेवानां भवेद्योग्या त्वतोर्चने इति तद्रजोनिवृत्तिपरमिति हेमाद्रिभिन्नसर्व
निबंधसिद्धांतः॥ हेमाद्रिस्तु श्राद्धादौ स्त्रिया सहैवाधिकारात् तस्यां रजोदुष्टायां तन्निवृत्तेरेकभा
र्येण पंचमेहनि कार्यं। प्रागुक्तमरीच्युक्तेः। भार्यांतरसत्त्वे तु पुष्पवत्स्वपीति वचनात्तद्दिने एवेत्याह।
दीपिकापि। भार्यंतरौ सति पंचमे च दिवसे स्यादाब्दिकं मासिकं। पक्षान्ने च बहुभार्यकस्त्वधिकृते पत्न्यंत
रे तिष्ठति कुर्यात्तद्दिन एव समुख्ये दिवसे इति॥ तच्चिंत्यं॥ सहाधिकारः सहत्वश्रवणाद्वा एकफलभाक्त्वे
न वा। पाककर्तृत्वेन वा। नाद्यः॥ तदभावात्॥ पाणिग्रहणाद्धि सहत्वं। कर्मस्वित्यस्याग्निसाध्यक
र्मविषयत्वात्। आब्दिकस्य च निरग्नेरपि पाकेनैवोक्तेः स्मार्ताग्निसाध्यत्वानियमात्। तामपृ
ष्ट्वेतिवत् पुष्पवत्स्वपीति पूर्वोक्तवचनसत्त्वाच्च। कथं च भार्यांतरसत्त्वेधिकारः॥ ज्येष्ठया न विने
तरेति नियमात् ज्येष्ठापरत्वे च तेनैव सिद्धे वचनवैयर्थ्यात्। न द्वितीयः॥ अविभक्तभ्रातॄणां चैकस्या
शुचित्वेन्यस्यानाधिकारापत्तेः। न तृतीयः॥ प्रवासनिर्देशसूतिकारोगिण्यादिष्वप्यकरणाप
त्तेः॥ आरभेत नवैः पात्रैरन्नारंभं च बांधवैः। इति देवलोक्तौ वात्मनेपदात्स्वस्य बांधवानां च पा
ककर्तृत्वोक्त्या विरोधाच्च। अथ ततस्तानि पयाचाशुचीता जनकनंदिनीति पायसादिलिंगात्॥
प्राशस्त्यं भार्यापाकस्योच्यते न तत्कस्याप्यनिषेधे तेनैतद्वचनप्रवृत्त्याद्यभावात्पूर्वोक्तवचो विरोधा
च्च। यत्किंचिदेव। यदपि श्राद्धीयाहनि संप्राप्ते यस्य भार्या रजस्वला। श्राद्धं तत्र न कर्तव्यं कर्तव्यं
पंचमेहनीति। श्लोकगौतमपाठोऽन्यथा दर्शितः। माधवीये च तद्दशान्यक्षांतरमुक्तं। तेनापि
नाभिप्रेतार्थसिद्धिः। यस्य प्रेतस्येत्यर्थात्॥ तेनात्र हेमाद्रिर्भ्रांत इति। बहुवक्तव्येपि नोच्यते॥
॥०॥

॥अथान्वारोहणे निर्णयः॥ लौगाक्षिः॥ मृताहनि समासेन पिंड
निर्वपनं पृथक्। नवश्राद्धं च दंपत्योरन्वारोहण एव तु। समासेन तंत्रेण हि पित्रकश्राद्धवद्द्वयो
रेकः पिंडो विप्रश्च। विप्रशब्दः श्राद्धपरः नवश्राद्धं पृथगिति हेमाद्रिपृथ्वीचंद्रौ। अत्र मृताहनी
त्येकत्वाद्दिनभेदे दिनैक्यं चामतिथ्यैकत्वे कालैक्यं कर्त्रैक्यं पाकैक्यं च। एकचित्यधिरोहेत्
तिथिरैक्यैव जायते। एकपाकेन पिंडैक्यं द्वयोर्गृह्णीत नामनी इति स्मृत्यंतराच्च॥ अन्ये द्विपद्धतो
भेदैरप्युदाहृतं। अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया। पिंडदानक्रिया तद्वच्छ्राद्धं प्रत्याब्दि

केनयथा। नवश्राद्धानि सर्वाणि सपिंडीकरणं पृथक्। एकएववृषोत्सर्गो गौरेकातत्रदीयते॥ इति॥
तिथिभेदे तु वार्षिकं पृथगेव। तथा॥ वार्षिके समासविधानादन्यत्र सर्वत्र पृथक्त्वे प्राप्ते नवश्राद्धमे
व पृथगिति परिसंख्ययान्यत्र पृथक्त्वे पित्रादिकषोडशश्राद्धतीर्थसपिंडनान्वष्टकादिषु समास
एवेति मदनपारिजातनिर्णयामृतादयः। अतः समासविधिबलाज्ज्येष्ठपुत्रस्य कर्तृत्वे सापत्न्य
मातुरन्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकमविभक्तः सापत्न्यपुत्र एव ज्येष्ठः कुर्यान्नौरसः। व
क्ष्यमाणपृथ्वीचंद्रादिमते तु औरस एव मातुः पृथक् कुर्यात्। एवं बह्वीष्वपि मातृषु ज्ञेयम्। त्रिस्थली
सेतौ पितामहचरणैरप्येवमुक्तं। यत्तु गार्ग्यः। एकचित्यां समारूढौ दंपती निधनं गतौ। पृथक् श्राद्धं
तयोः कुर्यात् ओदनं च पृथक् पृथक्। ओदनं पिंडः॥ तन्नवश्राद्धविषयं। यत्तु भृगुः॥ या समारोह
णं कुर्याद्भर्तुश्चित्यां पतिव्रता। तां मृताहनि संप्राप्ते पृथक् पिंडे नियोजयेत्॥ प्रत्यब्दं च नवश्राद्धं युग
पत्तौ समापयेत्॥ तद्येषां वार्षिकमेकोद्दिष्टमुक्तं तद्विषयं। प्रत्यब्दं मृताहनीत्यन्वयः। नवश्राद्धं युगप
दिति। दर्शवद्गेहपवदेकतंत्रेण पृथगित्यर्थमाह हेमाद्रिः॥ एतन्मृततिथिभेदविषयमिति पृथ्वीचंद्र
निर्णयामृतादयः। देवयाज्ञिकोप्येवं॥ पराशरमाधवस्तु गार्ग्यभृग्वादिवचनाल्लौगाक्षिवाक्ये स
मासेन पाकादितंत्रैक्ये न दर्शवद्गेहपवत् पृथक् श्राद्धं नवश्राद्धं च तथेत्याह। पृथ्वीचंद्रचंद्रिकादयस्तु
द्वयोरेकपिंडदाने लौगाक्षिवचनं चापद्विषयं पृथक् पिंडदानं तु मुख्यः कल्पः। तदाह बृहत्पराशरः।
आरुह्य भर्तुश्चितिमंगना या माप्नोति मृत्युं खलु सत्त्वयुक्ता। एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक्
स्वर्गमवेक्ष्य सद्भिः॥ एकत्वमिच्छंति मतिप्रहीना एकादशाहादिषु ये नरा ये। ते स्वर्गमार्गं विनिह
त्य कुर्युः स्त्रीसत्त्वघातान्नरकाधिवासं॥ भर्त्रा सह मृता या तु नाकलोकमभीप्सती। साहं श्राद्धं पृथक्
पिंडान्नैकत्वं तु स्मृतं तयोः॥ पृथगेवाह्निकं तंत्रं श्राद्धमेकादशाहिकं। यानि श्राद्धानि सर्वाणि तान्यु
क्तानि पृथक् पृथक् इति॥ विश्वादर्शेपि॥ मातुर्गयाप्रकारवृद्धिमृताहेषु महालये। श्राद्धं कुर्यात्पृथक्
दैवं तंत्रं चानुगतावपि। एकचित्यां समारुह्य मृतयोरेकबर्हिषः। पित्रोः पिंडान् पृथक् दद्यात् पिंडं त्वाप
त्सु तत्सुतः॥ इत्यग्निस्मृतेरित्याहुः॥ यत्तु षट्त्रिंशन्मते। एकत्वं सा गता भर्तुः पिंडे गोत्रे च सूतके। न पृथ
क् पिंडदानं तु तस्मात्पत्नीषु विद्यते। इति तद्दर्शादिपरं। चंद्रप्रकाशेपि॥ एकचित्यां समारूढौ दंपती प्रम
तौ यदि। पृथक् श्राद्धं प्रकुर्वीत पत्युरेव स्वयेहनि। मृतानामपि भृत्यानां भार्याणां पतिना सह। तंत्रेण श्र
पणं कृत्वा श्राद्धं स्वामिक्षयेहनि। पूर्वकस्य मतः स्याद् द्वितीयस्य ततः पुनः। तृतीयस्य ततः कुर्यात्स
न्निपाते क्रमस्त्वत इति। सहगमने सर्वं तच्छ्राद्धार्थमेकः पाक इत्याह। मदनरत्ने प्रचेताः। एकचित्यां समा
रूढौ मृयते दंपती यदि। तंत्रेण श्रपणं कुर्यात्पृथक् पिंडं समाचरेत्॥ पृथ्वीचंद्रोदयेप्येवं। अत्र भर्तुराशौ
च। मध्येन्यदिने अनुगमनेन स्त्रीमरणे पतिमरणदिनगणनयाशौचपिंडदानैकादशाहादिकार्यं।
नात्र पक्षिणीवृद्धिः। मृतंपतिमनुव्रज्य पत्नी चेदनलं गता। ततस्तु पक्षिणी कार्या येतत्कादेवशुध्यति।
पुत्रोन्यो वाग्निदस्तस्यास्तावदेव शुचिस्तयोः। नवश्राद्धं सपिंडं च युगपत्तु समापयेत्॥ इति षडशीतिम
तात्॥ यदा नारी विशेदग्निं प्रियस्य प्रियवांछया। तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि। लघुहा
रीतोक्तेश्च। भर्त्राशौचोत्तरमन्वारोहणे तु त्र्यहमाशौचं। ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी

अहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वतमिति ब्राह्मोक्तेरिति पृथ्वीचंद्रापरार्कौ॥ एतदन्वारोहण एव
नत्वेकचितावृग्वेदवादात् इमा नारीरविधवेत्यादिः। एतदसवर्णापरमित्यन्ये॥ स्मार्तगौडास्तु दे
शांतरे मृते पत्न्या साध्वीत्याद्युक्तद्वयमित्युपक्रम्य प्राप्तेऽहाशौचे तु निर्वृत्त इत्युक्तेर्भर्त्राशौचोत्त
रमन्वारोहणेऽहः। सहगमने तु पूर्णं दशाहादि। पिंडास्तु दश भिन्ना एव। तथा च ज्ञिकनशूलपा
णिधृतव्यासः। संस्थितं पतिमालिंग्य प्रविशेद्या हुताशनं। तस्याः पिंडादिकं देयं क्रम
शः पतिपिंडवत्। अन्विता पिंडदानं तु यथा भर्तुर्दिने दिने। तदर्थं रोहणी यस्मात्तस्मात्सा ना
त्मघातिनीति। विष्णूक्तेश्च॥ पृथक्चितौ तु भर्तृशौचमध्ये तदूर्ध्वं वा सत्यामन्वारोहेणादशपिंडाः॥
अन्वितायाः प्रदानं स्याद्दशपिंडास्त्र्यहेण तु। स्वाम्यशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयत इति तत्रैव
पैठीनसिस्मृतेः। भर्त्रशौचोत्तरं मृतौ तु चतुर्थेऽह्नि श्राद्धं। शूलपाणिना त्विदमग्निपुराणीयत्वेनोक्तं
पुरुहूतस्य सद्यःशौचे त्वन्वारोहणे त्रिरात्रं। एकचितौ संस्थितं पतिमिति प्रागुक्तव्यासोक्तेः सद्यः
शौचमित्याहुः। अन्यसपिंडाशौचमध्येऽन्वारोहणं त्वनाशंक्यमेव। आशुचितायां गतत्वात्। अन्ये
तु रजोवत्याः सूतिकायाश्च गमननिषेधादितराशौचे तस्या निषेधः। अन्यथा प्रत्यक्षभर्तृमरणे का
गतिरित्याहुः। तन्मूलवचनं विना चिंत्यमेव। स्मृत्यर्थसारे॥ सहगमने सर्वत्र श्राद्धपिंडादौ पाकै
क्यं कालैक्यं कर्त्रैक्यं चेति। यातु पतिमुद्दिश्यान्यकालेऽन्यतिथौ वन्ह्यारूढा तस्याः श्राद्धं तत्क्षय
तिथौ कार्यं न भर्तृतिथौ। पार्वणे मरणोत्तरणा। तिथिस्तात्कालिकी स्मृतेति स्कांदात् तिथिरेकैव
जायत इत्यादिवचनाच्चेति मदनपारिजातपृथ्वीचंद्रादयः। अन्ये तु तस्याः पतिमरणेन मृतप्रा
यत्वात्। सहायतः पृथग्वा तदन्त्या म्रियते यदि। तस्याः श्राद्धं प्रदातव्यं पृथक्पत्युः क्षयेऽहनी
ति स्मृत्यंतरात्। अयतः पृथग्वापि तदन्त्या म्रियते यदि। तस्याः श्राद्धं सुतैः कार्यं पत्युरेव क्षये
ऽहनीति पुराणसमुच्चयाच्च भर्तृतिथावेवेत्याहुः। अत्र मूलं चिंत्यं॥ अत्र विशेषो हेमाद्रौ स्मृत्यं
तरे॥ माता मंगलसूत्रेण म्रियते यदि तद्दिने। उद्दिश्य विप्रपंक्तौ तां भोजयेच्च सुवासिनीम्॥
॥०॥

## ॥अथ श्राद्धसंपाते निर्णयः॥

तत्र पित्रोर्मृततिथ्यैकत्वे मरणक्रमे
णादर्शवद्गृह्यवत्तंत्रेण श्राद्धं कुर्यात् यो वा पूर्वं मृतस्तेन तु पितृपूर्वं कुर्यादिति हेमाद्रिमाधवादयस्तु
पितृश्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा। पितृपूर्वं सुतः कुर्यादन्वत्रासन्नियोगत इति कार्ष्णाजिनि
स्मृतेः। सर्वत्र पितृपूर्वं भिन्नप्रयोगमाहुः। पार्वणैकोद्दिष्टयोः संपाते माधवीये जाबालिः॥ यद्ये
कत्रो भवेत्प्राप्तमेकोद्दिष्टं च पार्वणं। पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्। गृहदाहादिना
युगपन्मरणे तु भृगुः॥ एककालगतानां तु बहूनामथवा द्वयोः। तंत्रेण श्रपणं कृत्वा कुर्याच्छ्रा
द्धं पृथक्पृथक्। पूर्वं कस्य मृतस्यादौ द्वितीयस्य ततः पुनः। तृतीयस्य ततः कुर्यात्संनिपाते त्वयं
क्रमः॥ ऋष्यशृंगः॥ भवेद्यदि सपिंडानां युगपन्मरणं तदा। संबंधासत्तिमालोच्य तत्क्रमाच्छ्रा
द्धमाचरेत्॥ गार्ग्यः॥ एकेनैव तु पाकेन श्राद्धानि कुरुते त्विह। विकरं त्वेकतः कुर्यात्पिंडान्दद्या
त्पृथक्पृथक्। अत्रानुगमने च दाहः सपिंडनादौ विशेषं वक्ष्यामः॥ अत्रिः॥ बहूनामथवा
द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि। तंत्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक्। [illegible]॥ महा

त्पे गयाश्राद्धे गतानां स्वयेहनि। तन्त्रेणाश्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक्। इदं च पृथक्पाकेन भिन्नश्राद्धाशक्तौ। पृथक्पाकेन सर्वथा सन्यास्याश्राद्धभेदस्तु मुख्यः पक्षः। एकत्रैव दिने श्राद्धद्वयं प्राप्तं यदा तदा चरेद्देवपुत्र एवर्क्षात्पितुर्मातुश्च तत्सुतः। एकस्मिन्यः करोत्यह्नि द्वयोः श्राद्धं यदा द्विजः। तदा पूर्वं मृतस्यादौ कृत्वा स्नात्वा यथाविधि। पश्चात्पश्चान्मृतस्यैव पृथक्पाकैः समाचरेत्॥ नैकस्मिन्दिवसे श्राद्धत्रयाणां कुत्रचिद्द्विजः। एकः कुर्यात्तथा शास्त्रे अन्यो भ्राता समाचरेत्॥ भ्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत्। अन्यथा श्राद्धहंता स्यात्श्राद्धसंकरकृद्भवेदिति। आश्वलायनोक्तेरिति पृथ्वीचंद्रः॥ कात्यायनः॥ द्वे बहूनि निमित्तानि जायेरन्नेकवासरे। नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्॥ जाबालिः॥ श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने॥ नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयं। कालादर्शे॥ नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि। दार्शिकस्य युगादेश्च दार्शिकालाभ्ययोगयोः। दार्शिकस्य च मन्वादसंपाते श्राद्धकर्मणः॥ प्रसंगादितरस्यापि सिद्धेरुत्तरमाचरेत्। अस्य देवताभेदे सिद्धेरुत्तरमपवादः। नाहस एव। नित्यस्य चोदकुंभस्य नित्यमासिकयोरपि नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि। युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा। प्रत्याब्दिकस्याप्यलभ्ययोगेषु विहितस्य च। संपाते देवताभेदात् श्राद्धयुग्मं समाचरेत्॥ निमित्तानियमितश्चात्र पूर्वानुष्ठानकारणं पित्रोस्तु पितृत्वं सर्वत्र श्राद्धकर्मणि। माधवीयेऽपि तत्संग्रहे॥ कामं तंत्रेण नित्यस्य तंत्रश्राद्धस्य सिध्यति॥

॥अथ श्राद्धांगतर्पणम्॥

पारिजातपृथ्वीचंद्रोदये गर्गः॥ पूर्वे तिलोदकं कृत्वा आमश्राद्धं तु कारयेत्। प्रत्यब्दे न भवेत्पूर्वे परेह्नि तिलोदकं। पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकं। न च नित्यतर्पणस्यैवायं परेह्न्युत्कर्षः न तु श्राद्धांगतर्पणमस्तीति वाच्यं। यस्तर्पयति तान्विप्रः श्राद्धं कृत्वा परेहनि। पितरस्तेन तृप्यंति न चेत्कुप्यंति वै भृशमिति। गर्गेण फलनिंदार्थवाभ्यामगत्यौक्तेः। श्राद्धप्रकाशादर्शेऽपि। दहनारदीये प्रत्याब्दिकप्रक्रम्य। परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन्। तस्यते पितरः क्रुद्धाः शापं दत्त्वा व्रजंति हि॥ पितृशब्दश्च श्राद्धेज्यवर्गपरः। तेन तर्पणस्य पशुपुरोडाशयागवत्स्वरुप्रहरणवच्च देवतासंस्कारकता। तेनाब्दिकदिने नित्यस्यापि प्राग्दिनतर्पणं कार्यमेव। श्राद्धांगभूतस्यैव परेद्युरुक्तेः। तदुक्तं। प्रत्यब्दांगं तिलं दद्यान्निषेधेऽपि परेहनि। वर्गैकस्य च चोयेषु मन्येषां तु विवर्जयेत्॥ क्वचिद्विशेषमाह गर्गः॥ कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्॥ पितॄणां प्रत्यहं कार्यं निषिद्धाहेपि तर्पणं। तर्पणं तिलतर्पणम्। निषिद्धाहेपीत्युक्तेः सकृन्महालये श्वः स्यादष्टकास्तत एव हि। अत्र सप्तमीनिर्देशाद्गितास्वेव। तत्र जपान्जुहुयात्। मंत्रेण पणी पापं मंत्रेणातः सर्वेष्वादिवत्॥ अस्यापवादे दहनारदीये। वृद्धिश्राद्धे सपिंडे च प्रेतश्राद्धे नु मासिके। संवत्सरविमोके च न कुर्यात्तिलतर्पणम्। तदयमर्थः। दर्शे विप्रनिमंत्रणोत्तरं पाकारंभोत्तरं वा श्राद्धप्रयोगस्यारब्धत्वात्। ब्रह्मयज्ञोत्तरं नित्यतर्पणे नैव श्राद्धांगतर्पणस्य तंत्रेण प्रसंगेन वा सिद्धिः॥ ततः पूर्वं वैश्वदेवोत्तरं ब्रह्मयज्ञकरणे श्राद्धांगतर्पणं पृथक्कार्यं। पित्रोर्वार्षिके तु नित्यतर्पणं तिलवर्जं कार्यं॥ नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणं। श्राद्धं कृत्वा परेह्नि च तर्पणं तु तिलैः सहेति वचनात्

सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि। तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः। इति स्मृतिरत्नावल्यां वृद्ध
मनूक्तेश्च। अत्र नित्यतर्पणे तिलमात्रनिषेधः न तु तर्पणस्य तिलैरित्यस्यैव वैयर्थ्यापत्तेः। यत्तु कात्तीयं। उपरा
गे पितुः श्राद्धे पाते माघ्यां च संक्रमे। निषिद्धेपि हि सर्वत्र तिलैस्तर्पणमाचरेदिति। तत्परेद्युः श्राद्धांगतर्पण
विषयमिति केचित्। श्राद्धाशक्तस्य तत्स्थानापन्नतर्पणविषयमिति तु युक्तं सकृन्महालये परेद्युस्तर्पणं।
अष्टकासु तु सप्तम्यष्टमीश्राद्धयोरंते तद्देववर्गद्वयस्य। अन्वष्टक्ये तु मातृवर्गस्यापि। तीर्थश्राद्धे दर्शवत्तन्मा
घावर्षादिश्राद्धषट्कावदंते। अनेकश्राद्धसंपाते तु पद्धिप्रसंगसिद्धिस्तदा तदीयमेव तर्पणं। तंत्रत्वे तु श्राद्ध
समसंख्यत्वे आदावंते वा। विषमसंख्यायां बह्वनुरोध इति। तस्मात् श्राद्धांगतर्पणं सिद्धं। तद्विधिः संग्रहे
स्नात्वा तीरं समागत्य उपविश्य कुशासने। संतर्पयेत्पितॄन्सर्वान् स्नात्वा वस्त्रं च धारयेत्। तर्पणे तु तरं नि
मज्जनं कृत्वेत्यर्थः। अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले। नामगोत्रस्वधाकारैर्द्वितीयांतेन तर्पये
त्। तत्र वस्वादिरूपतोक्ता स्मृत्यर्थसारे। वसुरुद्रादितिसुतान् श्राद्धार्थे तर्पयेत्पितॄन्। तच्च बह्वृचानां दक्षि
णेनैव। दक्षिणं प्रतिपादनादेश इति सूत्रात्। अत्र प्रत्यंजलिमंत्रावृत्तिः। निर्वापवत् संध्यार्घ्यदानवच्च
द्रव्यभेदात्। अवघातवेदिप्रोक्षणादौ तु द्रव्यैकत्वान्न मंत्रावृत्तिः। केचित्तु परिव्याणमंत्रवत्क्रियमाणा
नुवादित्वेन करणत्वाभावान्न सकृदिच्छंति। तन्न। तत्र प्रपदव्यैकार्थ्यात् परिवीरसीति करणभूतमंत्रांतरस्
त्वात् अन्यतरेण व्यवधानात्तयोरुभयोः करणत्वायोगात्। कर्तृभेदेन विकल्पायोगाच्च। क्रियमाणानुवा
दित्वे। न त्वत्र तथा बोधापनादिवचनाकरणत्वमेव। तेनावृत्तिरेव युक्ता। एवं नित्येपि। यत्तु संग्रहे ना
म्ना पठंति पित्रोः क्षयाहे संप्राप्ते यः कुर्यान्नित्यतर्पणं। आसुरं तद्भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत्। सर्वदा
तर्पणं कुर्यात् ब्रह्मयज्ञपुरःसरं मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेदिति। तत्समूलत्वे तु तिल
विषयं यच्च पठंति कपिलः। मन्वादिषु युगाद्यासु दर्शे तत्क्रमणेषु च। पौर्णमास्यां व्यतीपाते दद्या
न्नैव तिलोदकम्। अर्द्धोदये गजच्छाये षष्ठ्यां चैव महालये। भरण्यां च मघाश्राद्धे तद्दत्ते तर्पणं
विदुः। शौनकः। मातापित्रोर्मृताहे तु परेऽहनि तिलोदकं। कारण्यश्राद्धविषये सद्यो दद्यात्ति
लोदकं। एतन्निर्मूलम्॥ ॥अथ तिलतर्पणनिषेधः॥ गार्ग्यः॥ भानौ भौ
मे त्रयोदश्यां नंदाभृगुमघासु च। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥ स्मृत्यर्थसारे॥
विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकं। अर्द्धं तदेव वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणं। हेमा
द्रौ मरीचिः॥ सप्तम्यां रविवारे च गृहे जन्मदिने तथा। निशासंध्यासु पुत्रार्थी न कुर्यात्तिलतर्प
णं। यत्तु संग्रहे॥ नंदायां भार्गवदिने कृत्तिकासु मघासु च। भरण्यां भानुवारे च गजच्छायाद्वये
तथा। अयनद्वितये चैव मन्वादिषु युगादिषु। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणमिति॥
तच्चिंत्यं॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्य इत्यादिविरोधात्। अत्रापवा
दः॥ पृथ्वीचंद्रोदये॥ तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके॥ निषिद्धेपि दिने कुर्यात्तर्पणं ति
लमिश्रितं। स्मृत्यर्थसारेपि। तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदेति। गोभिलः॥ तिलाभावे
निषिद्धाहे सुवर्णरजतान्विते। तदभावे निषिद्धे तु दर्भैर्मंत्रेण वा पुनः। पतितस्य तिलोदकं व
क्ष्यामः॥ ॥अथ वृद्धिश्राद्धं॥ तन्निमित्तं पृथ्वीचंद्रोदये॥ ब्राह्मे॥

जन्मन्युपनयने विवाहे पुत्रकस्य च पितॄन्नांदीमुखान्नाम तर्पयेद्विधिपूर्वकं। वेदव्रतेषु चाधान
यज्ञपुंसवनेषु च॥ नचान्नभोजने स्नाने ऊढायाः प्रथमार्तवे। देवारामतडागादिप्रतिष्ठासूत्सवेषु
च॥ राज्याभिषेके बालान्नभोजने वृद्धिसंज्ञकान्॥ वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सम्यगेव वा
पितॄन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये॥ आदिपदात्संन्यासः॥ विष्णुपुराणे॥ यज्ञोद्वाहप्र
तिष्ठासु मेखलाबंधमोक्षयोः। पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्॥ तत्र नामकर्मणि बा
लानां चूडाकर्मादिके तथेत्युक्ते निष्क्रमान्नप्राशनयोर्नश्राद्धमिति मैथिलाः॥ तन्न॥ पूर्वोक्तवि
रोधात् नानिष्क्रेति निषेधात्॥ सुतोत्पत्तौ तथा श्राद्धमन्नप्राशनिके तथेति राजमार्तंडाच्च। यत्तु
छंदोगपरिशिष्टं॥ स्वयैर्होः कर्मणीये च तयोः श्राद्धं न विद्यते। इति तत्तेषामेवेति कल्पतरुः॥ वृ
ह्वत्कारिकायां। स्यादभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु। पुंसः सवनसीमंतचौलोपनयने वि
हे। विवाहे चानलाधेयप्रभृतिश्रौतकर्मसु। इदं श्राद्धं प्रकुर्वीत द्विजा वृद्धिनिमित्तकं। अस्येषो
डशसंस्कारेष्वावश्यादिष्वपीष्यते। वाप्याद्युद्यापनादौ न कुर्युः पूर्तनिमित्तकं। बोपदेवः॥ का
लादर्शे। सीमंतव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्र
तिष्ठासु च॥ पुंसूत्यावसथप्रवेशनसुताद्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेकदयिता
द्यर्त्तौ च नांदीमुखं। मत्स्यकामधेनौ। जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु। वत्सराभ्यंतरेऽपि
नोर्धपस्योत्सर्गकर्मणि। वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेदिति तत्र जलाशये वृद्धिश्राद्धस्य
निषेधो न तु कर्मांगस्येति केचित्। अन्ये त्वस्य निर्मूलतामाहुः। श्राद्धकौमुद्यां निर्णयामृते च पा
न्ये। अन्नप्राशे च सीमंते पुत्रोत्पत्तिनिमित्तके। पुंसवे च निषेके च नववेश्मप्रवेशने देववृक्षजला
दीनां प्रतिष्ठायां विशेषतः। तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितं। इदं चावश्यकं॥ वृद्धौ न
तर्पिता यैर्वै पितरो गृहमेधिभिः तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः इति शातातपोक्तेश्च॥ अत्र
श्राद्धत्रयमस्त्येवाह। मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरं। ततो मातामहानां च वृद्धौ श्राद्धत्रयं
स्मृतं। तत्कालमाह पृथ्वीचंद्रोदये गार्ग्यः॥ मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरं। ततो माता
महानां च वृद्धौ श्राद्धत्रयं स्मृतं॥ अशक्तौ तु शातातपः॥ पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृ
कं तथा ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतं॥ अत्राप्यशक्तौ स एव। पृथग्दिनेष्वशक्त
श्चेदेकस्मिन्पूर्ववासरे। श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकमिति॥ वृद्धमनुरपि॥ अलाभे
भिन्नकालानां नांदीश्राद्धत्रयं बुधः पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकं। अत्र महत्सु पूर्वेद्यु
रहःस्वल्पेष्विति गृह्यपरिशिष्टात् व्यवस्था ज्ञेया। तच्च प्रातरेव। पार्वणं चापराह्णे तु प्रातर्वृद्धि
निमित्तकमिति शातातपोक्तेः। अत्र प्रातः शब्दः सार्धप्रहरपरः॥ प्रहरोऽर्धसंयुक्तः प्रातरि
त्यभिधीयते इति गार्ग्योक्तेरिति पृथ्वीचंद्रः। इदं च पुत्रजन्मातिरिक्तविषये। तदाहात्रिः॥ पूर्वा
ह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकं। पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुध इति। एतदनि
यतनिमित्तपरं। नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकं। तेषामनियतत्वे तु तदानंतर्यमिष्य
ते इति लौगाक्षिस्मृतेः॥ आधानांगं नांदीश्राद्धं त्वपराह्णे एव। आमश्राद्धं तु पूर्वाह्णे सिद्धा

मिति निर्णयामृते गालवोक्तेः ॥ नांदीमुखाद्
यं प्रातराग्निकं त्वपराह्णत इति विष्णूक्तेश्च ॥ इदं च मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्यं ॥ तत्र
ःसपत्नीकाः वृद्धप्रमातामहमातामहानां सपत्नीकानामिति पृथ्वीचंद्रोदये गारुडे ॥ ग
द्यरूपेणापागत् हेमाद्रौ शंखः नांदीमुखे सत्यवसुसंकीर्त्तौ वैश्वदेविके ॥ वृद्धपराशरः ॥ नांदीमु
खेभ्यो देवेभ्यः प्रदक्षिणाकुशासनं ॥ पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः
नांदीमुखे विवाहे च प्रपितामहपूर्वकं । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकं । यत्तु स्मृत्यर्थसारे
वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुंजत इति ॥ यच्च गारुडे व्युत्क्रमप्रतिपादनं तच्छाखान्तरविषयं । पि
तृभ्यः पितामहेभ्य इति बह्वृचपरिशिष्टे कात्यायनेन चानुलोम्याम्नानात् । पृथ्वीचंद्रोदयेप्येवं । यत्तु
केचिद्वृद्धपदं पित्रादिषु प्रयुंज्यते ॥ तन्न ॥ अनत्स्यवृद्धशब्दानामरूपाणामगोत्रिणां ॥ अनाम्ना
मतिलाद्यैश्च नांदीश्राद्धं तु सव्यवदिति पृथ्वीचंद्रोदये संग्रहोक्तेः । न च निषेधादेव विधिः कल्प्यत
इति वाच्यं ॥ सौषपदीश्राद्धप्रपितामहान्येषां वृद्धपित्रादीनां देवतात्वान्नांदीश्राद्धत्वसाम्येने
हापितन्याप्तौ निषेधात् । गोत्रनामादिनिषेधस्तु शुभार्थी प्रथमाने न वृद्धौ संकल्पमाचरेत् इत्युप
क्रम्यानस्मृद्वृद्धशब्दानामित्युक्तेः संकल्पः श्राद्धपरः सपिंडके तु सर्वं भवतीति प्रयोगपारिजातः ।
गोत्रनामभिरामंत्र्य पितृभ्योर्थं प्रदापयेदिति छंदोगपरिशिष्टेन द्विधानात् ॥ यत्तु ब्राह्मे ॥ पिता पि
तामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः । तेभ्यः पूर्वतरा ये च प्र
जावंतः सुखेधिताः । ते तु नांदीमुखा नांदी समृद्धिरिति कथ्यते इति । यच्च मार्कंडेयपुराणे ॥ ये स्युः
पितामहादूर्ध्वं ते तु नांदीमुखाः स्मृताः । इति तज्जीवत्पित्रादित्रिककर्तृकवृद्धिश्राद्धविषयमि
ति कल्पतरुः । तेन नत्सेदमवश्यकं । यत्तु विष्णुः ॥ मदनपारिजातेप्येवं ॥ हेमाद्रिस्तु ॥ नांदीमुखा
नां श्राद्धं तु कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथेति सौषपदीश्राद्धे कव
प्यत्वात्तत्रैव पूर्वेषां देवतात्वमित्याह अत्र सत्यवसू विश्वेदेवावित्युक्तं शाका । यत्तु शातातपः ॥ मा
तृश्राद्धं तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथगिति । तद्भिन्नप्रयोगमातृश्राद्धपरं । यच्च मार्कंडेयपुरा
णे ॥ विश्वेदेवविहीनं तु केचिदिच्छंति मानवा इति । तद्भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वये वि
श्वेदेवविकल्पार्थं । प्रयोगैक्ये तु दैवनियम इति हेमाद्रिः । एतच्च मातृपूजापूर्वकं कार्यं ।
मातृकायागयः श्राद्धे परिवेषयेत् । तस्य क्रोधसमाविष्टा हिंसामिच्छंति मातर इति शातातपोक्तेः
मेपि । पुष्पैर्धूपैः सनैवेद्यैर्गंधाद्यैर्भूषणैरपि । पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः । छंदोग
परिशिष्टे ॥ कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः ।
प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु । अपि वाक्षतपुंजेषु नैवेद्यैश्च पृथग्विधैः ॥ कुड्यलग्नां वसो
र्धारां सप्तधारां घृतेन तु । कारयेत्पंचधारां वा नातिनीचां न चोच्छ्रिताः ॥ आयुष्याणि च शांत्यर्थं जप्त्वा
हृतः षड्भ्यः पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् । अत्र सर्वेषां तिथिग्रहणाद्गृहयज्ञतद्धिका
पि नित्यश्राद्धं नांदीश्राद्धानुपितॄन् श्राद्धकर्म किंचित्समाचरेदिति शातातपोक्तेश्च
रातच्छाखीयानां नियतता । अन्येषां त्वनियतता । वह्न्यल्पं च स्वल्पं गृह्योक्तमित्युक्तेः । कारणं त्वभ्युदयः ।

पत्न्याश्चान्त्यशाखायामित्युक्तेः। आयुष्याणिश्चानो भद्रा इत्यादीनि। षड्भ्य इति मात्रादित्रिकोपलक्षण-
मिति पृथ्वीचन्द्रः॥ छंदोगानां षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः॥ मम तु मते कोकिलमतानुसा-
रिणां मातृमातामहप्रमातामहा इति मात्रा सहैव मातामहश्राद्धाचरणात् द्विषयमिदं षड्भ्य इति मा-
तरस्तत्रैवोक्ताः॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमा-
तरः। धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह। गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश॥ मातरो लो-
कमातर इति सर्वविशेषणं। तेन चतुर्दशत्वं। यद्वा षोडशेति पाठस्तदा देवतान्तरं। चंद्रिकायां चतुर्द-
शेति मतत्वन्या उक्ताः। तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः प्रोक्ताः पितुर्मा-
तुः स्वसाष्टमी आसां जीवने प्रत्यक्षं पूजनं मृतानां त्वक्षतपुंजेष्विति हेमाद्रिः॥ ब्रह्माण्याद्यास्तथा
सप्तैव गोत्रेण गणाधिपान्। कृष्णादी पूजयित्वा तु पश्चान्नांदीमुखान्पितॄन्। मातृपूर्वान्पितॄन्
इत्यतो मातामहानपि। मातामही स्ततः केचिद्युग्मा भोज्या द्विजा नव इति। अत्र द्वादशदेवत-
स्य देशाचारतो व्यवस्था॥ ब्रह्माण्याद्याः॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही
च तथेंद्राणी चामुण्डा सप्त मातर इत्यपरार्के उक्ताः। अत्र चौलादीनां यौगपद्ये तंत्रेणोक्तं छंदोग
परिशिष्टे। गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु॥
मातृभ्य इति षष्ठ्यर्थे चतुर्थी। गणशः एकानेकपुत्राणां संस्कारैकैकदिने एकदेशकालकर्त्रैक्या-
दित्यर्थः॥ तथाऽत्रस्कंधानि कर्माणि क्रियेरन्कर्मकारिणः। प्रतिप्रयोगं नैव स्युः मातरः सग-
णाधिपाः। कर्मादावपि कुर्वीत श्राद्धं कार्यं कुत्रेत्युक्तं तत्रैव। आधानहोमयोश्चैव वैश्वदेवे त-
थैव च। बलिकर्मणि दर्शे च पौर्णमासे तथैव च॥ नवयज्ञे च यज्ञज्ञा वदंत्येवं मनीषिणः। ए-
कमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक्। एषु प्रतिप्रयोगं नावर्त्तते किंत्वादौ। एतद्भिन्ने सोमया-
गादौ तु प्रतिप्रयोगमावर्त्तत एव श्राद्धमित्यर्थः। क्वचिदादावपि निषेधमाह। स एव। नाष्टकासु
भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यंतीजातकर्म प्रोषितागतकर्मसु। विवाहादिकर्मग-
णे य उक्तो। गर्भाधानं शुश्रूमोपस्यंतो विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः क-
र्मणः स्यात्। सोष्यंत्या आसन्नप्रसवायाः सोष्यंतीमभ्युक्ष्येत्युक्तं कर्म। कात्यायनोक्तस्य श्राद्ध-
स्य पाकसाधान्यात्तस्य जातश्राद्धं न स्यात्तु पक्वान्नं ब्राह्मणेष्वपि निषेधान्न जातकर्मणि नांदी-
श्राद्धं॥ आमान्नेन वा कार्यमित्याशार्कः। गौडास्तु॥ जातकर्मण्येव निषेधः। पुत्रजन्मनिमित्त-
कं तु कार्यमेव। जन्मन्यथोपनयने इत्युक्तेः। नैमित्तिकं यथा वक्ष्ये श्राद्धमभ्युदयात्मकं पुत्रजन्म-
नि तत्कार्यं जातकर्मसमं नरैरिति मार्कंडेयपुराणाच्चेत्याहुः। हारलतायां श्राद्धविवेके चैवं। ते-
न जातकर्मणि कालांतरे श्राद्धनिषेधो न जन्मदिने इति वाचस्पतिमतं परास्तं॥ अत्र निषेककाले
इति वचनाद्गर्भाधाने न निषेधः॥ प्रोषितेति। प्रोष्येत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपतीति विहितं क-
र्म। विवाहादिगर्भाधानांतो यो गृहप्रवेशधृतिहोमचतुर्थीकर्मादिकर्मसमूह उक्तः स तंत्रकारेण
तत्रापि प्रतिकर्म नेत्यर्थः। अन्येपि हलाभियोगाद्योपवादविषयास्तत्रैव ज्ञेयाः। अत्र चा[illegible]
ने। अथात्राधिकारिणः। विष्णुपुराणे॥ जातस्य जातकर्मादिक्रियाकांडमशेषतः। पिता पुत्रस्य कु-

र्वीत श्राद्धं चाभ्युदयात्मकं॥ अत्र केचित्॥ जीवत्पितुः साग्नेरेव वृद्ध्यधिकारः। ननु निरग्नेः॥ न जी
वत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः॥ येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः। पितामहेष्वे
वमेव कुर्याज्जीवति साग्निकः। साग्निकोपि न कुर्वीत जीवति च पितामहे इति चंद्रिकायां सुमंतू
क्तेरित्याहुः॥ प्रयोगपारिजातेप्यनाहिताग्निर्न कुर्यादिति व्याख्यातं॥ तन्न॥ अनग्निकोपि कु
र्वीत जन्मादौ वृद्धकर्मणि। येभ्यः एव पिता दद्यात्तान्नेवोद्दिश्य तर्पयेदिति हारीतोक्तेः॥ सोमंत
पन्न वृद्धिश्राद्धभिन्नश्राद्धपरमित्युक्तं मदनरत्ने। पिंडपितृयज्ञपरमिति पृथ्वीचंद्रः। निर्णयामृतेतु
हारीतीयेऽनग्निकोऽनाहिताग्निरभिप्रेतः॥ पूर्ववचनेतु साग्निः स्यात्त्रेताग्निश्चोच्यते। तेनोभया
ग्निहीनस्य नेत्युक्तं। तन्न॥ पूर्वोक्तदिशा गतिसंभवे अग्निपदस्य त्रेताग्निपरत्वे मानाभावात्
। वक्ष्यमाणनित्यानित्यसंयोगविरोधात्। पितरो जनकस्येज्यायावद्व्रतमनाहितं। समाहितव्रतः
पश्चात्त्वान्यजेत पितामहानिति। पृथ्वीचंद्रोदयेयमवचोविरोधाच्च। अपरार्कोपि समावर्तने
ब्रह्मचारी स्वयमेव नांदीश्राद्धं कुर्यादित्याह अतः पूर्वमेव साधुः। वोपदेवोप्येवमाह। यत्तु मतं।
जीवत्पितुः पुत्रनामकर्मण्येव वृद्धिश्राद्धं। हारीतीये जन्मादौ इत्यादिशब्देन तत्प्राप्तावपि उद्वा
हे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति मैत्रपरिशि
ष्टे उद्वाहे एव तस्योपसंहारात्। एवं यत्र सुतसंस्कारादिपदं तत्पुत्रोद्वाहादिपरमेवेति। तन्न॥ उद्वा
हपदस्य स्वविवाहपरत्वस्यापि संभवात्पुत्रविवाहापरत्वे मानाभावात्॥ अतो जन्मादाविति सर्वसंस्का
रसंग्रहः। तथा च कात्यायनः॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु पिंडानोद्वहनात्तेषां त
स्याभावे तु तत्क्रमात्। सुतानां चौलादिसंस्कारेषु पिता पितृभ्यः पिंडान्श्राद्धं। पिंडदोशाहरश्चैषा
मिति दर्शनात्। उद्वहनाद्विवाहपर्यंतं दद्यात्। विवाहश्च प्रथमः नांदीश्राद्धं पिता कुर्यादाद्ये पा
णिग्रहे बुधः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नांदिकमिति स्मृतेः। तस्य पितुरभावे तत्क्रमात्।
असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरिति यः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्या
दिति चंद्रिकादयः। हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात्स तत्क्रमात्सं
स्कार्यपितृक्रमाद्दद्यान्नतु स्वपितृभ्य इति व्याचख्यौ॥ समावर्तनस्यापि विवाहप्राचीनसुतसं
स्कारत्वात्पित्रैव नांदीश्राद्धं कुर्यात्॥ तदभावे ज्येष्ठभ्रात्रादिः तदभावे स्वयमेव कुर्यात्। उपन
यनेन कर्माधिकारस्य जातत्वात् एवमाद्यविवाहेपीति पृथ्वीचंद्रचंद्रिकादयः। यदा तु पितरि
संन्यस्ते प्रोषिते पतिते वाश्रमार्थं तत्पुत्रमन्यः संस्कार्यपितुपितामहादिभ्यो दद्यात् पितरो ज
नकस्येज्यायावद्व्रतमनाहितं समाहितव्रतः पश्चात्त्वान्यजेत पितामहानिति पृथ्वीचंद्रोदये
यमोक्तेः। जीवत्पितृकस्य विशेषमाह कात्यायनः॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते तथा। ये
भ्यः एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः यत्तु बह्वृचपरिशिष्टे जीवत्पिता सुतसंस्कारे मातृमा
तामह्योः कुर्यात्। तस्यां जीवंत्यां मातामहस्यैवेति तत्तच्छाखीयानामेवेति दिक्। स्मृतितत्त्वा
दिगौडग्रंथेषु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्। जीवंतमतिदद्यात्। वा प्रेतायान्नो
दकं द्विज इति कात्यायनोक्तेः। जीवेत्तस्मिन्सुताः कुर्युः पितामह्याः सहैव तु तस्यांचैवतुजीवं

मातस्याः श्वश्रवे ति निश्चयइति हारीतोक्तेर्नेत्युक्तं। तस्मिन् भर्त्तरि॥ दाक्षिणात्यास्तु पूर्वोक्तस्य सपिंडी
करणादिविषयत्वात्। जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति वचनात्तद्वर्गस्य लोप एवेत्याहुः
पत्नु चंद्रिकायां पारस्करः॥ निषेककाले सोमे च सीमंतोन्नयने तथा॥ ज्ञेयं पुंसवने श्राद्धं कर्मांगं
वृद्धिवत्कृतदिति। तत्र गर्भाधानादिकर्मांगं जातकर्मादावुक्तं तु वृद्धिश्राद्धं पृथगेव। वृद्धिवदिति
केः॥ गौडनिबंधे मात्स्ये॥ अन्नप्राशे च सीमंते उत्रोपत्निनिमित्तके पुंसवे च निषेके च नववेश्म
प्रवेशने। देवद्रुमजलादीनां प्रतिष्ठायां तथैव च। तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितं
अत्र भूतनिमित्तानां वृद्धित्वं भाविनिमित्तानामंगत्वं। वृद्धिशब्दस्तदुभयोः तिदेशार्थ इति गौडाः
अन्ये तु निषेकादौ कर्मांगवृद्धिश्राद्धयोः समुच्चयमाहुः॥ नांदीश्राद्धसंज्ञा तु भयाऽनुगता॥
अथेतिकर्त्तव्यता॥ पृथ्वीचंद्रोदये वृद्धपराशरः॥ मालत्याशतपत्रवामल्लिकाकुब्जयोरपि।
केतक्याः पाटलाया वा देया माला न लोहिताः॥ श्राद्धमालानिषेधस्यायमपवादः॥ तथा॥ सु
वेषभूषणैस्तत्र सालंकारैस्तथा नरैः कुंकुमाद्यनुलिप्तांगैर्भाव्यं सुब्राह्मणैः सह॥ स्त्रियोपि सु
स्तथाभूता गीतनृत्यादिहर्षिताः। हेमाद्रौ ब्राह्मे॥ कुशस्थाने च दूर्वाः स्युर्मंगलस्याभिवृद्धये
कुशा अपि च स्युरिति छंदोगपरिशिष्टे। प्रातरामंत्रितान् विप्रान् युग्मानुभयतस्तथा॥ दैवे पित्र्ये
च॥ वैश्वदेवे द्वौ विप्रौ पित्रादीनामेकैकस्य द्वौ द्वाविति विंशतिः। त्रिके वा द्वावित्यष्टौ विप्राः
अत्र विप्रालाभे स्त्रियोपि भोज्या इत्याहाशाके वृद्धवसिष्ठः॥ मातृश्राद्धे तु विप्राणामलाभे पू
जयेदपि पतिपुत्रान्विता भव्या योषितोष्टौ कुलोद्भवाः॥ मातृत्रिके चतस्रः मातामहीत्रिके चेत
ष्टाविति। हेमाद्रिः। अत्र पित्र्ये प्राङ्मुखा विप्राः। पाद्ये पित्र्ये चतुरस्रं मंडलमिति जयंतः। हेमाद्रौ ब्रा
ह्मेपि॥ विप्रान्प्रदक्षिणावर्त्तं प्राङ्मुखानुपवेशयेत् छंदोगपरिशिष्टे। गोत्रनामभिरामंत्र्य
पितृभ्योर्घ्यं प्रदापयेत्॥ नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते। जैष्ठोत्तरकरान्युग्मान्करा
ग्राग्र्यपवित्रकान्। कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते। पित्रादेर्द्वौ द्वौ विप्रौ तयोर्दक्षिण
हस्तौ संयोज्य प्रथमोपवेशितविप्रकरोपरितनेन द्वयोरर्घ्यं दद्यादित्यर्थः। तदुक्तं कारिकायां तु
दत्तार्घ्यमेकदेशः स्यादर्घ्यदानं प्रति द्विज। आवृत्तिरिति मंत्रस्य प्रतिब्राह्मणमिष्यते। प्रतिद्वि
जं पृथक् कुर्यान्निवीत्यर्घ्यानुमंत्रणमित्युक्तं॥ मधुमध्विति यत्तत्र त्रिर्जपो शितुमिच्छतां। गा
यत्र्यनंतरं सोत्र मधुमंत्रविवर्जितः। न चाश्नत्सु जपेदत्र कदाचित् पितृसूक्तकं॥ तथा॥ संपन्न
मिति तृप्ताः स्थ प्रश्नस्थाने विधीयते। सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्। अक्षय्योदकदा
नं च अर्घ्यदानवदिष्यते षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन। चंद्रोदये ब्राह्मे॥ पठेच्छ्रु
तिसूक्तं तु स्वस्तिसूक्तं शुभं तथा। नांदीमुखान् पितॄन् भक्त्या सांजलिश्च समाह्वयेत्॥ तथा॥
शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा मिश्रीकृत्य तु चतुरः पिंडान् श्रीफलसन्निभान्॥
दद्यान्नांदीमुखेभ्यश्च पितृभ्यो विधिपूर्वकं॥ द्राक्षामलकमूलानि यवांश्च विनियोजयेत्। ता
न्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा॥ तत्रैव चतुर्विंशतिमते॥ द्वौ द्वौ चाभ्युदये पिंडावेकैकस्मै
विनिक्षिपेत्। एकं नाम्ना परं तूष्णीं दद्यात् पिंडान् पृथक् पृथक्॥ वसिष्ठः॥ प्राङ्मुखो देवती

र्येन प्राक्कूलेषु कुशेषु च। दत्त्वा पिंडान्प्रकुर्वीत पिंडपात्रमधोमुखं। नांदीमुखेभ्यः पितृभ्यः स्वाहेति वा
पिंडदानमंत्र इति वृत्तिः। अत्र पिंडाः कृताकृता इत्युक्तं तत्रैव भविष्ये। पिंडनिर्वपनं कुर्यान्न वा
कुर्याद्विचक्षणः। वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु। छागलेयः। अग्नौकरणमर्घ्यं चा
वाहनं चावनेजनं। पिंडश्राद्धे प्रकुर्वीत पिंडहाने निवर्तते। तेनान्नभोजनस्यैव प्राधान्यात्वाद्यदि वि
प्रस्यैव मनं तदा तस्यैव पार्वणस्य पुनरावृत्तिरिति सिद्धं। अत्र संकल्पे विशेषः प्रयोगपारिजाते सं
ग्रहे। शुभार्थी प्रथमं तेन वृद्धौ संकल्पमाचरेत्। न पश्चाद्यद्विवा कुर्यान्महान्दोषोभिजायते।
नामगोत्रादिनिषेधोप्यत्रैव न तु सपिंडकश्राद्ध इति स एव। अत्राप्यक्रमः। नांदीश्राद्धे दैवे क्षणः
क्रियतामिति द्वौ युगपन्निमंत्र्य। ॐ तथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवंतौ प्राप्नवावेति वैश्व
देववत्पित्र्ये च द्विवचनांतेन विप्रद्वये प्रयोगं कुर्यात्। आह्निकाग्नेस्तु हेमाद्रौ ब्राह्मे। योग्नौ तु वि
द्यमाने पितृश्राद्धे पिंडान्निर्वपेत्। पतंति पितरस्तस्य नरके स च पच्यते। बह्वृचपरिशिष्टे। द्वौ द
र्भौ पवित्रे पवित्राणि च त्वारि शन्नोदेवीरित्यनुमंत्रिता सु यवानावपति यवोसि सोमदेवत्यो गो
सवो देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नांदीमुखान्पितॄनिमान्लोकान्प्रीणाहि नः स्वाहेति
स्वाहार्घ्या इति पृच्छति विश्वेदेवा इदं वोर्घ्यं नांदीमुखाः पितर इति यथालिंगमर्घ्यदानमा गं
ध[illegible]दिवि[illegible]पितृ[illegible]अनु
ना इत्युपगुह्य ग्रहणं पावमानीः शंवतीरैंद्रीः प्रतिरथं च श्रावयेन्मधुवातेति च स्थाने उपास्मै गाय
तेति पंच मधुमतीः श्रावयेदक्षन्नमीमदंतेति च षष्ठीं भुक्तशेषेणैकैकस्य द्वौ द्वौ पिंडौ दद्यादिति
चंद्रिकायां वृद्धवसिष्ठः। त्रिमध्ये तु संपन्नं दैवे रुचितमित्यपि। दधिकर्कंधुमिश्रास्तु पिंडाः कार्या
यथाक्रमं। कात्यायनः। स्वमूषुवाजनमिति विप्रांश्चैव विसर्जयेत्। नांदीमुखाः पितरः प्रीयंता
मित्यक्षय्यस्थाने स्वधां वाचयिष्य इत्यस्य स्थाने नांदीमुखान्पितॄन्वाचयिष्य इति न स्वधां प्रयुं
जीतेति। अत्र साग्निरनग्निर्वा दैवे वैश्वदेवं कुर्यात्। आदौ वृद्धौ क्षये चांते मध्यश्राद्धे तु
पार्वणे। एकोद्दिष्टनिवृत्ते तु वैश्वदेवो विधीयते इत्याश्वलायनपरिशिष्टात्। हेमाद्रौ तु शे
षमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः। आद्यान्हिश्राद्धशेषेण वैश्वदेवं समाचरेदिति चतुर्विं
शतिमतं नांदीश्राद्धेप्यंते वैश्वदेव उक्तः। बह्वृचानाम पितृत्वालोचनात्तथैव। पूर्वोक्ते तु येषां प
रिशिष्टं तद्विषयमन्यविषयं वा ज्ञेयं। ॥अत्र श्राद्धांगतर्पणं नेत्युक्तं प्राक्॥ ॥इति
श्रीजगद्गुरुनारायणभट्टात्मजरामकृष्णभट्टसूनुकमलाकरभट्टकृते निर्णयसिंधौ वृद्धिश्रा
द्धं॥

॥अथ जीवत्पितृकश्राद्धं॥

॥तत्रानेके पक्षाः दृश्यंते॥
जीवंतं पितरं भोजयित्वा परयोः श्राद्धं कुर्यादित्येकः। होमांतमेव कुर्यादित्यन्यः। होमांतः पितृ
यज्ञः स्याज्जीवे पितरि जानतः पितरं भोजयित्वा वा पिंडौ निर्वपेत्परौ इति यज्ञपार्श्वोक्तेः। य
दि जीवेत्पिता न दद्यात्। आहोमात्कृत्वा विरमेदित्यापस्तंबोक्तेश्च। जीवंतं पिंडेनाग्नौ हुत्वा परे
भ्यो दद्यादित्यपरः। जुहुयाज्जीवेभ्य इत्याश्वलायनोक्तेः। जीवतामजीवतां च पिंडदानमिति तरः।
जीवतामजीवतां वा दद्यादेवेति हिरण्यकेशि इति निगमात्। तस्माज्जीवत्पिता कुर्याद्द्वाभ्यामे

वनसंशयइतिभविष्योक्तेर्दोषाभावेवसेयः। एतेपक्षाः कलौनिषिद्धाः। अतएवमदनेश्राद्धेनिषि
द्धमनुरब्रवीत् पिंडनिर्वपणंचापिमहापातकसंमितमितिपृथ्वीचंद्रोदयेभविष्योक्तेः। चंद्रिका
यामप्येवं॥ तस्मात्पितरिजीवतिश्राद्धानारंभएवेत्येकःपक्षः। सपितुःपितृकृत्येषुअधिकारोनवि
द्यतइतिकात्यायनोक्तेः॥ जीवत्पितरिवैपुत्रः श्राद्धकालंविवर्जयेदितिहारीतोक्तेश्च॥ पितुः
पित्रादिभ्योदद्यादितिसिद्धांतः। म्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेदितिमनूक्तेः। पितुःपितृभ्यो
वादद्यात्सपितेत्यपरास्तुतिरितिकात्यायनोक्तेश्च। अयंवहुसंमतःपक्षः। अन्येशाखाभेदेनव्यवस्थे
याः। एवंजीवन्मातामहेनाप्यूहेनकार्यं। मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेन
यथान्यायंशेषाणांमंत्रवर्जितमितिविष्णूक्तेः। एवंमात्रादिकस्यापितथामातामहादेरिति।
पृथ्वीचंद्रोदयेग्निपुराणाच्च। पितरिजीवतितुस्वमातरिमृतायामपिपितुरेवमातृमातामहयोःकु
र्यात्। येभ्यएवपितादद्यादितिवक्ष्यमाणवचनादितिपितामहचरणाः। मदनरत्नेतुजीवत्पितास्व
मातृमातामह्योर्दद्यादित्युक्तं। कालादर्शेप्येवं। मृतेतुपितरिजीवन्मातृकःपितामहादिभ्योद
द्यादिति स्मृतितत्वादिगौडग्रंथाः। दाक्षिणात्यास्तु। पितृवर्गेमातृवर्गेतथामातामहस्यच॥
जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात्तद्वर्गत्यागएवेत्याहुः। एवंपतितसंन्यस्तपितृका
देरपिज्ञेयं। वृद्धेतीर्थेचसंन्यस्तेतातेचपतितेसति। येभ्यःएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति
षट्त्रिंशन्मतात्। संन्यस्तेजीवतीत्यर्थः। मृतेतुसंन्यस्तेनदद्यादेवदेयं। मृतेपिपरेभ्यएवेतिगौडाः। का
त्यायनोपि। ब्राह्मणादिहतेतातेपतितेसंगवर्जिते। व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसौ॥ स्व
यंचसंन्यस्तपित्रादेरविशेषात्सर्वश्राद्धेधिकारः॥ एतत्त्रिदंडपरं॥ एकादशाहपार्वणवार्षिकाद्य
पितृस्यैव। अहन्येकादशेप्राप्तेपार्वणंतुविधीयतइति। उक्तत्रिदंडग्रहणादेवमेतत्त्वेनैवनारायणैस्तु
शनसाविशेषोक्तेः ब्राह्मणादिहतेइत्यादिनिषेधस्त्वेकदंडादिपरः। अतःपरमहंसानांवार्षिकादि
कमपिनकार्यमितिशूलपाणिश्राद्धतत्वादयोगौडग्रंथाः। इदमेवयुक्तं॥ यत्तुहेमाद्रौकौडिन्यः। दर्श
श्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षकं। नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेति। तत्संन्यस्तपित्राद्यति
रिक्तविषयं॥ मैत्रायणीयपरिशिष्टे। उद्वाहेपुत्रजननेपित्रेष्ट्यांसौमिकेमखे। तीर्थेब्राह्मणआयाते
षडेतेजीवतःपितुः॥ तत्रैव॥ महानदीषुसर्वासुतीर्थेषुचगयामृते। जीवत्पितापिकुर्वीतश्राद्धंपार्व
णधर्मवत्। गयामृतेइतिमातृव्यतिरिक्तविषयं। आन्वष्टक्यंगयाप्राप्तौसत्यांसत्वमृतेहनि मातुः
श्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीतितत्रैवोक्तेः। गयाप्राप्तौप्रासंगिकंवा। गयाप्रसंगतोगत्वामातुः
श्राद्धंसमाचरेदितिवचनात्। तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्यात्॥ तज्जीवनेतु। तीर्थ
श्राद्धमपिनेतिकालादर्शस्मृतिदर्पणादयः। अन्येतुगत्वाश्राद्धंनेतिनिषेधार्थः। सामान्यतःप्राप्ते
तीर्थश्राद्धंभवत्येवगयायामित्याहुः। यदापितुःप्रतिनिधित्वेनगयांयाति। तदायजमानस्यपितृ
पितामहप्रपितामहास्त्वेवंश्राद्धं॥ तत्रत्वमातुःपितृपत्नीत्वेनैकोद्दिष्टंकृत्वामातृत्वेनपुनःपार्व
णंकुर्यादितित्रिस्थलीसेतौ॥ तच्चफल्गुविष्णुपदाक्षयवटेष्वेवेतिकेचित्। आद्यांत्येष्वेवेत्यन्ये प्र
थमांत्येइत्यपरे। संकोचहेत्वभावात्तत्सर्वश्राद्धानिमातुःकार्याणीतियुक्तंप्रतिभाति। यत्तु

दत्तपारिजाते। नजीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्यः एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकइतिसुमंतूक्तेः। साग्नेरेवजीवत्पितृकस्यतीर्थादिश्राद्धमुक्तं। साग्नेरपिमैत्रायणीयशाखीयस्यैवनान्येषां। षडेतेजीवतःपितुरितितत्परिशिष्टएवोक्तेरितिरत्नावलीदिवोदासाद्याः। तदयुक्तं। सोमंतवंपिंडपितृयज्ञविषयं। संन्यस्तपित्राद्यतिरिक्तविषयंवेतिपृथ्वीचंद्रोदयोक्तेः। वृद्धौतीर्थेचेत्यादेःसाधारण्येननास्यापितथात्वाच्च। तथानिरग्नेरपिनांदीश्राद्धमुक्तंप्राक्। एवंपितामहजीवनेपिज्ञेयं। विशेषःपितृकृतजीवत्पितृकनिर्णयेज्ञेयः॥

॥अथपितामहेजीवति मृतेचपितरि॥ यद्यपि पितामहोवातच्छ्राद्धंभुंजीतेत्यब्रवीन्मनुरिति। मनुनाजीवतःपितामहस्यभोजनमुक्तं। तथापिप्रत्यक्षार्चनस्यपूर्वंनिषिद्धत्वात्पितामहंविहायपितृप्रपितामहवृद्धप्रपितामहेभ्योज्ञेयं। पितायस्यनुवृत्तःस्याज्जीवेच्चापिपितामहः। पितुःसनामसंकीर्त्यकीर्तयेत्प्रपितामहमितिमनूक्तेः। अयमेवसर्वसम्मतःपक्षः। यत्तुछंदोगपरिशिष्टे। पितामहेध्रियमाणेपितुःप्रेतस्यनिर्वपेत्। पितुस्तस्यचवृत्तस्यजीवेच्चेत्प्रपितामहइति। एकपुरुषंद्विपुरुषंवापार्वणमाह तत्रीयपित्र्यज्ञपरं। वृद्धापूर्वोक्तमेव। एवंपूर्वयोर्मृतयोःप्रपितामहेजीवति। पितृमात्रेमृतेपरयोर्जीवतोस्त्ववृद्धप्रपितामहादिभ्योज्ञेयं। जीवंतमपिदद्याद्वाप्रेतायान्नोदकेद्विजः। पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रुतिः। इतिकात्यायनोक्तेश्च॥ एतत्सर्वंनमसिकृत्याहहेमाद्रौविष्णुः पितरिजीवतियःश्राद्धंकुर्याद्येषांपिताकुर्यात्तेषांकुर्यात्पितरिपितामहेचजीवतितेषांपितामहः पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात्। यस्यपिताप्रेतःस्यात्सपित्रेपिंडंनिधायप्रपितामहात्पराभ्यांद्वाभ्यांदद्यात्। यस्यपितापितामहश्चप्रेतौस्यातांसताभ्यांपिंडौदत्वापितामहपितामहायदद्यात्। यद्यपिपितामहःसपित्रेपिंडंनिधायप्रपितामहात्पराभ्यांद्वाभ्यांदद्यात्। यस्यपिताप्रपितामहश्चप्रेतौस्यातांसपित्रेपिंडंनिधायपितामहात्परंद्वाभ्यांदद्यात्। मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमिति। अत्रपितृवन्मातामहेजीवतितत्पित्रादिभ्यः। यथातत्रत्रिषुजीवत्सुनैवकुर्यात्तथात्रापीत्यादिसर्वमतिदेष्टव्यं। एवंमातृजीवनेपीतिशूलपाणिकालादर्शौ॥ तन्न॥ येभ्यएवेत्यादेरपच्छेदाद्देवोक्तिविशेषवाचित्वेनतत्प्रसंगादितिदिक्॥ उत्तरार्द्धव्याख्यानंप्राक्। यत्त्वत्रविज्ञानेश्वरेणोक्तंपित्रेपिंडंनिधायेति पितुरेकोद्दिष्टविधिनाश्राद्धंकृत्वाप्रपितामहादिभ्यःपार्वणंकुर्यात्॥ तद्व्युत्क्रममृतसपिंडीकरणाभावपक्षेसपिंडीकरणस्थानापन्नंज्ञेयं। व्युत्क्रमात्तुप्रमीतानांनैवकार्यासपिंडनेतिवचनात्। दर्शादौतुपितुरेकोद्दिष्टमेवकार्यम्। नजीवंतमतिदद्यादितिश्रुतेः। जीवत्पितामहोयस्यपिताचांतरितोभवेत् पितुरेकस्यदातव्यमेवमाहुर्मनीषिणः॥ इतियज्ञपार्श्वोक्तेः पितामहेजीवतिवैपितृयेवसमापयेदितिहारीतोक्तेश्च॥ शिष्टास्तुव्युत्क्रमात्तुप्रमीतानांनैवकार्यासपिंडता यदिमातायदिपिताभर्त्तानैषविधिःस्मृतइतिमाधवीयेस्कांदोक्तेर्व्युत्क्रममृतसपिंडीकरणाभावःपित्रादिविषयइत्याहुः एषविधिर्निषेधरूपः। त्रिषुजीवत्सुविष्णुराह। त्रिषुजीवत्सुनैवकुर्यादिति। एतद्दर्शादिविषयं। नांदीश्राद्धंतुपरेभ्यस्त्रिभ्योभवत्येवेति

वनसंशयइतिभविष्योक्तेर्दोभ्यामेवेत्यन्यः। एतेपक्षाःकलौनिषिद्धाः। प्रत्यक्षमर्चनंश्राद्धेनिषि
द्धंमनुरब्रवीत् पिंडनिर्वपणंचापिमहापातकसंमितमितिपृथ्वीचंद्रोदयेभविष्योक्तेः। चंद्रिका
प्येवं॥ तस्मात्पितरिजीवति श्राद्धानारंभएवेत्येकःपक्षः। सपितुःपितृकृत्येषुअधिकारोनवि
द्यतइतिकात्यायनोक्तेः॥ जीवत्पितरिवैपुत्रःश्राद्धकालंविवर्जयेदितिहारीतोक्तेश्च॥ पितुः
पित्रादिभ्योदद्यादितिसिद्धांतः। म्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेदितिमनूक्तेः। पितुःपितृभ्यो
वादद्यात्सपितेत्यपराश्रुतिरितिकात्यायनोक्तेश्च। अयंबहुसंमतःपक्षः। अन्येशाखाभेदेनज्ञे
याः। एवंजीवन्मातामहेनाप्यूहेनकार्यं। मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेन
यथान्यायंशेषाणांमंत्रवर्जितमितिविष्णूक्तेः। एवंमात्रादिकस्यापितथामातामहादिवेइति।
पृथ्वीचंद्रोदयेग्निपुराणाच्च। पितरिजीवतितुस्वमातरिमृतायामपिपितुरेवमातृमातामहयोःकु
र्यात्। येभ्यएवपितादद्यादितिवक्ष्यमाणवचनादितिपितामहचरणाः। मदनरत्नेतुजीवत्पितास्व
मातृमातामहयोर्दद्यादित्युक्तं। कालादर्शेप्येवं। मृतेतुपितरिजीवन्मातृकःपितामह्यादिभ्योन
दद्यादिति स्मृतितत्वादिगौडग्रंथाः। दाक्षिणात्यास्तु। पितृवर्गेमातृवर्गेतथामातामहस्यच॥
जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात्तद्वर्गत्यागएवेत्याहुः। एवंपतितसंन्यस्तपितृका
देरपिज्ञेयं। वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति। येभ्यःएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति
षट्त्रिंशन्मतात्। संन्यस्तेजीवतीत्यर्थः। मृतेतुसंन्यस्तेतदाद्येवदेयं। मृतेपिपरेभ्यएवेतिगौडाः। का
त्यायनोपि। ब्राह्मणादिहतेतातेपतितेसंगवर्जिते। व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसौ॥ अ
यंचसंन्यस्तपित्रादेरविशेषात्सद्यःश्राद्धेधिकारः॥ एतत्त्रिदंडपरं॥ एकादशाहपार्वणवार्षिकाद्य
पितृस्यैव। अहन्येकादशेप्राप्तेपार्वणंतुविधीयतइति। उक्तत्रिदंडग्रहणादेवप्रेतत्वंनैवजायतेइत्यु
शनसाविशेषोक्तेः ब्राह्मणादिहतेइत्यादिनिषेधस्त्वेकदंडादिपरः। अतःपरमहंसानांवार्षिकादि
किमपिनकार्यमितिशूलपाणिश्राद्धतत्वादयोगौडग्रंथाः। इदमेवयुक्तं॥ यत्तुहेमाद्रौकौंडिन्यः। दर्श
श्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षकं। नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेति। तत्संन्यस्तपित्राद्यति
रिक्तविषयं। मैत्रायणीयपरिशिष्टे। उद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेमखे। तीर्थेब्राह्मणआयाते
षडेतेजीवतःपितुः॥ तत्रैव॥ महानदीषुसर्वासुतीर्थेषुचगयामृते। जीवत्पितापिकुर्वीतश्राद्धंपार्व
णधर्मवत्। गयामृतेइतिमातृव्यतिरिक्तविषयं। आन्वष्टक्यंगयाप्राप्तौसत्यांसच्चमृतेहनि। मातुः
श्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीति तत्रैवोक्तेः। गयाप्राप्तौप्रासंगिकंवा। गयांप्रसंगतोगत्वामातुः
श्राद्धंसमाचरेदितिवचनात्। तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्यात्॥ तज्जीवनेतु। तीर्थ
श्राद्धमपिनेतिकालादर्शस्मृतिदर्पणादयः। अन्येतुगत्वाश्राद्धंनेतिनिषेधार्थः। सामान्यतःप्राप्त
तीर्थश्राद्धमवत्येवगयायामित्याहुः। यदापितुःप्रतिनिधित्वेनगयांयाति। तदायजमानस्यपितृ
पितामहप्रपितामहाइत्येवंश्राद्धं॥ तत्रस्वमातुःपितृपत्नीत्वेनैकोद्दिष्टंकृत्वामातृत्वेनपुनःपार्व
णंकुर्यादितित्रिस्थलीसेतौ॥ तच्चफल्गुविष्णुपदाक्षयवटेष्वेवेतिकेचित्। आद्यांत्येष्वेवान्ये। म
ध्यमांत्येइत्यपरे। संकोचहेत्वभावात्त्रयएवश्राद्धानिमातुःकार्याणीतियुक्तंप्रतिभाति। यत्तुम

दत्तपरिज्ञाने। नजीवत्पितृकः कुर्याच्छ्राद्धमग्निमृतेद्विजः। येभ्यएवपितादद्यात्तेभ्यः कुर्वीतसा
ग्निकइतिसुमन्तूक्तेः। साग्नेरेवजीवत्पितृकस्यतीर्थादिश्राद्धमुक्तं। साग्नेरपिमैत्रायणीयशाखी
यस्यैवनान्येषां। षडेतेजीवतःपितुरितितत्परिशिष्टएवोक्तेरितिरत्नावलीदिवोदासाद्याः। तदयु
क्तं। सोमंतत्वंपिंडपितृयज्ञविषयं। संन्यस्तपित्राद्यतिरिक्तविषयंवेतिपृथ्वीचंद्रोदयोक्तेः। वृद्धौती
र्थेचेत्यादेःसाधारण्येनतन्नास्यापितथात्वाच्च। तथानिरग्नेरपिनांदीश्राद्धमुक्तंप्राक्। एवंपितामह
जीवनेपिज्ञेयं। विशेषःपितृकृतजीवत्पितृकनिर्णयेज्ञेयः॥ ॥अथपितामहेजीवति
मृतेचपितरियद्यपि पितामहोवातच्छ्राद्धंभुंजीतेत्यब्रवीन्मनुरिति। मनुनाजीवतःपितामह
स्यभोजनमुक्तं। तथापितत्पक्षावलंबनस्यपूर्वंनिषिद्धत्वात्पितामहेविहायपितृप्रपितामहवृद्धप्र
पितामहेभ्योज्ञेयं। पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः। पितुःसनामसंकीर्त्यकीर्तयेत्
प्रपितामहमितिमनूक्तेः। अयमेवसर्वसम्मतःपक्षः। यत्तुवृद्धछंदोगपरिशिष्टे। पितामहेध्रियमा
णेपितुःप्रेतस्यनिर्वपेत्। पितुस्तस्यचवृत्तस्यजीवेच्चेत्प्रपितामहइति। एकपुरुषंद्विपुरुषंवापार्व
णमाह तत्तीर्थपितृयज्ञपरं। वृद्धापूर्वोक्तमेव। एवंपूर्वयोर्मृतयोःप्रपितामहेजीवतिपितृमातृप्र
तेपरयोर्जीवतोस्त्ववृद्धप्रपितामहादिभ्योज्ञेयं। जीवंतमपिदद्याद्वाप्रेतायान्नोदकेद्विजः। पितुः
पितृभ्योवादद्यात्सपितेत्यपराश्रुतिः। इतिकात्यायनोक्तेश्च॥ एतत्सर्वंनमसिकृत्याहहेमाद्रौविष्णुः
पितरिजीवतियःश्राद्धंकुर्याद्येषांपिताकुर्यात्तेषांकुर्यात्पितरिपितामहेचजीवतितेषांपिताम
हः पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात्। यस्यपिताप्रेतःस्यात्सपित्रेपिंडंनिधायप्र
पितामहात्पराभ्यांद्वाभ्यांदद्यात्। यस्यपितापितामहश्चप्रेतौस्यातांसताभ्यांपिंडौदत्वापिताम
हपितामहायदद्यात्। यद्यपिपितामहःसपित्रेपिंडंनिधायप्रपितामहात्पराभ्यांद्वाभ्यांदद्यात्।
यस्यपिताप्रपितामहश्चप्रेतौस्यातांसपित्रेपिंडंनिधायपितामहात्परंद्वाभ्यांदद्यात्। मातामहाना
मप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमिति। अत्रपितृवन्माता
महेजीवतितत्पित्रादिभ्यः। यथातत्रत्रिषुजीवत्सुनैवकुर्यात्तथात्रापीत्यादिसर्वमतिदेश्यं। ए
वंमातृजीवनेपीतिशूलपाणिकालादर्शौ॥ तन्न॥ येभ्यएवेत्यादेर्वृद्ध्यादेर्व्यक्तिविशेष
वाचित्वेनतत्प्रसंगादितिदिक्॥ उत्तरार्द्धंव्याख्यातंप्राक्। यत्त्वत्रविज्ञानेश्वरेणोक्तं पित्रेपिंडंनि
धायेति पितुरेकोद्दिष्टविधिनाश्राद्धंकृत्वाप्रपितामहादिभ्यःपार्वणंकुर्यात्॥ तद्व्युत्क्रममृतस
पिंडीकरणाभावपक्षेसपिंडीकरणस्थानापन्नंज्ञेयं। व्युत्क्रमात्तुप्रमीतानांनैवकार्यासपिंड
नेतिवचनात्। दर्शादौतुपितुरेकोद्दिष्टमेवकार्यम्। नजीवंतमतिदद्यादितिश्रुतेः। जीवत्पिता
महोयस्यपितावांतरितोभवेत् पितुरेकस्यदातव्यमेवमाहुर्मनीषिणः॥ इतियज्ञपार्श्वोक्तेः
पितामहेजीवतिवैपितुर्येवसमापयेदितिहारीतोक्तेश्च॥ शिष्टास्तुव्युत्क्रमात्तुप्रमीतानांनैव
कार्यासपिंडता यदिमातायदिपिताभर्त्तानैषविधिःस्मृतइतिमाथर्वीयस्कांदोक्तेषुव्युत्क्रम
मृतसपिंडीकरणाभावःपित्रादिविषयइत्याहुः एषविधिर्निषेधरूपः। त्रिषुजीवत्सुविस्तु
राह। त्रिषुजीवत्सुनैवकुर्यादिति। एतद्दर्शादिविषयं। नांदीश्राद्धंतुपरेभ्यस्त्रिभ्योभवत्येवेति

वनसंशय इति भविष्योक्तेर्दोभ्यामेवेत्यन्ये। एते पक्षाः कलौ निषिद्धाः। अत्यक्षमर्चनं श्राद्धे निषि
द्धं मनुरब्रवीत्। पिंडनिर्वपणं चापि महापातकसंमितमिति पृथ्वीचंद्रोदये भविष्योक्तेः। चंद्रिका
प्येवं॥ तस्मात्पितरि जीवति श्राद्धानारंभ एवेत्येकः पक्षः। सपितुः पितृकृत्येषु अधिकारो न वि
द्यत इति कात्यायनोक्तेः॥ जीवत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेदिति हारीतोक्तेश्च॥ पितुः
पित्रादिभ्यो दद्यादिति सिद्धांतः। ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेदिति मनूक्तेः। पितुः पितृभ्यो
वा दद्यात्सपितेत्यपरा श्रुतिरिति कात्यायनोक्तेश्च। अयं बहुसंमतः पक्षः। अन्ये शाखाभेदेन व्यव
स्थाः। एवं जीवन्मातामहेनाप्यूहेन कार्यं। मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः। मंत्रोहेन
यथान्यायं शेषाणां मंत्रवर्जितमिति विष्णूक्तेः। एवं मात्रादिकस्यापि तथा मातामहादेश्चेति।
पृथ्वीचंद्रोदये ग्निपुराणाच्च। पितरि जीवति तु स्वमातरि मृतायामपि पितुरेव मातृमातामहयोः कु
र्यात्। येभ्य एव पिता दद्यादिति वक्ष्यमाणवचनादिति पितामहचरणाः। मदनरत्ने तु जीवत्पितास्व
मातृमातामहयोर्दद्यादित्युक्तं। कालादर्शेप्येवं। मृते तु पितरि जीवन्मातृकः पितामह्यादिभ्यो न
दद्यादिति स्मृतितत्त्वादिगौडग्रंथाः। दाक्षिणात्यास्तु। पितृवर्गे मातृवर्गे तथा मातामहस्य च॥
जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति वचनात्तद्वर्गत्याग एवेत्याहुः। एवं पतितसंन्यस्तपितृका
देरपि ज्ञेयं। चंद्रोदये तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति
षट्त्रिंशन्मतात्। संन्यस्ते जीवतीत्यर्थः। मृते तु संन्यस्ते न दाधिकं देयं। मृतेपि परेभ्य एवेति गौडाः। का
त्यायनोपि। ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥ अ
यं च संन्यस्तपित्रादेरविशेषात्सर्वश्राद्धे विकारः॥ एतत्त्रिदंडपरम्॥ एकादशाहपार्वणवार्षिकाद्य
पित्रर्थं च। अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति। उक्तत्रिदंडग्रहणादेव प्रेतत्वं नैव जायते इत्यु
शनसा विशेषोक्तेः ब्राह्मणादिहतेत्यादिनिषेधस्त्वेकदंडिपरः। अतः परमहंसानां वार्षिकादि
किमपि न कार्यमिति शूलपाणिश्राद्धतत्त्वादयो गौडग्रंथाः। इदमेव युक्तं॥ यत्तु हेमाद्रौ कौंडिन्यः। दर्श
श्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकं। न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव चेति। तत्स्वपत्नीपित्राद्यति
रिक्तविषयं॥ मैत्रायणीयपरिशिष्टे। उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते
षडेते जीवतः पितुः॥ तत्रैव॥ महानदीषु सर्वासु तीर्थेषु च गयामृते। जीवत्पितापि कुर्वीत श्राद्धं पार्व
णधर्मवत्। गयामृते इति मातृव्यतिरिक्तविषयं। आन्वष्टक्यं गयाप्राप्तौ सत्यां च पतनेहनि। मातुः
श्राद्धं सुतः कुर्यात्पितर्यपि च जीवतीति तत्रैवोक्तेः। गयाप्राप्तौ मासिकं वा। गयायां संगतो गत्वा मातुः
श्राद्धं समाचरेदिति वचनात्। तेन मृतमातृको गयायां तत्पार्वणमात्रं कुर्यात्॥ तज्जीवने तु। तीर्थे
श्राद्धमपि नेति कालादर्शस्मृतिदर्पणादयः। अन्ये तु गत्वा श्राद्धं नेति विशेषार्थः। सामान्यतः कार्य
तीर्थश्राद्धं भवत्येव गयायामित्याहुः। यदा पितुः सति निषिद्धे न गयायां याति। तदा यज्ञमानस्य पितृ
पितामहप्रपितामहाश्चैवं श्राद्धं॥ तत्र समातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातामहस्य पुनः पार्व
णं कुर्यादिति त्रिस्थलीसेतौ॥ तत्र फल्गुविष्णुपदादावप्येवमेवेति केचित्। श्राद्धांत्येष्वेवमन्येषाम
न्यमातेस्वपरे। संकोचहेत्वभावात्तत्रत्यदैवश्राद्धानि मातृकामानीति युक्तं प्रतिभाति। यत्तु

एष्टव्या बहवः पुत्राः शीलवंतो गुणान्विताः तेषां तु समवेतानां यद्येकोपि गयां व्रजेत्॥ तारितास्मो
यं तेन स याति परमां गतिमिति॥ हेमाद्रौ कौर्मोक्तेः। काम्येपि दानहोमादावप्यनुमत्यैवाधिकारः
द्रव्यासाध्यजपादौ तु तां विनापि॥ अपरार्के पैठीनसिः॥ विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादि
एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतं। संवत्सरात्पूर्वाणि मासिकान्येकत्रैव तदाह लघुहारीतः
सपिंडीकरणांतानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्। स
डनं मासिकोपलक्षणं। अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु। ऊर्ध्वं सपिंडीकरणात्सर्वे कु
र्युः पृथक्पृथगिति व्यासोक्तेः। उशनाः नवश्राद्धं सपिंडत्वं श्राद्धान्यपि च षोडश। एकेनैव तु का
र्याणि सविभक्तधनेष्वपि। मघात्रयोदशीश्राद्धं त्वविभक्तानामपि पृथगित्युक्तं प्राक्। यत्तु वृद्धवसि
ष्ठः। मासिकं च वृषोत्सर्गं सपिंडीकरणं तथा। ज्येष्ठेनैव प्रकर्तव्यमाब्दिकं प्रथमं तथेति। तन्निर्मू
लं। बह्वृचपरिशिष्टे। नवश्राद्धं सह दद्युः॥

॥अथ तीर्थश्राद्धं॥

तत्र यद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेव जागर्ति तथापि किंचिदुच्यते। तत्र यात्रायां। सह
ाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः। प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोपि वा। पत्नी चेन्नधि
कारी च पश्चा वा मंत्रसाधक इति कौर्मवचनात् साग्नेः सपत्नीकस्यैवाधिकारः। भारते। ब्राह्मणः
क्षत्रियो वैश्यः शूद्रो वा राजसत्तम। न वियोनिं व्रजंत्येते स्नाताः तीर्थे महात्मनः। स्कांदे विध
वाधर्मेषु। स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः। एतत्पुत्राद्यनुमत्यैव। सधवायाः पत्या
सहैवेति प्रागुक्तं। काशीखंडे। मातुः पितुः क्षेप्तुमनास्त्वथास्थि सुतस्तु कुर्यात् खलु तीर्थयात्रां॥
तद्विधिः स्कांदे। तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे॥ गणेशं च पितॄन्विप्रान्साधून्
शक्त्या प्रपूज्य च। कृतपारणको हृष्टो गच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्य च पितॄन्यथोक्तफल
भाग्भवेत्। उपवासात्प्राङ्मुंडनं च कार्यं। प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां व
पनं कुर्यान्न वृथा न विकचो भवेदिति विष्णूक्तेः। प्रायश्चित्तार्थयात्रायां गयायां चैतदित्यन्ये। केचि
त्तु हेमाद्रौ महाभारते। केशश्मश्रुनखादीनां वपनं न च शस्यते अतो न कार्यं वपनं गयाश्राद्धार्थि
ना सदा। ये भारतेस्मिन् पितृकर्मतत्पराः संधारये केशानतिभक्तिभाविताः। ऋणक्षयार्थं पितृ
तीर्थमागतास्तेषामृणसंक्षयमेष्यति ध्रुवमिति निषेधात्। गयायात्रांगवपनं न कार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायं निषेधः। न तु यात्रांगस्य॥ श्राद्धार्थिनेत्युक्तेः। विशालां
विरजं गयामित्यनेनैकवाक्यत्वाच्च। श्राद्धं च पायसेन द्वादशदैवतं वा घृतेन कार्यं॥ गच्छेद्देशां
तरं यस्तु श्राद्धं कुर्यात्स सर्पिषेति विष्णुपुराणात्। यात्रांगवृद्धिश्राद्धोक्तेश्च। श्राद्धं च पारणादि
न एव। उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च। गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सु
धीरिति स्कांदलिंगात्। गौडनिबंधे गौतमः तीर्थयात्रासमारंभे तीर्थात्प्रत्यागमेपि च। वृद्धि
श्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितं। वृद्धिपदं तद्धर्मार्थम्। श्राद्धोत्तरं यात्रासंकल्प इति भट्टाः॥ वा
चस्पतौ॥ उद्यतस्तु गयां गंतुं श्राद्धं कृत्वा विधानतः। विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणं।
ततो ग्रामांतरं गत्वा श्राद्धशेषस्य भोजनं। घृतस्य भोजनं। तच्च क्रोशमध्ये। श्राद्धोत्तरं क्रोशगमन

कल्पतरुः पृथ्वीचंद्रोदयस्तु। द्व्याभ्यां त्रिभ्यः परेभ्यस्तु जीवेच्चेत्रितयं यदीति मन्त्रोक्तेः। सर्वत्र विकल्पाः। स
च देशाचारव्यवस्थित इत्याहुः। सुदर्शनभाष्ये तु मातृश्राद्धं। जीवत्पित्रादिनाप्युत्क्रमप्रेतपित्रादि
नैव कार्यमेवमुक्तं। मदनरत्ने तु॥ अष्टकादिषु संक्रांतौ मन्वादिषु युगादिषु। चंद्रसूर्यग्रहे पाते
स्वेच्छया श्राद्धयोगतः। जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाखिलं। अन्ये विशेषाः श्रीपितृच
रणजीवत्पितृकनिर्णये भट्टकृतत्रिस्थलीसेतौ च ज्ञेयाः॥ इति भट्टकमलाकरकृते निर्णयसिंधौ जी
वत्पित्रादिश्राद्धं॥ ॥अथ विभक्ताविभक्तनिर्णयः॥ पृथ्वीचंद्रोद
ये मरीचिः॥ बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैवाविभक्तेन सर्वै र
वकृतं भवेत्। ज्येष्ठस्य कर्तृत्वेपि सर्वे फलभागिन इत्यर्थः। तेन यैर्ब्रह्मचर्यादिनियमास्ते फलिस
स्कारत्वात्सर्वैः कार्याः। एवं संसृष्टिनामपि। तुल्यत्वात्। मिताक्षरायां नारदः। भ्रातॄणामविभक्ता
नामेको धर्मः प्रवर्तते। विभागे सति धर्मोपि भवेत्तेषां पृथक्पृथक्। बृहस्पतिरपि॥ एकपाकेन व
सतां पितृदेवद्विजार्चनं। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे। अत्र यद्यप्यविशेषणात् ब्रह्म
यज्ञसंध्यादिष्वप्यविभक्तानां पृथक्त्वनिषेधः प्राप्नोति। तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिविष
यः॥ द्रव्यस्यानेकस्वामिकत्वेनैकस्य अपरेणाधिकारात्। यानि त्वद्रव्यसाध्यानि मंत्रजपोपवाससं
ध्याब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु पृथगेवाधिकारः द्रव्यस्याभावेऽनु
मत्यनपेक्षणात्। द्रव्येणाविभक्तेनान्यस्याविषयत्वात्। पृथगप्येकपाकानां ब्रह्मयज्ञाद्विजन्मनां
अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्तथेति। प्रयोगपारिजाते आश्वलायनोक्तेः। अग्निहोत्रश
ब्देनाग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः। तेष्वप्यन्यानुमत्यैवाधिकारेण न्यायसाम्यात्। पितृश्राद्धा
दिषु तुल्यफलेषु नित्येष्वनुमतिं विनाप्येकस्याधिकारः। एकोपि स्थावरे कुर्याद्दानाधमनविक्रयं
आपत्काले कुटुंबार्थे धर्मार्थे च विशेषतः॥ इति वचनात्। धर्मार्थेऽवश्यकर्तव्ये पितृश्राद्धादावि
ति विज्ञानेश्वरः। केचित्त्वविभक्तानामपि पृथक्पाकत्वे देशांतरे च दार्शिकाह्निकयोः पृथक्त्वमाहुः
भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि। वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक्पृथगिति हारीतो
क्तेः। अविभक्तेन ज्येष्ठेन पितृमेधे मृताहनि। देशांतरे पृथक्कुर्युर्दर्शश्राद्धं तथैव चेति यमोक्तेश्चेति
तत्र मूलं चिंत्यं। तदयमर्थः॥ पंचमहायज्ञमध्ये देवभूतपितृमनुष्ययज्ञान्नानुमत्या ज्येष्ठ एव कुर्या
त्। होमाग्निदानरहितं न भोक्तव्यं कदाचन। अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतमिति व्यासोक्ते
श्च॥ यस्य तु ज्येष्ठेनाकृते वैश्वदेवेऽन्नं सिध्येन्न तत् स्त्रीमग्नौ किंचित् क्षिप्त्वा भोक्तव्यं। यस्त्वेषामग्नि
तोऽन्नं सिद्धं स नियुक्तमग्नौ कृत्वाग्रं ब्राह्मणाय दत्त्वा भुंजीतेत्यविभक्ताधिकारे पृथ्वीचंद्रोदये गो
भिलोक्तेः। आश्वलायनस्तु॥ पाकपार्थक्ये पृथक्त्वं तदेकत्वेऽपृथक्त्वमाह। वसतामेकपाकेन विभ
क्तानामपि प्रभुः। एकस्तु चतुरो यज्ञान् कुर्याद्वाग्यज्ञपूर्वकान्॥ अविभक्ता विभक्ता वा पृथक्पा
काद्विजातयः। कुर्युः पृथक्पृथग्यज्ञान् भोजनान्माद्दिने दिने इति। ब्रह्मयज्ञसंध्यास्नानतर्पणा
दि तु कर्तृहेतोः पृथगेव देवपूजा तु वचनद्वयादेकत्र पृथग्वा॥ दर्शमहालयश्राद्धादिरेकस्यैव ती
र्थश्राद्धमपि प्रयागगयासर्वेषामविभक्तानां प्राप्तावेकस्यैव भेदेन प्राप्तो भिन्नम् गयाश्राद्धेप्येवं प

ष्ट्यावहवःपुत्राःशीलवंतोगुणान्विताः तेषांतुसमवेतानांयद्येकोपिगयांव्रजेत्॥ तारितास्ते
यंतेनसयातिपरमांगतिमिति॥ हेमाद्रौकौर्मोक्तेः। काम्येपिदानहोमादावप्यनुमत्यैवाधिकारः
द्रव्यासाध्यजपादौतुतांविनापि॥ अपरार्केपैठीनसिः॥ विभक्तैस्तुपृथक्कार्यंप्रतिसंवत्सरादि
एकेनैवाविभक्तेषुकृतंसर्वैस्तुतत्कृतं। संवत्सरात्पूर्वाणिमासिकान्येकत्रैवतदाहलघुहारीतः
सपिंडीकरणांतानियानिश्राद्धानिषोडश। पृथङ्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्वचित्। स
ऊनमासिकोपलक्षणं। अर्वाक्संवत्सराज्ज्येष्ठःश्राद्धंकुर्यात्समेत्यतु। ऊर्ध्वंसपिंडीकरणात्सर्वे
युःपृथक्पृथगितिव्यासोक्तेः। उशनाः नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश। एकेनैवतुका
णिसंविभक्तधनेष्वपि मघात्रयोदशीश्राद्धंत्वविभक्तानामपिपृथगित्युक्तंप्राक्। यत्तुवृद्धवसि
ष्ठः। मासिकंचवृषोत्सर्गंसपिंडीकरणंतथा। ज्येष्ठेनैवतुकर्तव्यमाब्दिकंप्रथमंतथेति। तन्निर्मू
लं। वह्वृचपरिशिष्टे। नवश्राद्धंसहदद्युः॥

## ॥अथतीर्थश्राद्धं॥

तत्रयद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेवजागर्तितथापिकिंचिदुच्यते। तत्रयात्रायां। सह
ग्निर्वासपत्नीकोगच्छेत्तीर्थानियत्नतः। प्रायश्चित्तीव्रजेत्तीर्थंपत्नीविरहितोपिवा। यत्तेष्वनधि
कारीचयश्चवामंत्रसाधकइतिकौर्मवचनात्साग्नेःसपत्नीकस्यैवाधिकारः। भारते। ब्राह्मणः
क्षत्रियोवैश्यःशूद्रोवाराजसत्तम नवियोनिंव्रजंत्येतेस्नाताःतीर्थेमहात्मनः। स्कांदेविध
वाधर्मेषु। स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंमुहुः। एतत्पुत्राद्यनुमत्यैवासधवायाःपत्या
सहैवेतिप्रागुक्तं। काशीखंडे। मातुःपितुःस्वेप्समनाल्लब्धास्थिसुतस्तुकुर्यात्खलुतीर्थयात्रां॥
तद्विधिःस्कांदे। तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे॥ गणेशंचपितॄन्विप्रान्साधून्
शक्त्याप्रपूज्यच। कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्यचपितॄन्यथोक्तफल
भाग्भवेत् उपवासात्प्राङ्मुंडनंचकार्यं। प्रयागेतीर्थयात्रायांपितृमातृवियोगतः। कचानांव
पनंकुर्यात्वृथानविकचोभवेदितिविष्णूक्तेः। प्रायश्चित्तार्थयात्रायांगयायांचैतदित्यके। केचि
त्तुहेमाद्रौमहाभारते। केशश्मश्रुनखादीनांवपनंनचशस्यते अतोनकार्यंवपनंगयाश्राद्धार्थि
नासदा। येभारतेस्मिन्पितृकर्मतत्पराःसंधार्यकेशान्नतिभक्तिभाविताः। ऋणक्षयार्थंपितृ
तीर्थमागतास्तेषामृणंसंक्षयमेष्यतिध्रुवमितिनिषेधात्। गयायात्रांगंवपनंनकार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायंनिषेधः नतुयात्रांगस्य॥ श्राद्धार्थिनेत्युक्तेः। विशालां
विरजंगयामित्यनेनैकवाक्यत्वाच्च। श्राद्धंचषण्णवद्वादशदैवतंवाघृतेनकार्यं॥ गच्छेद्देशां
तरंयस्तुश्राद्धंकुर्यात्ससर्पिषेतिविष्णुपुराणात्। यात्रांगवृद्धिश्राद्धोक्तेश्च। श्राद्धंचपारणादि
नेएव। उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच। गणेशंब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सु
धीरितिस्कांदलिंगात्। गौडनिबंधेगौतमः तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच। वृद्धि
श्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितं। वृद्धिपदंतद्धर्मार्थम्। श्राद्धोत्तरंयात्रासंकल्पइतिभट्टाः॥वा
यवीये॥ उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः। विधायकार्पटीवेषंग्रामंकृत्वाप्रदक्षिणं।
ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनं। घृतस्यभोजनं। तच्चक्रोशमध्ये। श्राद्धोत्तरंक्रोशगमन

निषेधात् ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः। गयायामेवैतन्मन्यन्ते इति केचित्। हेमाद्रिस्तु
गयायां श्राद्धदिने एव प्रस्थानं तीर्थान्तरे तु श्राद्धोत्तरदिने इत्याह। प्रभासखंडे। पश्चान्मुक्तोरच्छ-
त्या तीर्थयात्रां नरेश्वरः। स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणं। यात्रामध्ये आशौचे रजसि च
शुद्धिपर्यन्तं स्थित्वा तदन्ते गच्छेत्। मार्गवैषम्ये न दोषः। यात्रामध्ये तीर्थान्तरप्राप्तौ श्राद्धादिकार्यमेव
वाराणस्याद्यर्थं गते तु मुंडनोपवासादि न कार्यमिति प्रयागसेतौ भट्टाः। वस्तुतस्तु तत्रापि मुंडनोपवास
श्राद्धादि कार्यं। अर्धं तीर्थफलं तस्य यः प्रसंगेन गच्छतीति वाक्योक्तेः॥ स्कांदे॥ द्विभोजनं व्रतीयाशे ह-
रेत्तीर्थफलस्य च। वाराणस्यां स्थितस्तथा भागान्हंति सर्वं प्रतिग्रहः॥ मानमर्द्धं चतुर्थांशं छत्रोपानहमेव
च स्नुत्तरार्द्धं पादांतरं॥ अत्र नदीषु विशेषः॥ मार्गे नरा नदीः प्राप्य स्नानादि परस्पारतः अर्वागेव सरस्व-
त्या एष मार्गगतो विधिः॥ अनुपितृन्तर्पयित्वा तु नदीं तरति यो नरः तस्यास्तु पामकामास्ते भवंति
भृशाद्दुःखिता इति तत्सरस्वतीपरं॥ शंखः॥ तीर्थप्राप्त्यानुषंगेन स्नानं तीर्थे समाचरेत्। स्नानजं
फलमाप्नोति तीर्थयात्राकृतं न तु। स एव॥ न लवंती मतिक्रामेदनवसिच्य तीर्थमाप्तौ तु प्रभासखंडे।
याता तु परित्यज्य भाव्यं पापैश्चौरैर्नरैः। लुंठित्वा लोडनीतत्र कृत्वा कार्पटिकाकृतिं। कृत्वेति रहात्रि-
गमसमये कार्या इदं प्रथमं चालये तीर्थं प्रणवेन जलं शुचि। अवगाह्य ततः स्नायाद्यथावन्मंत्रपो-
गतः मंत्रश्च प्रभासखंडे॥ ॐ नमो देवदेवाय शितिकंठाय दंडिने रुद्राय चापहस्ताय चक्रिणे वेध-
से नमः सरस्वती च सावित्री वेदमाता गरीयसी। सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशिनी इति॥ मं-
त्रवत्स्नानं वपनोत्तरं कार्यं। पूर्वमावाहनं तीर्थे मुंडनं तदनंतरं ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं
समाचरेदित्युक्तेः। यत्तु गत्वा स्नानं प्रकुर्वीत वपनं तदनंतरमिति। तन्मुशलस्नानपरं। तीर्थोपवासः
काशीखंडे। तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा उपवासस्तत्रैवोक्तः। यदह्नि तीर्थप्राप्तिः स्या-
त्तदह्नः पूर्ववासरे। उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्। अत्र उपवासं ततः कुर्यात्तस्मिन्न-
हनि सुव्रत इति। प्राप्तिदिने पूर्वस्मिन्वोक्तो विकल्पः। मुंडनं तु स्कांदे देवलो मुंडनं चोपवासं च सर्व-
तीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयां। विरजा लोणारं॥ प्रसिद्धमहाती-
र्थपरः सर्वतीर्थशब्दः। अत्र विशेषः स्मृत्यर्थसारे। ऊर्ध्वं पक्षाद्धि मासो वा पुनस्तीर्थं व्रजेद्यदि मुंडनं
चोपवासं च ततो यत्नेन कारयेत्। तदानतद्रूपशालमापश्चित्तश्शते द्विजेति पाठः। प्रयागेमति-
मानं तु योजनत्रयमिष्यते क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते। आपएके स्कांदे॥ उदङ्मु-
खः प्राङ्मुखो वा वपनं कारयेत्सुधीः केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत्। इदं प्रयागो-
ऽस्थवानामपि सम्मूलं भवतीति भट्टाः। युक्तं तु सर्वान्केशान्समुद्धृत्य छेदयेदंगुलद्वयं। एवमेव
हि नारीणां शस्यते वपनं क्रियेति॥ तच्चाकृतचूडानां न कार्यमिति केचित्। तत्त्वं तु नैमित्तिकत्वा-
त्रादिशतवत्कार्यमेवेति। तदपि प्रयागे नित्यं नान्यत्र। तच्च पतिमत्या अपि अनुसंधेयमेव कार्यं गा-
न्दा। कृतोपस्थशिखावर्जं अनुसंधिषु वापयेदिति स्मृतेः। इदं जीवत्पितृकेनापि तीर्थे कार्यं
न तु मुंडनं पिंडदानं चेत्पितृवचनेन निषेधः। विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना। यो वा-
पयति लोमानि स पुत्रः पितृघातकः इति स्मृत्युक्तत्वसंकोचात्॥ तदपि प्रयागे गतिमात्रमन्यतीर्थे

आद्यपात्रायामेवेतिशिष्टाः॥ ततःस्नानं॥ परार्थेतु॥ मार्कंडेयपुराणे॥ मातरंपितरंजायांभ्रातरंसुहृ
दंगुरुं यमुद्दिश्यनिमज्जेतअष्टमांशंलभेतुसः। पैठीनसिः॥ प्रतिकृतिंकुशमयींतीर्थवारिणिमज्ज
येत्। मज्जयेच्चयमुद्दिश्यसोऽष्टभागफलंलभेत्। ततस्तर्पणश्राद्धे॥ पृथ्वीचंद्रोदयेब्रह्मदेवीपुरा
णकाशीखंडादिषु॥ अकालेप्यथवाकालेतीर्थश्राद्धंचतर्पणं अविलंबेनकर्त्तव्यंनैवविघ्नं
समाचरेत्॥ मात्स्ये॥ पितृणांचैवतर्पणमितिचतुर्थपादः। तत्रदेवतामहालयनिर्णयेप्रागुक्ताः
शंखदेवलौ॥ तीर्थद्रव्योपपत्तौचनकालमवधारयेत्। पात्रंचब्राह्मणाःप्राप्यसद्यःश्राद्धंसमा
चरेत्। हारीतः दिवावायदिवारात्रौभुक्तोवायोषितोपिवा नकालनियमस्तत्रगंगांप्राप्यस
रिद्वरां भारते॥ भुक्तोवाप्यथवाभुक्तोरात्रौवायदिवादिवा पर्वकालेथवाकालेशुचिर्वाप्य
थवाशुचिः यदेवदृश्यतेतत्रनदीचित्रपथाप्रिये॥ प्रणामंदर्शनंतस्मात्नकालस्तत्रकारणं
आशौचेपिकार्यं॥ विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्म्मणि। नतत्रसूतकंतद्वत्कर्मयज्ञादि
कारयेदिति पैठीनसिस्मृतेः॥ तदानीमकरणेत्वाशौचांतेएवकुर्यात्। प्रभासखंडे॥ नवारंन
चनक्षत्रंनकालस्तत्रकारणं। यदैवदृश्यतेतीर्थंतदापर्वसहस्रकं मलमासेपिकार्यं नित्य
नैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेतिबृहस्प
तिस्मृतेः। एतच्चाशौचेकृतभोजनस्यरात्रौस्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावामहेम
श्राद्धविषयंग्रहणादिवत् ननुबुद्धिपूर्वमाशौचादौतीर्थप्राप्तिःकार्या। मलमासेतुमासद्वयेती
र्थश्राद्धंकार्यमिति। चंद्रिकायां देवीपुराणे श्राद्धंचतत्रकर्त्तव्यमर्घ्यावाहनवर्जितं हेमाद्रौ॥
अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं तृप्तिप्रश्नंचविकिरंतीर्थश्राद्धेविवर्जयेत्॥ भविष्ये॥
आवाहनंदिग्बंधश्चतत्रतेषांनविद्यते। आवाहनंनतीर्थेस्यात्नार्घ्यदानंतथाभवेत्। आहूताः
पितरस्तीर्थेकृतार्घ्यासंनिवेशतः अग्नौकरणंचनेति रत्नावल्यां। अत्रषट्दैवतश्राद्धेपिमात्रा
दीनांपिंडमात्रंदेयं हविःशेषंततोमुष्टिमादायैकैकमाहृतः। क्रमशःपितृपत्नीनांपिंडनिर्वप
णंचरेदिति तीर्थोपक्रमेदेवलोक्तेरितिपृथ्वीचंद्रः। ततःसामान्यंपिंडंदद्यात्। ततःपिंडमुपा
दायहविषःसंस्कृतस्यच ज्ञातिवर्गस्यसर्वस्यसामान्यंपिंडमुत्सृजेत्। इतितत्रैवोक्तेः पाद्मे॥ ती
र्थश्राद्धंप्रकुर्वीतपक्वान्नेनविशेषतः आमान्नेनहिरण्येनकंदमूलफलैरपि। पिंडद्रव्याणि
देवीपुराणे। हेमाद्रौब्राह्मे॥ सक्तुभिःपिंडदानंचसंयावैःपायसेनवा कर्त्तव्यमृषिभिःप्रोक्तंपिण्या
केनगुडेनवा। पिंडानांतीर्थप्रक्षेपएव। नान्याप्रतिपत्तिरित्युक्तंप्राक्। एतच्चविधवयापुत्रया
कार्यं। नसपुत्रयेत्युक्तंप्राक्। सपुत्रयानकर्त्तव्यंभर्तुःश्राद्धंकदाचनेतिस्मृतेश्च। अनुपनीतेना
पिकार्यं। एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वस्वितिपाद्मेतीर्थश्राद्धमुपक्रम्योक्तेः॥ एतज्जीवत्पि
तृकेणापिकार्यमित्युक्तंप्राक्। यतिनातुनकार्यं। नकुर्यात्सूतकंभिक्षुःश्राद्धपिंडोदकक्रियां।
भक्तेसंन्यासयोगेनगृहस्थधर्मादिकंव्रतं। गोत्रादिचरणंसर्वंपितृमातृकुलंधनमितिस्मृतेः॥
गयायांतूक्तंवायवीये। दंडंप्रदर्शयेद्भिक्षुर्गयांगत्वानपिंडदः। दंडंन्यस्यविष्णुपदेपितृभिः
सहमुच्यते। गयायांमुंडपृष्ठेचकूपेयूपेवटेतथा दंडंप्रदर्शयन्भिक्षुःपितृभिःसहमुच्यते॥

कल्पस्तेष्वभासखंडे॥ तीर्थे चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्बलः दशांशमर्जितं दद्यादेवं कुर्वन्न
हीयते इति विशेषविशेषांतराणि भट्टकृतत्रिस्थलीसेतौ ज्ञेयानीति दिक्॥ इति तीर्थश्राद्धविधिः

॥अथाशौचनिर्णयपरिच्छेदः प्रारंभः॥

श्रीगणेशाय नमः॥ अथाशौचं॥ नारायणात्मजश्रीमद्रामकृष्णस्य सूनुना कमलाकरसंज्ञे
नाशौचं निर्णीयतेऽधुना॥ मरीचिः आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः। अत ऊर्ध्वं प्रसू
तिः स्याद्दशाहं सूतकं भवेत्। स्रावे मातुस्त्रिरात्रं स्यात्सपिंडाशौचवर्जनं पाते मातुर्यथामासं स
पिंडानां दिनत्रयं। अत्र सर्वत्र मूलं मिताक्षरादौ ज्ञेयं। अत्र मासत्रये त्रिरात्रं स्यादित्यनुवादः। र
जस्वलात्वेनैव तत्सिद्धेः। यद्यप्यनेन चतुर्थमासे त्रिरात्रं प्राप्नोति तथापि षण्मासाभ्यंतरं याव
द्गर्भस्रावो भवेद्यदि तदा मासमैस्तासां दिवसैः शुद्धिरिष्यते। इत्यादि पुराणात्। रात्रिभिर्मास
तुल्याभिर्गर्भस्रावे विशुध्यतीति मनूक्तेः। गर्भस्रावे यथामासमचिरे तूत्तमे त्र्यहं इति मरीच्युक्तेश्च
चतुरात्रं ज्ञेयं। अचिरे त्रिमासमध्ये। उत्तमे ब्राह्मणे। अत्र सपिंडानां स्नानं। सद्यः शौचं सपिंडानां ग
र्भस्य पतने सति इति तत्रैवोक्तेः। एतदा चतुर्थमासात्। पाते त्रिदिनस्योक्तेः। अकारणायाः शुद्धेर
संभवात्। सद्यः पदं स्नानपरं। एवमग्रे विगर्भस्रावे स्नानमात्रं पुरुषस्येति। रुद्रवसिष्ठोक्तेः। पुरु
षस्येति सपिंडोपलक्षणम् इत्युक्तवचनात्। आचतुर्थमासं सपिंडानां स्नानं। किंतु पंचमष
पाते त्रिदिनं निर्गुणपरं। गुणवतस्तु अजातदंते तनये शिशौ गर्भच्युते तथा सपिंडानां तु सर्वे
षामेकरात्रमशौचकमिति यमोक्तेरेकाह इति मदनपारिजातः। सप्तममासादि दशाहं। एतत्स
र्ववर्णविषयं॥ तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रोक्तेः पराशरः। जाते विप्रो दशाहे
न द्वादशाहेन भूमिपः वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति॥ संवर्त्तः॥ जाते पुत्रे पितुः स्ना
नं सचैलं तु विधीयते। माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः। पुत्रपदात्कन्योत्पत्तौ न पितुः स्ना
नमिति हारलतायां। तन्न॥ पुत्रपदस्य पौत्री मातामहस्तेनेति कन्यायामपि प्रयोगात्। यच्च तेनैवो
क्तम् सूतके तु मुखं दृष्ट्वा जातस्य जनकः सुतः कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणा दित्या
दित्यपुराणान्मुखदर्शनोत्तरमेव पितुः स्नानमिति। तन्न। विदेशे मुखदर्शनावश्यकत्वापत्तेः
मुखदर्शनोत्तरं पुनः स्नानार्थमिदमिति स्मार्त्तगौडाः तन्न॥ मूलेक्येन स्नानमात्रपरत्वात्। इदं सर्वव
र्णसमं। सूतिका सर्ववर्णेषु दशरात्रेण शुध्यति। ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं विधिरिति॥ हार
लतायां प्रचेतसोक्तेः॥ यत्तु ब्राह्मे॥ ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः। गतैः शूद्रा च संस्पृ
श्या त्रयोदशभिरेव चेति॥ प्रयोगपारिजाते पारस्करः॥ द्विजातेः सूतिकायास्तु न स्याद्दशाहेन शुध्य
ति॥ त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयमिति तद्दक्षिणापरं। अंगिराः। सूतिके सूतिकावर्जं संस्प
र्शो न निषिध्यति। संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते। नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छ
ति रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते। संसर्गो मैथुनं स्पर्श इत्यन्ये। मातुरेव सूतकं तां स्पृशतश्चेति
हारलतायां सुमंतूक्तेरिति॥ तन्न॥ संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते। इति स्नानमात्रोक्तेः॥
सोमतवस्य स्नानपर्यंतमस्पृश्यत्वमात्रबोधकत्वात्। एवकारो बालस्पृश्यतार्थः। माधवस्तु॥ यत्तेः

महासपिंडोपिप्रकुर्योच्छपनाशनं। बांधवोवापरोवापिसदशाहेनशुध्यतीति। बृहस्पतिस्मृतेः॥ श्र
पनाशनादिरूपंसंसर्गमाह॥ पराशरः॥ यदिपत्न्यांप्रसूतायांद्विजःसंस्पर्शमिच्छति सूतकंतुभ
वेत्तस्ययदिविप्रःषडंगवित्। पितृवत्तापनेमातुः शाकस्नानादस्यस्पर्शं। सूतिकास्पर्शेतुयाव
दाशौचं। अन्यात्रमानरत्नहृन्नगृहेनप्रजंतिचेदिति॥ ब्राह्मोक्तेरितिशुद्धितत्त्वादयः। तन्नः॥
तद्गृहंगत्वासूतिकांयदिनस्पृशंति तदास्पृश्या अन्यथानेतितस्यार्थः। कर्म्मानधिकारमाह पै
ठीनसिः॥ सूतिकांपुत्रवतींविंशतिरात्रेणकर्माणिकारयेन्मासेनस्त्रीजननीं॥ इदमाशौचो
त्तरं॥ अन्यथाशूद्रासपिंडानामाशौचेतदभावःस्यात्। विध्यनुवादविरोधश्च॥ एतच्चसोमया
गादिश्रौतभिन्नपरं। प्रजातायाश्चदशरात्रादूर्ध्वंस्नानादिनिकात्यायनोक्तेः॥ व्यासः॥ प्रथमे
दिवसेषष्ठेदशमेवसर्वदा त्रिष्वेतेषुनकुर्वीतःसूतकंपुत्रजन्मनि॥ पुत्रशब्दोऽपत्यमात्र
परः॥ ब्राह्मे॥ देवाश्चपितरश्चैवपुत्रेजातेद्विजन्मनां। आयांतितस्मात्तदहःपुण्यंपष्ठंचसर्वदा
जननेविशेषःप्रागुक्तः। अत्रप्रयोगपारिजातः। पुंप्रसवेदशाहः। स्त्र्यपत्येतुत्र्यहः। पुत्रजन्मनि
सपिंडानांदशाहाच्छुद्धिरिष्यते अहादेकोदकानांचएकाहःसूतकंक्वचित्। स्त्रीजन्मनिसपिं
डानांसोदकानांत्र्यहाच्छुचिः। स्त्रीषुत्रिपुरुषंज्ञेयंसपिंडत्वंद्विजोत्तमा॥ इत्यग्निस्मृतेरित्याह
मेधातिथिरपि। अप्रत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायतेइतिवासिष्ठमुक्ताशौचेएवेतद्विवाहेतु
विधिर्दर्शितएवेत्याह। अन्येतुत्रिपुरुषसापिंड्यस्यकानीनकन्यापरत्वमाहुः। अप्रत्तानांतथास्त्री
णांसापिंड्यंसाप्तपौरुषं। प्रत्तानांभर्तृसापिंड्यंप्राहदेवःप्रजापतिरितिकौर्म्मविरोधाच्च। अत्रेदं
तत्त्वं। पंचमात्सप्तमाद्धीनायःकन्यामुद्वहेद्द्विजः। गुरुतल्पीसविज्ञेयइत्यादिविरोधात्त्रिपुरुषं
प्रकरणान्मरणाशौचपरं। वासिष्ठेतदग्रेउदकदानोक्तेः। तेनकन्याप्रसवेपिसाप्तपुरुषंदश
रात्रमेव। नचकन्यापुत्रकसंप्रसवेबलाबलंक्वाप्युक्तं। अग्निस्मृतिस्त्वनुकल्पोविगीताचेति
सर्वंसिद्धांतः। अन्यथात्रिपुरुषसपिंडानामष्टमादिसोदकानांचत्र्यहसाम्यापत्तेः। चतु
र्थादिसप्तमांतानांचकिमपिनस्यात्किंच स्त्रीजन्मोद्देशेनत्रिपुरुषसापिंड्यंतेषांचत्रिरात्र
मित्यनेकार्थविधिःकथंस्यात्। वाक्यभेदापत्तेः। नचचतुर्थादीनांसोदकत्वंक्वापिसिद्धं।
तेनत्रिपुरुषंचतुर्थादीनांचस्त्रीजन्मनिसोदकत्वंविधायपुनस्तेषांत्रिरात्राशौचविधौवि
ध्यनुवादविरोधोवाक्यभेदश्चेत्यसंबद्धार्थाग्निस्मृतिर्हेया॥ ॥अथमृता
शौचंहारीतः॥ जातमृतेमृतजातेवासपिंडानांदशाहं। दशाहमितिस्वाशौ
चपरं। जातमृतेनालच्छेदोर्ध्वं। यावन्नछिद्यतेनालंतावन्नाप्नोतिसूतकं छिन्नेनालेत
तःपश्चात्सूतकंतुविधीयतेइतिजैमिन्युक्तेः। नाड्यांछिन्नायामाशौचमितिहारीतोक्तेश्च
मृताशौचपरमेव। जननाशौचंतुनालच्छेदात्पूर्वेपिजननाद्येव। मृतजातेनालच्छेदाभा
वात्षष्ठीपूजाद्युत्कर्षापत्तेश्च। तेननाडीछेदात्प्राङ्मातुःस्पर्शेपिनदोषइति। शुद्धितत्त्वो
क्तिःपरास्ता॥ नाभिच्छेदात्प्राङ्मृतेतुबृहन्मनुः॥ जीवन्जातोयदिमृतोमृतःसूतकएव
तु। सूतकंसकलंमातुःपित्रादीनांत्रिरात्रकं। इदंचप्रसवाशौचमेव। स्नानिमित्तंस्नानमा

त्रै। माड्‌ नामकरणात्सद्यः शौचमितिशंखोक्तेः॥ अत्र कश्चिदाह॥ नामकरणमाशौचांतकालोप
लक्षणं। आशौचव्यपगमेनामधेयमितिविष्णूक्तेः। आशौचेचव्यतिक्रांतेनामकर्मविधीयतइति
मनूक्तेश्च। नाम्नोनियतकालत्वात्। नचनामधेयंदशम्यांतुद्वादश्यांवापिकारयेत्। पुण्येतिथौ
मुहूर्तेवानक्षत्रेवागुणान्वितेइतिमनूक्तेरनियतकालतत्वं। दशम्यामतीतायांविप्रः द्वादश्या
मतीतायांक्षत्रियः। वैश्यः षोडशेशूद्रएकत्रिंशेऽत्यपिज्ञेयं। पुण्यइत्याद्यनुकल्पः। तेननाम्नःका
लोपलक्षणं। एवंदंतजननेपिदंतजन्मसप्तमेमासीत्युपनिषदिनियतकालत्वात्। चौलेतुनकालोप
लक्षणं। प्रथमेऽब्देतृतीयेवाकर्तव्यंश्रुतिचोदनादितिमनूक्तेः। ततःसंवत्सरेपूर्णेचूडाकर्मविधीयते॥
द्वितीयेवातृतीयेवाकर्तव्यंस्मृतिदर्शनादितियमोक्तेश्च तस्यानियतकालत्वादिति। तन्मंदं॥ चौ
लवन्नामदंतजननयोरपिस्वरूपेणनिमित्तत्वोपपत्तेस्तद्विशिष्टकालानुवादेवाक्यभेदात्। सप्तममा
सादर्वाग्दंतजननेनतद्भावप्रसंगाच्च। पक्षद्वयनिषद्दर्शनेननिर्णयंकुर्यात्मनूनंशतायुःपुरुषइतिश्रु
तेरर्वाक्‌पितृमरणेनतत्कर्मापित्यजेत्। ननुकालानुपलक्षणेनामोत्कर्षेतद्भावेवास्नानमात्रा
च्छुद्धिःस्यात्। ततःकिमस्तु। अतएवोक्तं। आदंतजन्मनःसद्यइति। साचविष्णुवचनाद्दाहाभावेवि
षयेतिवक्ष्यामः। त्रिवर्षादावपिस्यादितिचेन्न। दाहदंतादिनिमित्तेविशेषाशौचैःपूर्वस्याबाधात्
तदुक्तं। पूर्वत्वाधेननोत्पत्तिरुत्तरस्यहिसिध्यतीति। जननाद्दशरात्रेव्युष्टेशतरात्रेसंवत्सरेवेतिपारस्क
रोक्तेः। द्वादश्यामपरेणमासेपूर्णेतथापरे अष्टादशाहनितथावदंत्यन्येमनीषिणइतिभविष्यवचना
च्च॥ कालानियमाच्च। नचप्राथम्याद्दशरात्रेगौणेतिमुख्यःकालस्त्वन्यस्तत्वनुकल्पइतिवाच्यं। चौ
लेपितथापत्तेः। नचदंतजननकालानुपलक्षणेसदंतजातमृतस्यदाहेकाहप्रसंगः। दशाहवच्च
धात्। नामकरणोत्तरमेवदाहप्रवृत्तेः। दशाहाभ्यंतरेबालेप्रमीतेतस्यबांधवैः शावाशौचंनकर्त
व्यंसूत्याशौचंविधीयतेइतिबृहन्मनूक्तेश्च। आशौचेदाहोपलक्षणं। सूतकवदितिपारस्करोक्तेः
यत्तुविष्णुः। अनिर्दत्तेदशाहेतुपंचत्वंयदिगच्छति। सद्यएवविशुद्धिःस्यान्नप्रेतंनोदकक्रियेति।
तदपिप्रेताशौचनिषेधार्थं। नतुसद्यस्त्वपरं वाक्यभेदात्। किंच। नामकालात्प्राक्‌मृतस्यस्नानं।
तदुत्तरंत्वेकाहादि। नामकालेत्वेकादशाहेमृतस्यनकिमपिस्यात्॥ ॥अथशंखवचने
त्यवृत्तोपपंचमी। तदाप्रमितिर्नोपपद्यते। नाग्निर्वापिक्रतेसतीमिमन्त्रादिविरोधात्सकृत्
इति माधवमितास्वरादिविरोधाच्च। नकालोपलक्षणं। कापीतिदिक्‌। नामोत्तरंदंतोत्पत्तेः प्राक्‌
दाहेत्र्यहः। अदंतजातेतनयेशिशौगर्भच्युतेतथा सपिंडानांतुसर्वेषामहोरात्रमशौचकमितिवृ
मोक्तेः। दाहाभावेतुस्नानमात्रं। अदंतजातेप्रेतेसद्यएवनास्याग्निसंस्कारइतिविष्णुनादाहाभावे
तदुक्तेः। आदंतजन्मनःसद्यइतियाज्ञवल्क्याच्च। दाहविकल्पस्त्वाहलौगाक्षिः। तूष्णीमेवोदकं
कुर्यात्तूष्णींसंस्कारमेवच। सर्वेषांकृतचूडानामन्यत्रापीच्छयाद्वयं। अन्यथाकृतचूडे। अत्र तृतीयव
र्षंतृतीयवर्षरूपकालोपलक्षणार्थमितिमेधातिथिहरदत्तौ। मनुरपि॥ नात्रिवर्षस्यकर्तव्याबांधवै
रुदकक्रिया। जातदंतस्यवाकुर्युर्नाम्निवापिकृतेसतीति। अदंतंदाहोपलक्षणं। दंतोत्पत्त्यनंतरमाकृत
वर्षांतात्र्यहः। दंतजातेप्यकृतचूडेत्वहोरात्रेणशुद्धिरितिविष्णूक्तेः। त्रिवर्षोर्ध्वंकृतचूडेऽकृतचूडे

वाशगुप्तनयनात्त्र्यहः। यद्यप्यकृतचूडो वै जातदंतस्तु संस्थितः। तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेदिति
आंगिरसोक्तेः। अत्र जातदंतत्वमुद्देश्यविशेषणत्वादविवक्षितं। दाहयित्वेत्यप्यनुवादः। उभयविधौ
वाक्यभेदात्। त्रिवर्षात्प्राक् चूडाभावेऽग्निदाने त्र्यहस्तदभावे विष्णूक्तैरेकाह इति माधवः॥ यत्तु कश्चिद
हा आत्रिवर्षविषयादस्मादेव वाक्यात् त्रिवर्षोर्ध्वमपि तत्सिद्धिः। विज्ञानेश्वरोक्तेश्च। त्रिवर्षोर्ध्वमकृतचूड
विषयत्वं चिंत्यं। जातपदवैयर्थ्यादिति। तन्न तुच्छं। दाहस्याविशेषणत्वात्। नृणामकृतचूडानामशुद्धिर्नै
शिकी स्मृतेति मनूक्तेः त्रिवर्षोर्ध्वमेकाहाप्राप्तेरर्थात्त्र्यहसिद्धेः। त्वयाप्यग्रे तथांगीकारात्पदवैयर्थ्यस्
सामान्याद्वाक्यार्थाज्ञानाच्चेत्यलं मिताक्षरार्थानभिज्ञदूषणेन। प्रथमवर्षादौ कृतचूडस्य सदा त्र्यहः।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यत इति मनूक्तेः। एतत्सर्वं प्रागुक्तं सपिंडानां। मातापित्रोस्तु दशाहोर्ध्वं
मृतेस्त्वेव त्रिरात्रं बालानां जातदंतानां त्रिरात्रेण शुद्धिरिति काश्यपोक्तेः। वैजिकादभिसंबंधादनुरु
ध्यादघं त्र्यहमिति मनूक्तेश्च। शुद्धितत्त्वादयो गौडास्तु अजातदंतमरणे पित्रोरेकाहमिच्छंति। दंतजाते
त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणाविति कौर्मात्। काश्यपं शूद्रपरं। अनूढानां तु कन्यानां तथा वै शूद्रज
न्मनामिति त्र्यहानुवृत्तौ शंखोक्तेः। त्रिरात्रं तु भवेच्छूद्रे षण्मासे पितरि शौचमृत इति मत्स्यसूक्ताच्च। दंत
जातशूद्रे तु पंचाहः। यथाहांगिराः॥ शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पंचभिः। अत ऊर्ध्वं मृते शूद्रे द्वा
दशाहो विधीयते॥ षड्वर्षांतमतीतो यः शूद्रः संम्रियते यदि। मासिकं तु भवेच्छौचमित्यंगिरस
भाषितमिति॥ यत्तु अनूढभार्यः शूद्रस्त्विति शंखोक्तमाशौचं तत्सगुणशूद्रपरं। निर्गुणत्वे नूढभा
र्ये शूद्रे त्रिवर्षोर्ध्वं द्वादशाहः षड्वर्षोर्ध्वं मासः। षड्वर्षात्प्रागपि कृतोद्वाहे मास इत्याहुः। एतत्तु तुल्यवयसि
सर्वेषामिति विरोधाच्छिष्टविगानात्त्याज्यमिति विज्ञानेश्वरादयः। दाक्षिणात्यानां तथैवान्य
देशे प्रागुक्तमिति गौडाः। एवं कन्यास्वपि। तास्वप्यजातदंतासु पित्रोरेकरात्रमिति माधवः। य
त्तु विज्ञानेश्वरेणोक्तं ऊनद्विवर्षे उभयोः सूतकं मातुरेव हीति याज्ञवल्क्योक्तेः। गर्भस्थे प्रेते मातु
र्दशाहः। जाते उभयोः कृते नाम्नि सोदराणां चेति। पैठीनस्युक्तेश्च पित्रोः सोदराणां च दशाहमस्पृश्य
त्वमिति तन्नेदानीं प्रचरति। अत एव स्मृत्यर्थसारे। तन्नादृतं। कृतासु चौलात्प्राक् मृतौ स्नानं। अ
चूडायां तु कन्यायां सद्यः शौचं विधीयते इत्यापस्तंबोक्तेः। इदं त्रिपुरुषमध्ये अप्रत्तानां तु स्त्रीणां
त्रिपुरुषी विज्ञायते इति वसिष्ठोक्तेः। इदं वाग्दानोत्तरमिति गौडाः। अप्रत्तानां तथा स्त्रीणां सापिं
ड्यं साप्तपौरुषमिति वचनात्। चौलोत्तरं वाग्दानपूर्वं तास्वेकाहः। अविशेषेण वर्णानामर्वाक्
संस्कारकर्मणः। त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते इत्यंगिरसा त्रिरात्रविषयेऽह्नो विधा
नात्। अप्रत्तानामविवाहितानां त्रिपुरुषी पितृपितामहप्रपितामहैः सकन्यायाश्चतुर्थ्याः सापिं
ड्यं। एवं च कन्यापेक्षया पंचमेन वृद्धप्रपितामहेन सापिंड्यं निवर्तते इति तत्संतानेऽन्यस्मिन्न विवाहस्त्वा
शौचादिधर्मो न भवतीत्यर्थः। इति गोविंदार्णवे संस्कारवीचौ। स्त्रीणां तु पितृपक्षे पंचावधिकं
सपिंडत्वं अप्रत्तानां तु स्त्रीणां त्रिपुरुषमित्यादि संस्कारवीचौ प्रपंचितम्। अतश्च कन्याया वृद्धप्रपि
तामहसंतत्यां तत्सापिंड्याभावात्तस्या मरणेपि सपिंडकृतमाशौचं नास्तीति शुद्धिवीचौ गोविंदा
र्णवे॥ अतः शूद्रस्योपनयनस्थानीयविवाहात्पूर्वं त्रिरात्रं। विवाहोत्कर्षे तु षोडशाब्दमध्ये त्रिरात्र

मेवेत्यपरार्कादयः। शूद्रनिर्णयोऽप्यत्रोर्ध्वं यथाह। षडब्दोर्ध्वे विवाहाभावे द्वादशाह इति गौडाः। सगुणा
नां षोडशाब्दोर्ध्वं तु विवाहाभावे पित्रोराशौचं वक्ष्यते। तदुत्तरं प्राग्विवाहाद्दत्ते कुले पितृकुले च
सप्तपुरुषावधि त्रिरात्रं। अवशिष्टं वंशनानुयायेनैव प्रतिपादितं। असंस्कृतासु सङ्गे यात्रिरात्रं शुभ
योः स्मृतमिति मरीच्युक्तेः। रत्नाकरे तु दत्तत्वेऽव शंखः। पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृ
ता। तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति। यावज्जीवमशौचमिति वाचस्पतिमिश्राः॥

॥ अथानुपनीते किंचिदुच्यते॥ तत्र प्राग्दन्तोत्पत्तेः खननमेव। तदूर्ध्वं वर्षत्रयात्पूर्वं चौलाभावेऽप्यु
दकदाने विकल्पः नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सती
ति मनूक्तेः। उदकक्रियामाह चर्यादाहोपलक्षणं खनने तु नान्त्यदोषैर्देहिकं। ऊनद्विवर्षं निखनेन्न कुर्या
दुदकं ततः इति याज्ञवल्क्योक्तेः। उदकमन्त्यकर्मपरमित्यपरार्कः॥ यमः॥ ऊनद्विवर्षकं प्रेतं घृताक्तं
निखनेद्भुवि। यमगाथा गायमानो यमसूक्तमनुस्मरन्। माधवीये ब्राह्मेऽपि॥ स्त्रीणामनुपनीतो गर्भः
सद्योजातो मृतोऽथवा। अजातदन्तो मासे वा मृतः षड्भिर्गतैर्बहिः। वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तं तु
काष्ठवत्। खनित्वा शनकैर्भूमौ सद्यः शौचं विधीयते। अलंकरणमपि वक्ष्यते। कृतचूडस्य तु त्रिवर्षात्
प्रागूर्ध्वं चाप्युदकदानं नियतं॥ यत्तु वसिष्ठः॥ ऊनद्विवर्षे प्रेते गर्भपतने वा सपिंडानां त्रिरात्रमिति तत्प्र
थमाब्दचूडापरं। वर्षत्रयादूर्ध्वमकृतचूडस्यापि नियतं। वर्षत्रयोर्ध्वमुपनयनात्पूर्वं च तूष्णीमप्युद
कदानं तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च इति पूर्वोक्तलौगाक्षिस्मृतेः॥ पिंडदानमपि कार्यं।
असंस्कृतानां भूमौ पिंडं दद्यात् संस्कृतानां कुशेष्विति॥ प्रचेतसोक्तेः। उदकदाने सपिंडैः कृतचूडस्ये
ति गौतमोक्तेः। उदकग्रहणमौर्ध्वदेहिकपरमिति हरदत्तः। द्वादशाहस्मरणदर्वीकपौगंडमरणे
सति सपिंडीकरणं न स्यात् नैकोद्दिष्टानि कारयेदिति हरदत्तधृतदेवलोक्तेश्च। मरीचिरपि॥ प्रे
तपिंडं बहिर्दद्याद्दर्भमंत्रविवर्जितमिति॥ एतदनुपनीतपरमिति विज्ञानेश्वरः॥ अत्र चूडे वस्त्रौष
धिः। पूर्ववाक्ये तु तद्ग्रहणात्। उदकग्रहणस्योपलक्षणत्वाद्दाहः पूर्वावधिरिति केचित्। द्वादशा
हस्तूपनीतद्विजानूढशूद्रविषयः। अहाशौचे पिंडदानविधिमाह पारस्करः। प्रथमे दिव
से देयास्त्रयः पिंडाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसंचयनं तथा। त्रींस्तु दद्यात्तृतीयेऽह्नि व
स्त्रादि क्षालयेत्ततः इति। अत्र देवयाज्ञिकनिबंधे विशेषः। शिशुरादन्तजननाद्बालः स्याद्यावदा
शिखः। कथ्यते सर्वशास्त्रेषु कौमारो मौंजिबंधनात्। आपंचवर्षात्कौमारं पौगंडं नवहायनः॥ तथा
गर्भनष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते। पायसं क्षीरं दद्याद्बालविपत्तितः। एकादशद्वाद
शाहश्चैवोत्सर्गं विधिं विना। तथा॥ पंचमे वा मृते बालस्तत्र भाषः प्रदीयते। किंचित्समानवयसां
स्कृतानां यथाविधिः॥ भक्ष्यं भोज्यं च दातव्यं तथा वस्तुलभस्त्रिका तद्रूपाणि प्रदेयानि सोपान
त्कानि तत्समे। कुमाराणां च बालानां भोजनं वस्त्रवेष्टनं। पंचोपजीवने बालस्तत्र हि मायदीयते।
तथा॥ भूमिनिःक्षेपणं बाले आ वर्षद्वयमाशिखं॥ ततः परं स्वगृह्योक्तदाहो यथाविधिः॥ अत्रो
र्ध्वं खननं निवृत्त्यर्थमा वर्षद्वयमिति। प्रागपि कृतचूडस्य निवृत्त्यर्थमाशिखमिति॥ तथा॥ चूडा
कर्मणि संजाते विपत्तिस्तु यदा भवेत् स तत्काले प्रकर्तव्यं तस्य संस्कारं तदा। ततो दाहः प्रकर्तव्य

उदकं तत्र निश्चितम्। आद्यानि षोडशापि स्युः सपिंडीकरणं विना। इदं पंचवर्षोत्तरं। जन्मतः पंचवर्षाणि भुं
जेदत्तमसंस्कृते। पंचवर्षाधिके बाले विपन्ने पदिजापतो वृषोत्सर्गादिकं कुंभं पान्नमुदकं ततः। अह
न्यहनि संप्राप्ते कुर्यात्क्षाद्वानि षोडश॥ पायसेन गुडेनैव पिंडं दद्याद्यथाक्रमं। उदकुंभप्रदानं च पददा
नानि यानि च दीपदानानि यत्किंचित्पंचवर्षाधिके सदा। कर्तव्यं तु खगश्रेष्ठ प्रतावाक्प्रेतत्वप्नये
स्वाहाकारेणैव कार्याण्येकोद्दिष्टानि षोडश॥ ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीतिना तथेति त
त्रैवोक्तेः। अत्र मूलं चिंत्यं। वार्षिकादि न भवत्येव। सपिंडत्वाभावे पितृत्वायोगात्। वचनाभावाच्च। दि
वोदासीये। अव्रते निधनं प्राप्ते विशादौ शूद्रजातिवत्। क्रियाः सर्वाः समुद्दिष्टाः सपिंडीकरणं विना उ
दकं पिंडदानं च कृतचूडे विधीयते इति। स्त्रीणां तु दाहात्मागुदकपिंडदानविकल्पः॥ स्त्रीणां चैके
प्रत्तानामिति गौतमोक्तेः। स्त्रीशूद्राश्चधर्मिणः इति वचनाच्छूद्रेप्येवं। एतद्द्वयोर्निमित्ताशौचं सर्वव
र्णसमं। तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रपादोक्तेः। यानि तु। निवृत्तचूडके विप्रे त्रिरात्रा
च्छुद्धिरिष्यते। निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते। शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पंचभिः॥
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते। षड्वर्षांतमतीते तु शूद्रे मासमशौचकमित्यांगिरसादी
नि तानि शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरमदनपारिजातादयः। तेनैतद्देशाच्छूद्राणामव
स्था प्रागुक्ता हेयैव। तुल्यं वयसि सर्वेषामिति दाक्षिणात्यपरं। अन्यदेशे कौर्म्मोक्ता व्यवस्थेति शु
द्धितत्त्वे॥

॥अथ जाताशौचं॥

॥ तच्च द्विजपुंसामुपनयनोर्ध्वं प्रव
र्त्तते। त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परं स्वस्वद्वादशाहानि विशः पंचदशैव तु। त्रिंशद्दिनानि
शूद्रस्य तदर्धं न्यायवर्त्तिन इति याज्ञवल्क्योक्तेः॥ यत्तु स एव। त्रिरात्रं दशरात्रं वा शावमाशौचमिष्य
त इत्याह। तत्र दशाहे त्रिरात्रमस्पृश्यत्वं। एकदिनोत्पन्नमशौचद्वये दशाहमस्पृश्यत्वं। मरणं यदि तु
ल्यस्यान्मरणेन कथंचन। अस्पृश्यं तु भवेज्ज्ञातं सर्वमेव स बांधवमित्यंगिरसोक्तेः। दशाहाशौचपरत्वे
दशरात्रमतः परमित्यानेन पौनरुक्त्यापत्तेरिति शुद्धिविवेकादयः॥ तन्न॥ स्मृतिभेदात्। त्रिरात्रं द
शरात्रं वेति विकल्पायोगाच्च॥ यत्तु पुत्राणां वेदानध्याप्य वृत्तिं विदध्यादिति तत्राहाश्वलायनः॥ द्वाद
शरात्रं महागुरुषु दानाध्ययने वर्जयेरन्निति। अत्र यावदुक्तनिषेधो वा स्पृश्यत्वमात्रं वा। नतु कर्मान
धिकारः। एकादशाहे तु वैश्वदेवोक्तेः। एकादशाहिकमुक्त्वा तत्र स्वंते विधीयते इति। शुद्धितत्त्वे तु
त्रयः पुरुषस्यातिगुरवो भवंति माता पिताचार्यश्चेति विष्णूक्तेः। पित्रादयो महागुरवः भर्त्ताप्युक्तो रा
मायणे। पतिर्बंधुर्गतिर्भर्त्ता दैवतं गुरुरेव च। शातातपः॥ पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गु
रुः। एकपदविमूढानां पितृमातृनिषेधार्थं। सोदकानां त्रिरात्रं। अहानुदकदापिन इति मनूक्तेः। अ
भिशरणे॥ सपिंडता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेता चतुर्दशात्॥ जन्मना
मस्मृतेरेके तत्परं गोत्रमुच्यते॥ बृहस्पतिः॥ दशाहेन सपिंडास्तु शुध्यंति मृतसूतके। त्रिरात्रेण सकु
ल्यास्तु स्नात्वा शुध्यंति गोत्रजाः। स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जाताशौचं। वैवाहिको विधिः स्त्रीणामौ
पनायनिकः स्मृत इत्युक्तेः। दत्तानां भर्त्तरेव हि। स्वजन्युक्तमशौचं स्यान्मृतके जातके तथेति माधवीये
वालाच्च। शूद्रस्य विवाहाभावेपि षोडशवर्षोर्ध्वं मासः। अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परं। मृत्यु

मनुं स्वमधिगच्छेत्से न्मासानस्याविबाधयाः। शुद्धिं समधिगच्छेत्तिनात्र कार्या विचारणेति। अपरार्के शंखो
क्तेः नितीयामूनमदनपारिजातादौ त्वन्यथोक्तं। हारीतः अप्रेजिच्चधुनाद्विप्रः सत्रिपक्षधनुर्मेहान्।
आमनोदयहांदेश्यः शूद्रवत्स्नद्वयोऽग्रहान्॥ मनुवतोरावदमेदेहादशोवस्नद्वयमिति। मेधातिथिस्तु
त्रिरात्रमात्रतादेशादिमत्रअतं कालोपलक्षणार्थं। सच कालः स्वल्पः। सर्वेषां चाष्टमं वर्षं रूपतेनच
तुर्णामिति वर्णानामुपनयनाभावेप्यष्टमादूर्ध्वं शरणमाशौचं तत्रापि भागष्टमाच्छिरावर्मोनकाइतिसत्
ल्पंतराद्दूर्ध्वंसंपूर्णमर्वाक् त्रिरात्रं। यथाश्यापोडशाद्वेवालस्त्याहुस्तेषामप्यष्टमाद्दूर्ध्वं शूद्रेमासस्त्वअर्वा
गष्टभ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकीति वचनादित्याह। हारलतायां तु द्विजत्वादिगौडग्रंथेषूक्तं। अनु
पनीतो विप्रइत्युक्त्वा॥ श्रीपते यत्र तत्र स्यादाशौचं त्र्यहमेव हि। द्विजन्मनामयं कालस्त्वयाणां तु पर
कं तस्मादिशूद्राणां क्रमुपनयनकालोपलक्षणं। षडब्दपर्यं मासत्रयाधिकपरं। गर्भाष्टमेष्टमे वाब्देश्युक्ते
मनुजाबालः। व्रतचूडाद्विजानां चपनीतिषु यथाक्रमं। दशाहत्र्यहमेकाहेशुध्यंत पिहिनिर्गुणाः॥ इति
द्विजादेताः इदंव्रतीतिसुक्तेः पंचाद्देपनीतपरिमितः तदेतन्नादियंते वृद्धाः। पातिनुपराशरः एका
हाद्ब्राह्मणः शुद्धिर्योऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु तद्धीनो दशभिर्दिनैः। केवलवेदः के
वलश्रौतास्मेरप्युपलक्षणं। अयं संकोचो होमाध्यापनपरएव। ननुसंध्यादिविति हारलतायां॥
अंगिरः॥ सर्वेषामेव वर्णानां सूतके मृतके तथा। दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्। दे
वलः॥ आशौचं दशरात्रं तु सर्वेषामपरे विदुः। निधनेमवचैवपश्यत कर्मणः सपं॥ अन्यतो
न्नहस्तकर्महानौ पीडावतो विप्रपरिचर्यापरं। शूद्रे दशरात्रमिति हारलतायां॥ दक्षः॥ सद्यःशौ
चं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड्दशाहा दशाहश्च पक्षो मासस्तथैव च। मरणांतंतथाचान्यद्
शपक्षास्तु सूतके। मिताक्षरायां सूत्यंतरे। चतुर्थे दशरात्रं स्यात्षण्निशाः पुंसि पंचमे। षष्ठे चतुर
हाच्छुद्धिः सप्तमे त्वहरेव तु इत्यादिनिताश्मापदनापदुणवद्गुणवद्विषयाणि देशाचारभेदा
द्वानेयानि। सद्यःशौचादिषडहंताः पक्षापापावराद्विपराः। अत्र मरणांतं जलनादिनिमित्ताद्वि
न्नं। पितृविगानान्नादात्तेयानीति विज्ञानेश्वरः। अस्नात्वा चाप्यहुत्वा वा अदत्वाश्नन् सयाद्विज
एवं विधस्य विप्रस्य सर्वदा सूतकं स्यादिति। दक्षोक्तवा। अन्यश्र्वोमस्यगेहे भार्यो स्यात्सनिलशः
आशौचं सर्वकार्येषु देहे भवति सर्वदेति। ज्ञात्वादिवशाद्यवस्थेत्यपरार्के मदनपारिजातादश्च।
माधवस्तु॥ वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथेति कलिवर्ज्येषुक्तेः। दशाह एव विप्रस्य सपि
डमरणे सति कलौ नराणां कुर्वाणः कलौ भवति किल्बिषीति॥ हारीतोक्ते अन्यूनाशौचपक्षाद्यु
गांतरविषया। मरणांतादिपक्षास्तु निंदार्थवादः। अन्यथा नामधारकविप्रस्तु दशाहं सूतकी भवेदि
ति विरोधस्यादित्याह। मनुर्देवलः। दशाहादित्रिभागेन कृते संचयनेक्रमात्। अंगस्पर्शनमिच्छं
ति वर्णानां तत्वदर्शिनः इति। पूर्णाशौचे स एवतामाह। यच्चानुपनीतानिक्रांताशौचे त्रिरात्रादौ त
नैवोक्तं। स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः इति। तदपि पूर्णांतरेषु। अस्थिसंचयनादूर्ध्व
मंगस्पर्शनमेव चेति माधवीये कलौ तन्निषेधात्। यत्तु हारलतायां। चतुर्थेहनि कर्तव्यः संस्पर्शो
ब्राह्मणस्य तु इति अन्ये तत्सोक्तेः। ब्राह्मणोऽहेकाहाशौचे पि चतुर्थाहएवांगस्पर्श इति। तन्न॥ देवलादि

वंशेनास्यदशाहमोचरत्वात्। यत्तु॥ वर्णसंकरजामूर्धावसिक्ताद्यास्तेषामाशौचविशेषःकलौनोपयुक्त
इतिनोच्यते। प्रतिलोमजानांनाशौचं। मलापकर्षणार्थंतुस्नानमात्रमितिविज्ञानेश्वरः। माधवस्तु
शौचाशौचेनकुर्वीरन्शूद्रवद्वर्णसंकराइतिब्राह्मोक्तेःशूद्रवदाह। हारलताप्येवं॥ दत्तक्रीतकृत्रि
मादिपुत्रेषुअहीनवर्णासुस्त्रीषुचसपिंडत्वेपिप्रसवेमरणेचपूर्वापरपित्रोर्भर्त्रोश्चत्रिरात्रमेवनद
शाहादि। अनौरसेषुपुत्रेषुजातेषुचमृतेषुच। परपूर्वासुभार्यासुप्रसूतासुमृतासुचेति त्रिरात्रानुवृत्तौ
विष्णूक्तेः। सपिंडानांत्वेकाहः। परपूर्वासुभार्यासुपुत्रेषुकृतकेषुच। भर्तृपित्रोस्त्रिरात्रंस्यादेकाहस्तु
सपिंडतइतिमाधवीयेहारीतोक्तेः। सूतकेमृतकेचैवत्रिरात्रंपरपूर्वयोः। एकाहस्तुसपिंडानांत्रिरात्रं
यत्रवैपितुरितिमरीच्युक्तेश्च। शंखः॥ अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुच। परपूर्वासुचस्त्रीषुत्रि
रात्राच्छुद्धिरिष्यते॥ परपूर्वापुनर्भूः॥ इदंसवर्णासुहीनवर्णासुतुशंखलिखितौ। परपूर्वासुभार्या
सुपुत्रेषुकृतकेषुच। नानध्यायोभवेत्तस्यनाशौचंनोदकक्रिया। ब्राह्मेपि। अशौचंतुत्रिरात्रंस्यात्स
मवर्णेषुनिश्चितं। यत्तुषडशीतौ। अन्यपूर्वावरूढासुत्रिदिनाच्छुद्धिरिष्यते। तासुवानन्यपूर्वासुपं
चाहोभिर्विशुध्यतेति। तत्रपंचाहेमूलंचिंत्यं। यत्तुयाज्ञवल्क्यः अनौरसेषुपुत्रेषुभार्यास्वन्यगतासु
चेत्येकाहमाह॥ तदसन्निधौज्ञेयं। यदापितुरेकाहस्तदासपिंडानांस्नानं। अन्याश्रितेषुदारेषुप
रपत्नीसुतेषुच। गोत्रिणःस्नानशुद्धास्युस्त्रिरात्रेणैवतत्पितेतिप्रजापत्युक्तेः। पितेतिबहुरूपलक्ष
णं। तथोपक्रमात्। यत्तुदत्तकेपालकप्रतियोगिकपुत्रत्वात्पूर्वपितुर्नत्रिरात्रंपूर्वसंबंधनिवृत्तेश्चन
दशाहादितिकश्चित्। तन्न। जनकेपिबैजिकादभिसंबंधादनुरुंध्यादघंत्र्यहमितिवाचनिकाशौच
स्यानिवार्यत्वात्। पितृमरणेपिदत्तकादीनांत्रिरात्रं। शुद्धितत्त्वेब्राह्मे॥ दत्तकश्चस्वयंदत्तःकृत्रिमः
क्रीतएवचेति। उपक्रम्यसूतकेमृतकेचैवत्र्यहाशौचस्यभागिनइत्युक्तेः। स्मृतिकौमुद्यांहारलतायां
चैवं। दत्तकस्यपुत्रपौत्राणांजननेमरणेवासपिंडानामेकाहः। बीजिनश्चेति॥ गौतमेनसाप्तपौरुष
सापिंड्योक्तेः। सपिंडानांचैकाहस्योक्तत्वात्। सपिंडेतुपुत्रीकृतेसपिंडदत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोर्द
शाहएव। तत्रावासाभावात्सपिंडत्वेनदशाहप्राप्त्याच। पूर्वापरभर्त्रोस्तत्तयोःपुत्रयोस्त्र्यहंमाधवी
येमरीचिः मातुरैक्याद्द्विपितृकौभ्रातरावन्यगोत्रजौ। एकाहंसूतकंतत्रत्रिरात्रंमृतकेतयोरितिदि
क्। ऊढाकन्यायांतुविष्णुराह॥ संस्कृतासुस्त्रीषुनाशौचंपितृपक्षेतत्प्रसवमरणेचेत्पितृगृहेस्यातां
तदैकरात्रंत्रिरात्रंचेतिप्रसवेएकरात्रंमरणेत्रिरात्रमिति। विज्ञानेश्वरापरार्कौ॥ माधवस्तुप्रसवेपि
त्रिरात्रंपित्रोः एकरात्रंभ्रात्रादिबंधुवर्गस्य दत्तानारीपितुर्गेहेसूयेताथम्रियेतवा। तद्बंधुवर्गस्त्वेके
नशुचिस्तज्जनकस्त्रिभिरितिब्राह्मोक्तेरित्याह॥ यत्तुकश्चिदाहपक्षपदेनभ्रातरोगृह्यंते॥ वाक्यांतरेण
भगिनीमृतौत्रिरात्रोक्तेरितितच्चिंत्यं॥ तदभावादेतद्विरोधाच्च॥ भ्रातुःप्रसवेएकाहः। मृतौत्रिरात्रमि
तिकेचित्। युक्तंतुपक्षिणी परस्परंमृतौभ्रातृभगिन्योःपक्षिणीभवेदितिब्राह्मात्। भ्रातृभिन्नाना
मेकाहः। वृद्धोक्तेः। इतरेषांमध्याह्निकीतिवक्ष्यमाणवचनाच्च। यत्तुप्रधानगृहेमृतौपित्रोःपूर्णंभ्रातु
स्त्र्यहइतिकश्चित्तन्निर्मूलत्वान्नाशौचंपितृपक्षेइत्येतद्विरोधाच्चभ्रांतः॥ दत्तानारीपितुर्गेहेप्रधाने
सूयेतयदा। म्रियतेवातदातस्याःपिताशुध्येत्त्रिभिर्दिनैरितिकल्पतरौशुद्धितत्त्वेच। पतिगृहेप्रसवे

तुपित्रादीनामाशौचंनास्तिमृतौपित्रोःत्रिरात्रमस्त्येव।प्रत्ताप्रत्तासुपोषितासुसंस्कृतासंस्कृतासुच।
मातापित्रोस्त्रिरात्रंस्यादितरेषांयथाविधिः।अदत्तासुपित्रोरेकरात्रमितिमाधवीयेशंखकार्ष्णा
जिनिस्मृतेः वैजिकादभिसंबंधादित्युक्तेश्च।स्मृत्यर्थसारेप्येवं॥माधवस्तुइदंत्रिरात्रंजातदन्ताप्र
रा।दन्तोत्पत्तेःप्रागेकरात्रंपित्रोः।सद्यस्त्वशौचकन्यायांप्रौढायांवासराच्छुचिः।प्रदत्तायांत्रिरात्रेणाद
त्तायांपक्षिणीभवेदिति।पुलस्त्योक्तेरन्यत्रकन्यामृतौपित्रोःपक्षिणीमाह।षडशीतावपि॥पितृ
गेहाद्गतेयत्रयदिपुत्रीप्रमीयते।पक्षिणीतत्रपित्रोःस्यादन्येषामितिनिश्चयः॥ग्रामान्तरेइत्यपि
तिस्मृत्यर्थसारे।भ्रातुस्तुपक्षिणी।श्वशुरयोर्भगिन्यांचमातुलान्यांचमातुले।पित्रोःस्वसरितद्वच्च
पक्षिणींक्षपयेन्निशामितिबृहस्पतिस्मृतेः।शुद्धितत्त्वेकौर्मे॥आदंतात्सोदरेसद्यःआचूडादेकरा
त्रकं।आप्रदानात्त्रिरात्रंस्याद्दशरात्रमतःपरं।पित्रोर्मृतौस्त्रीणांत्रिरात्रं।पित्रोरुपरमेस्त्रीणांमूढानां
तुकथंभवेत्।त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमः॥इतिमाधवीयेबृहन्मनूक्तेः।इदंदशाहांतः
ऊर्ध्वंपक्षिणी॥भ्रातुर्भगिनीगृहेतस्यावातद्गृहेमृतौत्रिरात्रमन्यत्रतुपक्षिणीतिषडशीतावुक्तं॥आ
ह्नेपि।परस्परंमृतौभ्रातृभगिन्योःपक्षिणीभवेत्।मातुलाशौचवत्तुज्ञाःपितृव्याशौचमिष्यतइति।
मिताक्षरस्यनिर्मूलत्वात्पितृव्येस्नानमात्रमाहुः।त्रिंशच्छ्लोक्याम्॥मृतेह्याचार्यमातामहदुहितृसुतश्रो
त्रियर्त्विक्स्वयाज्यस्वस्रीयेषुत्रिरात्रंत्रिदिवसमशुचिःसोदकस्तूभयत्रपक्षिण्याशौचमृत्विग्दुहितृ
सुतसहाध्यायबंधुत्रयांतेवासिश्वश्रूश्वशुरमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे।मातामह्याश्चपित्रोः
स्वसरिचविरतौमातुलेमातुलान्यां।चाथोसद्योनिरेवस्त्वविषयनृपतौग्रामनाथेचनष्टे।शिष्योपाध्या
यबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषुस्वगृहपरमृतौमातुलेचैकरात्रं॥रात्रिंब्रह्म
चारिण्यथतुकथमपिस्वल्पसंबंधयुक्तेस्नानंवासोयुतंस्यादिदमपिसकलंसर्ववर्णेषुतुल्यमिति।
अत्रमूलंमिताक्षरादौस्पष्टं।दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रं।अनुपनीतयोःपक्षिणी।
संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते।संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितःइतिबृहस्म
नूक्तेःसंस्कृतेदाहे।तेनदाहेत्रिरात्रंनान्यथेतिगौडाः॥तन्न॥विशेषवैयर्थ्यात्।मातुलादौसन्नि
धिविदेशाभ्यांपक्षिण्येकाहयोर्व्यवस्था॥मनुः॥त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति।तस्य
पुत्रेचपत्न्यांचदिवारात्रमितिस्थितिः॥श्रोत्रियेस्वगृहेत्रिरात्रंश्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भ
वेदितिस्मृतेरितिमाधवः।एकग्रामीणेऽन्वेकाहःऋत्विजिवाहल्पकालश्रौतस्मार्तयाजनपरे
त्रिरात्रैकरात्रेज्ञेये।यद्यपिकर्मकुर्वन्नेववाचकःशब्दोभवतीतिशबराचार्यैःकर्मण्येवर्त्वि
क्त्वमुक्तं।तथापिकर्मारंभाशौचनिषेधात्तदुत्तरमेवेतज्ज्ञेयं॥गौडास्तु।एकोदकानांत्र्यहोगो
त्रजानामहःस्मृतं।मातृबंधौगुरौमित्रेमंडलाधिपतौतथेतिजाबालोक्तेर्मातृबंधुरेकाहमाहुः।शिष्येसो
पनीतेत्र्यहः।शिष्यसतीर्थ्यसब्रह्मचारीषुक्रमेणत्रिरात्रमेकाहइतिमाधवीयेबौधायनोक्तेः।अन्यत्रतु
मनुःमातुलेपक्षिणींरात्रिंशिष्यर्त्विग्बांधवेषुचेति।बंधुत्रयंत्वात्मपितृष्वसृमातृष्वसृमातुलपुत्राः
पितुःपितृष्वसृमातुलपुत्राः।मातुःपितृष्वसृमातृष्वसृमातुलपुत्राश्चेतिविज्ञानेश्वरः।अत्रपक्षिणी
पितृष्वस्रादिकानामूढानांत्वेकाहः।तद्बंधुवर्गस्यैकेनेति।पूर्वोक्तमाद्यानामितिकेचित्।यत्तुषडशी

मे। एवं पित्रोर्भगिन्योर्ये ये पितामह्योस्तथा। ये मातामह्योश्चैव भगिन्यस्तत्प्रजाश्च याः॥ मातुलाः स्व
स्रपित्रोश्च पत्न्यश्चैषां प्रजाश्च याः। पितरश्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहं। एवं श्वशुरजामातृदौहि
त्रविषयेऽपि स्मृतं। यत्तु यमः जामातर्यमृते शुद्धिस्त्रिरात्रेणोभयोः स्मृताः। पक्षिणी शालकानां स्यादि
ति शातातपोऽब्रवीत्। इति॥ तन्निर्मूलत्वात् मिताक्षरादिविरोधाच्चोपेक्ष्यं। मदनपारिजाते विष्णुः
असपिंडे स्ववेश्मनि मृते एकरात्रं। अत्र हरदत्तोंतः शवे चेत्यापस्तंबसूत्रेंतः शवे ग्रामे धनुःशता
द्वागन्नमभोज्यं। दीपमुदकुंभं चोपनिधाय भुंजीत। यदि समानवर्णानगृहमेव सूतिकायामि
त्याह। प्रधानगृहे मृतो नु। गृहे यस्य मृतः कश्चिदसपिंडः कथंचन। तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र
संशयः। इत्यंगिरसोक्तमिति माधवः॥ एतेन त्रिरात्रमसपिंडेषु स्वगृहे संस्थितेषु चेति कौर्मं व्याख्या
तं शुद्धितत्त्वे बृहन्मनुः॥ श्वशूद्रपतिताश्चांत्या मृताश्चेद्द्विजमंदिरे। शौचं तत्र प्रवक्ष्यामि मनुना भा
षितं यथा। दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः। द्वाभ्यां तु पतिते गेहमंत्ये मासचतुष्टयात्।
अत्यंते वर्जयेद्गेहमित्येवं मनुरब्रवीत्॥ अत्यंतो म्लेच्छः। अंत्यः श्वपाक इति वाचस्पतिः। तत्रैव य
मः॥ द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात्। संवर्तः॥ गृहशुद्धिं प्रवक्ष्यामि अंतस्थशवदूषिते
प्रोत्सृज्य मृण्मयं भांडं सिद्धमन्नं तथैव च। गोमयेनोपलिप्याथ छागेनाघ्रापयेद्बुधः ब्राह्मणैर्मंत्र
पूतैश्च हिरण्यकुशवारिभिः। सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयं॥ वृहद्विष्णुः॥ ग्राममध्यग
तो यावच्छवस्तिष्ठति कस्यचित् ग्रामस्य तावदाशौचं निर्गते शुचितामियात्। गृह्यपश्वादौ मृतेप्ये
वं। यत्तु माधवीये प्रचेतसा। मातृष्वस्रादिषु त्रिरात्रमुक्तं। मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति। गुरुराचार्यः॥ ऋत्विक्कुलागतः। तत्र गृहमृतो ज्ञेयं।
श्वशुरयोरन्यत्र मृतावपि सन्निधौ त्रिरात्रमसन्निधौ पक्षिणी। देशांतरे एकरात्रं वक्ष्यमाणविष्णू
क्तेरिति माधवगौडाद्यः॥ अन्यत्र तु मातृष्वस्रादिषु पक्षिणीं। पित्रोः स्वसरि तद्वच्च पक्षिणीः॥
क्षपयेन्निशामिति वृद्धमनूक्तेः। यत्तु वृद्धमनुः॥ अन्यत्र संस्कृतायां तु भ्रातर्यपि च संस्कृते। मित्रजा
मातरि प्रेते दौहित्रे भगिनीसुते। शालके तत्सुते चैव सद्यः स्नानेन शुध्यतीति। तज्ज्ञातृदौहित्रादे
र्देशांतरे। शालकसुतजामात्रोः स्वदेशे ज्ञेयं। शालके तु स्वदेशे एकाहः। आचार्यपत्नीपुत्रोपाध्या
यमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमिति माधवीये विष्णूक्तेः। हरदत्तीये दशश्लोक्या
मप्येवं। श्वशुर्यः शालकः। देशांतरे स्नानं। श्वशुरयोर्देशांतरे एकाहः जाबालः॥ एकोदकानां तु
त्र्यहो गोत्रजानामहः स्मृतं सर्वत्र मृत्याभावेपि क्रयकर्त्तुर्दशाहः। गुरोः प्रेतस्य शिष्यस्तु पितृमेधं
समाचरेत् प्रेताहारैः समं तत्र दशरात्रेण शुध्यतीति मनूक्तेः। शिष्य इत्युपलक्षणं। निरन्वये स
पिंडे तु मृते सति दयान्वितः तदाशौच तदाशौचं पुराचीर्त्वा कुर्यात्तु पितृवत्क्रियामिति माध
वीये ब्राह्मोक्तेः। दिवोदासीये। सगोत्रो वाऽसगोत्रो वा योग्निं दद्यात्सखे नरः सोपि कुर्यान्नवश्रा
द्धं शुद्धे च दशमेऽहनि। यत्रैकविषये पक्षिण्येकाहादिपक्षद्वयमुक्तं तत्र सन्निधिविदेशभेदादि
कृता व्यवस्था। त्रिंशत्श्लोक्यां॥ वानप्रस्थे यतौ चोपरमति कुलजे षट्के चाप्लुवः स्याद्यो विद्धो
विप्र गुल्मे मृतवति तु दिनं युद्धविद्धे च सद्यः। अत्र मूलमाकरे स्पष्टं। युद्धस्थे मृतस्य स्नानं। उप

नैरहवेशस्तैः स्वधर्मे हतस्य च सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिरिति मनूक्तेः। यत्तोन्यत्र
मे संवर्तेदैवेत्यर्थः। यत्तु भारते राजधर्मेषु॥ अशौच्यो हि हतः शूरः स्वर्गलोके महीपते नह्यन्नमु
दकं तस्य न स्नानं नाप्यशौचकमिति श्राद्धादिनिषेधः स पुत्राद्यभावपरः। अतएव तत्र करणादीनां
श्राद्धमुक्तं। अन्ये तु दशपिंडनिषेधमाहुर्यतिवत्। यत्तु पराशरः॥ आहवेषु हतानां च एकरात्रम
शौचकमिति। तत्तु दूरस्थेन कालांतरमृते ज्ञेयं आसन्निधौ स्नानमिति माधवः। शुद्धितत्वेग्निपु
राणे। दंष्ट्रिभिः शृंगिभिर्वापि हता म्लेच्छैश्च तस्करैः। येषामप्यर्थे हता यांति राजन्स्वर्गे न संशयः
।सर्वेषामेव वर्णानामेतत्परस्य विशेषतः। यत्तु बृहस्पतिः॥ डिंबाहवे विद्युता च राज्ञा गोविप्रपाल
ने। सद्यः शौचं मृतस्याहुस्त्र्यहं चान्ये महर्षयः। तच्च शस्त्रं विना पराङ्मुखहते च त्रिरात्रं। राज्ञावध्योह
ते सद्यः शौचमन्यत्र त्रिरात्रं। तत्रैव व्याघ्रः। क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा। आसप्ताहात्त्रि
रात्रं स्याद्दशरात्रमतः परं। शस्त्राघातेक्षतं विना शवस्पर्शे तु हारीतः। शवस्पृशो ग्रामं न प्रविशेयुरा
नक्षत्रदर्शनात् रात्रौ चेदादित्यस्य। यत्तु मनुः॥ अन्हा चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः। शवस्पृशो वि
शुध्यंति त्र्यहादुदकदायिनः॥ इति अन्हा रात्र्या चेति अहोरात्रमुक्तं। त्रिभिस्त्रिरात्रैरिति नवरात्रमे
वे दशरात्रमित्यर्थः। तत्रादन्नाशने तद्गृहवासेनापर्वज्ञेयं। अन्नदस्त्वन्नमत्रैव न चेत्तेषां गृहे वसेदि
ति तेनैवोक्तेः। अंगिराः॥ आशौचं यस्य संसर्गादापतेद्गृहमेधिनः। क्रियास्तस्य न लुप्यंते गृह्याणां
च न तद्भवेत्॥ ॥अथ निर्हाराद्याशौचं॥ ॥स्नेहेन सवर्णे निर्हारे तद
न्नाशने तद्गृहवासे च दशाहः। तदन्नाशनेन तद्गृहवासे त्र्यहः। गृहावासेन्नभक्षणे चैकाहः मनिर्
हरणेन निर्हरेद्दाहे च तज्ज्ञात्याशौचं यदि निर्हरति प्रेतं मलोभाक्रांतमानसः। दशाहेन द्विजः शुद्ध्ये
द्दशाहेन भूमिपः मासार्द्धेन तु वैश्यस्तु शूद्रो मासेन शुध्यतीति कौर्मोक्तेः। विजातीयनिर्हारे तु प
रजातीयमशौचं। अत्र भृतिगृहे द्विगुणं। अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि। वहेच्छवं तदाशौ
चं दृष्ट्वा द्विगुणं भवेदिति कामोक्तेः। कौर्ममेतदिति गौडः। दाहेप्येवं। यत्तु मात्स्ये॥ यः सवर्णं तु
मूल्येन नीत्वा चैव दहेन्नरः। अशौचं तु भवेत्तस्य प्रेतजातिसमं नृपेति। नदापद्विजेपि। सोक्तं नि
र्हारे तु दशाहमिति माधवः। अलंकरणे तु शंखः॥ कृच्छ्रपादोसपिंडस्य प्रेतालंकरणे कृते अज्ञा
नाद्युपवासः स्याद्दशक्तौ स्नानमिष्यते। धर्मार्थं अनाथसवर्णहरणे क्रियाकरणे च द्विजस्यानंत
यज्ञफलं स्नानेन प्राणायामेन स्पर्शश्चेति माधवीये। अग्निरप्येवं॥ येन संस्पर्शसंस्कारे नास्यत्र
नैव दुष्यति। वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यतीति अपरार्के ब्रह्मपुराणोक्तेः। मातुल
त्वादिसंबंधे त्रिरात्रं। असंबंधिद्विजान्वहित्वा दहित्वा च सद्यः शौचं संबंधे त्रिरात्रमिति पैठीनसि
स्मृतेः। गौतमपितास्वरणांचद्रात्रिः॥ सूतकाद्विगुणं शावं शावाद्द्विगुणमार्तवं। आर्तवाद्द्विगु
णा सूतिस्ततोपि शववाहकः। अत्र सर्वेणानांतरनिवृत्तिरित्यर्थः॥ विष्णुः॥ मृतं द्विजं न शूद्रेण हा
रयेन्न शूद्रं द्विजेन॥ देवलः॥ ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः। यदि कुर्याच्चरेत्कृच्छ्रं
पुनः संस्कारमेव च॥ याज्ञवल्क्यः॥ आचार्यपितृपाध्यायान्निर्हृत्यापि व्रती भवेत्। अनुगमने तु स
पिंडेन दोषः। विहितं हि सपिंडानां प्रेतनिर्हरणादिकं तेषां करोति यः कश्चित्तस्याधिक्यं भवेत

इति देवलोक्तेः॥ दोषस्त्वसपिंडस्यानाथस्य क्रियां विनेति हारीतोक्तेः। समोत्कृष्टवर्णे तु माधवीये
कण्वः। अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनं। सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति।
हीनवर्णे तु क्षत्रिये त्र्यहः। वैश्ये पक्षिणी शूद्रे त्रिरात्रं क्षत्रियस्य वैश्ये त्र्यहः शूद्रे पक्षिणी वैश्यस्य शूद्रे त्र्य
हमिति विज्ञानेश्वरः॥ माधवस्तु विप्रस्य वैश्ये त्र्यहः क्षत्रियस्य शूद्रे ऽप्येवं॥ अन्यत्प्रागुक्तं। स्नानाग्नि
स्पर्शघृताशनानि सर्वत्रेत्याह। हीनवर्णस्य दाहोर्ध्वदैहिककरणे तु॥ ब्राह्मे॥ ब्राह्मणो हीनवर्णस्य
न कुर्याद्दौर्ध्वदैहिकं। कामाल्लोभात्तथा मोहात्कृत्वा तज्जातितां व्रजेत्॥ मनुः॥ अन्त्यानां याजनं कृ
त्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति। परेषां सर्ववर्णानां। हीनेषु तद्द्वैगुण्य
त्रैगुण्यचातुर्गुण्याद्यूह्यं॥ ॥अथ परेते समोत्तमवर्णयोः॥ ॥संचयनात्पू
र्वं सचैलस्नानमूर्ध्वमाचमनम्। हीनवर्णे तु संचयनात्प्राक् सचैलमूर्ध्वं स्नानमात्रं॥ विप्रस्य क्षत्रवैश्य
विषये तु ब्राह्मे॥ अस्थिसंचयने विप्रो रोति चेत्क्षत्रवैश्ययोः। तदा स्नात्वा सचैलस्तु द्वितीयेह्नि शुध्य
ति। कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत्। क्षत्रस्य वैश्येप्येवम्। शूद्रे तु संचयनात्प्राक् विप्रस्य त्रिरात्रं क्ष
त्रवैश्ययोर्द्विरात्रं। ऊर्ध्वं तु द्विजानामेकाहः। शूद्रस्य शूद्रे स्पर्शं विनास्थिसंचयात्पूर्वमेकाहः। ऊर्ध्वं स
द्योतिरिति माधवीये ज्ञेयं। शुद्धितत्त्वे पारस्करस्तु॥ अस्थिसंचयनादूर्ध्वं मासं यावद्द्विजातयः। दिवसे
नैव शुध्यंति वाससां क्षालनेन च। सजातेर्दिवसेनैव अहान्क्षत्रियवैश्ययोरित्युक्तम्। सपिंडानां रो
दने निर्हरणादावदोषस्तूक्तं प्राक्। विज्ञानेश्वरस्तु। मृतस्य बांधवैः सार्धं कृत्वा तु परिदेवनं। वर्जयेत्त
दहोरात्रं दानश्राद्धादिकर्म चेति पारस्करोक्तेः सर्वत्रैकरात्रमाह॥ ॥अथाशौचा
न्नभक्षणे॥ विष्णुः॥ ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदा
शौचं यावत्तेषां। आशौचव्यपगमे प्रायश्चित्तं कुर्यादिति। अज्ञाने त्वंगिराः॥ अंतर्दशाहे भुक्त्वान्नं सूतके
मृतकेपि वा। अस्याशौचं भवेत्तावद्यावदन्नं व्रजत्यधः। प्रायश्चित्तं तु मत्या विप्रस्य वर्णक्रमेणैकाह
त्र्यहपंचाहसप्ताहोपवासः। दशविंशतिषष्टिः शतं च प्राणायामाः पंचगव्याशनं च। अभ्यासे द्विगु
णं। आपदि तु प्राणायामशतं पंचशतमष्टसहस्रं गायत्रीजपश्च॥ मत्यापदि तु सवर्णाशौचे त्रिरघम
र्षणं। गायत्र्यष्टसहस्रं च। क्षत्रियाशौचे उपवासश्च। वैश्याशौचे त्रिरात्रोपवासश्च। शूद्राशौचे कृच्छ्रं
क्षत्रवैश्ययोः पंचशतमष्टशतं गायत्रीजप उक्तमेषु। शूद्रस्य सर्वत्र स्नानं। मत्यानापदि विप्रस्य वर्णे
षु शांतपनकृच्छ्रमहाशांतपनचांद्रायणं। अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिका
नीत्यादि माधवीयादौ ज्ञेयं॥ ॥अथ दासस्य स्वदास्युत्पन्नस्य॥ ॥स्वस
पिंडमृतौ स्नानमात्रेण स्वामिकार्यं स्पृश्यत्वं भक्तदासस्य त्र्यहोर्ध्वं। सद्यः स्पर्शे गर्भदासो भक्तदास
स्त्र्यहाच्छुचिरिति स्मृत्यंतरोक्तेः। मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च॥ स्नाने शरीरसंस्का
रे गृहकर्मण्यदूषिताः इति। शातातपोक्तेश्च। एतच्चानन्यसाध्ये तत्कार्यमात्रे। अन्यत्र मासाद्याशौ
चमस्त्येव। एवं दास्यामपि सूतिकायास्तस्याश्च स्पर्शत्वमपि मासमात्रं। दासीदासश्च सर्वो वै यस्य
वर्णस्य यो भवेत्। तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकमित्यंगिरसोक्तेः। षडशीतावपि॥
स्वामिशौचेन दासाद्याः स्पृश्या मासानुक्रमेषु। योग्यास्तु मासतो दासीसूतौ चेत्स्पर्शनामियात्

दत्तदासादीनांस्वसपिंडमरणादौस्वाम्याशौचंसमसंख्यदिनोर्ध्वं समपिमामाद्याशौचेस्वामिका ॥
र्यंस्पृश्यतेतिहरदत्तः॥ दासांतेवासिभृतकाः शिष्याश्चैकत्रवासिनः। स्वामितुल्येनशौचेनशु ॥
ध्यंतिमृतसूतकेऽत्रिरहस्पतिस्मृतेः। दासश्चात्रगृहजातस्तथाक्रीतोलब्धोदायादुपागतः। अन्ना
कालभृतस्तद्वत्स्यादाहितः स्वामिनाचयः। मोक्षितोमहतश्चर्णाद्युद्धप्राप्तःपणेजितः। तवाहमित्यु
पगतः प्रव्रज्यावसितः कृतः। भक्तदासश्चविज्ञेयस्तथैववडवाहृतः। विक्रेताचात्मनः शास्त्रेदा
सःपंचदशस्मृताइति नारदोक्तयुगर्भदासभक्तदासौविनाज्ञेयः॥ वडवादासी॥ तयाहृतःत
मुद्वाह्यदासोजातइत्यर्थः। अंतेवास्यपितेनैवोक्तः। स्वशिल्पमिच्छन्नाहर्तुंबांधवानामनुज्ञया
आचार्यस्यवसेदंतेकृत्वाकालंसुनिश्चितं। आचार्यःशिक्षयेदेनंस्वगृहेदत्तभोजनमिति॥ शि
ष्यस्तत्तुल्योविद्यार्थी दासादेःस्वामितत्सपिंडमरणेतुविष्णुः। पत्नीनांदासानामानुलोम्येनस्वा
मितुल्यमाशौचंमृतेस्वामिन्यात्मीयमिति। प्रतिलोमदासानामाशौचाभावः। वर्णानामानुलो
म्येनदास्यंनप्रतिलोमतइतियाज्ञवल्क्योक्तेः॥ ॥अथरात्रौजननमरणेवारात्रिंत्रिभा
गंकृत्वाद्यभागद्वयेचेत्पूर्वदिनंअन्त्येत्तरमितिमिताक्षरायां। यत्तुभागद्वयेरात्रौतथाम्बादूर्ध्वयोर्द
यास्तूर्वदिनमित्युक्तं। तत्तद्देशाचारतोव्यवस्था। सर्वमाशौचमाहिताग्नेर्दाहतएवनमरण
मारभ्यज्ञेयं। अनग्निमतउत्क्रांतेराशौचादिद्विजातिषु। दाहादग्निमतोविद्याद्विदेशस्थेमृतेस
तीतिपैठीनसिस्मृतेः। साग्निराहिताग्निः। आहिताग्निश्चेत्प्रवसन्म्रियेतपुनःसंस्कारंकृत्वा
शववदाशौचमितिवासिष्ठविशेषोक्तेः। दाहादेवतुकर्तव्यंयस्यवैतानिकोविधिरितिबालाव
यनुधूर्तस्वामिनाप्यंगिरसाचोक्तं॥ आहिताग्नेरपिमरणादेवदशरात्रं। दशाहंशावमाशौच
मितिमरणनिमित्तत्वात्तस्य। यत्तुदाहादेवतस्याशौचमुक्तं तत्संस्कारनिमित्ताशौचपृथगे
व। तेनगृह्याग्नेःसंस्कारांगंत्रिरात्रं। श्रौताग्नेस्तुदशरात्रं। मरणनिमित्तंतूभयोर्दशाहंदाहात्प्रागपीति
तद्वचनविरोधात्पूर्वस्यैवोत्कर्षोन्मूलकल्पनालाघवाच्चिंत्यं॥ ॥अथातिक्रांताशौ
चं॥ ॥तत्राशौचमध्येजननादौज्ञातेतच्छेषेणशुद्धिः॥ विगतंतुविदेशस्थंशृणुया
द्योह्यनिर्दशं। यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेदितिमनूक्तेः। अत्रकेचिदेतत्पुत्रातिरिक्त
विषयं। तेषांत्वाशौचमध्येश्रवणेपितदाद्येवदशाहादि। पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्र
कः। श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदित्यस्यसर्वापवादत्वादित्याहुः। तन्न॥ ज्ञानमरण
स्यनिमित्तत्वात्॥ अनग्निमतउत्क्रांतेरित्यादिविरोधाच्च॥ स्मृत्यर्थसारेपि॥ जननेमरणेवाप्रथ
मदिनादूर्ध्वंज्ञातेपुत्रादीनांशेषेणैवशुद्धिरिति। षडशीतावपरार्केचैवं। दशाहादूर्ध्वंज्ञातेतुवृद्ध
वसिष्ठः॥ मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्य
ति। जननेत्वतिक्रांताशौचंनास्त्येव। नाशुद्धिःप्रसवाशौचेव्यतीतेषुदिनेष्वपीतिदेवलोक्तेः। पि
तुःस्नानंतत्रापिभवत्येव। निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच। सवासाजलमाप्लुत्यशुद्धोभव
तिमानवः। इतिमनूक्तेः॥ तत्रातिक्रांताशौचंदशाहादिजात्याशौचविषयं। नत्वनुपनीतादिनि
मित्तत्रिरात्रादि॥ उपनीतेतुविषमंतस्मिन्नेवातिकालजमितिव्याघ्रोक्तेः। निर्दशज्ञातिमरणे।

अतिक्रांतेदशाहेत्विति मनूक्तेश्च॥ माधवीयेदेवलस्तु॥ आत्रिपक्षात्त्रिरात्रंस्यात्षण्मासात्पक्षिणीत
तः॥ परमेकाहमावर्षादूर्ध्वंस्नातोविशुध्यतीत्याह। तत्रापदनापद्विषयत्वेनव्यवस्था। इदंचैकदेशे
देशांतरेतुस्नानमात्रं। देशांतरमृतेश्रुत्वाक्लीबेवैखानसेयतौ मृतेस्नानेनशुध्यंतिगर्भस्रावेचगो
त्रिणइति॥ पराशरोक्तेरितिविज्ञानेश्वरः स्नानंवत्सरांते। अर्वाक्त्रिपक्षात्त्रिनिशंषण्मासाच्च
दिवानिशं। अहःसंवत्सरादर्वाक्देशांतरमृतेष्वपीतिस्मृतेरितिमाधवः॥ इदंसपिंडानां। देशांत
रेस्नानंसोदकानामिति। युक्तंतल्लक्षणंत्वाहबृहस्पतिः॥ महानद्यंतरंयत्रगिरिर्वाव्यवधायकः
वाचोयत्रविभिद्यंतेतद्देशांतरमुच्यते। देशांतरंवदंत्येकेषष्टीयोजनमायतं। चत्वारिंशद्वदंत्यन्येत्रिं
शदन्येतथैवचेति॥ एतत्सर्वंमातापितृमित्रविषयं। तयोस्तुपितरौचेदिति पूर्वपैठीनसिवाक्यात्स
दापूर्वमेवदशाहादि। स्मृत्यर्थसारे॥ मातापितृमरणेदूरदेशेपिसंवत्सरोर्ध्वमपिपुत्रोदशाहादिकं
पूर्णमाशौचंकुर्यात्॥ स्त्रीपुंसयोःपरस्परसवर्णेत्वसवर्णासपत्नीषुचैवमिति। शुद्धितत्त्वादयोगौ
डास्तु॥ ऊर्ध्वंसंवत्सरादाद्याद्बंधुश्चेच्छ्रूयतेमृतः। सवेदेकाहमेवात्रनत्वसन्यासिनांत्विति देवलो
क्तेः पित्रोरप्यब्दमध्येत्रिरात्रमूर्ध्वमेकाहः। बंधुर्मातापिताभर्ताच। पूर्वोक्तदशाहस्तुकलिंगादिदेशप
रइत्याहुः। तन्नबंधुपदस्यपित्रादिपरत्वेमानाभावात्। उपेक्ष्यम्। शौ दं सपत्नमातृस्तु दक्षः। पितृपत्न्या
मपेतायांमातृवर्जंद्विजोत्तम संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेत्॥ हीनवर्णापात्तु हीनवर्णे
सपत्नीषुचैवमिति स्मृत्यर्थसारे। केचित्तुपत्न्यांप्रमीतायामौरसेतनयेतथेति। ब्राह्मोक्तेरौ
रसेपीदमाहुः॥ षडशीतावप्येवं। एतत्सर्ववर्णतुल्यं। तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेति
ब्राह्मोक्तेः॥

॥अथाशौचसंपातउच्यते॥

॥तत्रशावेशावंसू
तकेसूतकं। शावेसूतकं। सूतकेशावंवा॥ तत्राप्युत्तरकालतःपूर्वेणसमन्यूनमधिकंचेतिद्वाद
शभेदाः। यदेकदिनेसमन्यूनमधिकंवाशौचद्वयंतत्रतंत्रेणान्यसिद्धिः॥ द्वयोरेककालत्वात्। य
दातुद्वितीयादिदिनेषूत्तरंसजातीयंशावंजननंवासमकालं। न्यूनकालंवापरस्यात्तदाषट्सुप
क्षेषुपूर्वशेषेणशुद्धिः॥ अंतराजन्ममरणेशेषाहोभिर्विशुध्यतीति॥ याज्ञवल्क्योक्तेः अंतरा
ज्ञातेइत्यर्थः। ज्ञातस्यैवजननादेर्निमित्तत्वात्॥ पूर्वाशौचोत्तरंतन्मध्योत्पन्नेज्ञानेतूत्तरमेवका
र्यं। शुद्धितत्त्वेप्युक्तं। पूर्वाशौचांतरुत्पन्नं समानंलघुवानिमित्तंतत्कालादुपरिश्रुतंस्वाशौचहे
तुरेव। अज्ञातंतुन। अविज्ञानेनदोषस्यात्श्राद्धादिषुकथंचनेत्यस्याशौचसांकर्येपिप्रवृत्तेः॥ ते
नाज्ञानात्। वृषोत्सर्गादौकृतेपश्चात्तज्ज्ञानेपिनावृत्तिरिति। माधवीयेयमोपि॥ जननेजननंचे
त्स्यान्मरणेमरणंतथा। पूर्वशेषेणशुद्धिःस्यादुत्तराशौचवर्जनं। अत्रकेचिदंतर्दशाहेस्यातां
चेत्पुनर्मरणजन्मनी॥ तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशमिति मनुपराशराद्युक्तेर्दशा
हग्रहणात्पूर्णाशौचएवपूर्वशेषेणशुद्धिः। अल्पाशौचसंपातेतूत्तरेणैवशुद्धिरित्याहुः। ह
रदत्तोप्येवमाह। गौडाअप्येवं। तन्न॥ याज्ञवल्क्यादिवशेनदशाहस्यतुल्यकालाशौचोपलक्ष
णत्वात्। समानाशौचसंपातेप्रथमेनसमापयेत्। असमानंद्वितीयेनधर्मराजवचोयथेतिमाध
वीयेशंखोक्तेः। अपरार्केमिताक्षरादिविरोधाच्च। यदातुसूतकेशावंसमंन्यूनमधिकंवातदात

पूर्वशेषाच्छुद्धिः ॥ तदाह गौतमः ॥ सूतके मृतके चेत्स्यान्मृतके त्वथ सूतकं । तत्राधिकृत्य मृतकं शौचं कुर्या-
न्न सूतकं ॥ षट्त्रिंशन्मते ॥ शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुध्यते सूतिर्न सूतिः शावशो-
धिनी ॥ चतुर्विंशतिमतेपि ॥ मृतेन शुध्यते जातं न मृतं जातकेन तु ॥ अतो यदा दशाह जननमध्ये त
दंते वा त्र्यहादि शावं तदा पूर्वेण शुद्धावपि तन्निमित्तमस्पृश्यत्वं भवत्येव । मरणोत्पत्तियोगे तु मरिष्यो
मरणं भवेदिति कौर्मोक्तेश्च । गौतमव्याख्यायां हरदत्तोपि । सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं
आर्तवाद्द्विगुणा सूती ततोपि शवदाहकः । अत्र पूर्वं पूर्वेणोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्या
दित्यर्थः । षडशीतावपि । स्वभाववहुतरत्वेनाल्पस्य शावं विशोधिनीति । रात्रिशेषादेवर्द्धिंतह्निविरि
नैरागंतुकैः । सूतेर्बहुत्वं न स्वभावेनातलं तन्न्यूनशवस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनात
लत्वन्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेत्युक्तं । वाच्य । नागंतुकैरघाहोभिराशौचमप
नुपद्यते । न च पातनिमित्तेन शावत्वस्य शौचक्रमिति । एवं न वयस्याः । परानुमहायस्याशौचमध्ये
सजातीयं विजातीयं वा दीर्घकालमुत्तरं तत्स्यापुत्तरं पूर्णकार्येन पूर्वेण शुद्धिः । स्वल्पाशौचस्य म
ध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति । उशनसोक्तेः । तेन त्र्यहादि
शावमध्ये दशाहादिसूतके पि न पूर्वेण शुद्धिरित्यपरार्कः । शावनिमित्तमस्पृश्यत्वमभवत्येवाशुद्धि
विवेकेन तु शावेन शुध्यते सूतिरिति मारार्केलत्राणुत्तराशौचनिवृत्तिरुक्ता । तन्न ॥ उत्तरस्यैकालाधि
क्येनवलवत्त्वात् । माधवीयेप्येवमेवापि ॥ अघवृद्धिमदाशौचं पश्चिमेन समापयेत् । यथा त्रिरात्रे प्रक्रांते
दशाहं प्रविशेद्यदि । आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यतीति । हारीतोपि । गुरुणा लघुमध्ये
तु लघुना नैव तद्भवेदिति । गुरुत्वं च लघुत्वं च कालकृतमेव । पूर्वोत्तरोभात । एतच्च हरदत्तेनाप्युक्तमपि
नास्य यथा मर्येवं ॥ यत्तु अघानां योगपद्ये तु ज्ञेया शुद्धिर्गरीयसी । मरणोत्पत्तियोगे तु गरीयो मरणं भवे
दिति हारीतकौर्मोक्तेः त्रास्त्ववत्वाभिप्रायं शावस्य गुरुत्वे तेषां कचिदल्पकालेनापि दीर्घकाला
शौचनिवृत्तिमाह देवलः ॥ परतः परतोऽशुद्धिरघवृद्धौ विधीयते । स्याच्चेत्पंचतमादह्नः पूर्वेणैवात्र
शिष्यते ॥ अस्यार्थः ॥ अघवृद्धौ दीर्घाशौचे परतोशौचं शुद्धिः परतोशौचं परिपूर्णाशौचपुत्तरस्य पंच
दिनात्परतो नुवर्त्तते । तदा पूर्वेणैव शुद्धिः । पूर्वस्मादाशौचादधिककालव्यापिने पूर्वशेषाच्छुद्धिरि
त्यर्थः । यथा षष्ठमासे गर्भपातनिमित्त षडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः यथा वात्र्य
हमध्ये स्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चित् ॥ तन्न ॥ दशाहावधिपूर्वशेषशुद्ध्यादेकवा
क्यविरोधात् । षष्ठादिदिने पूर्णाशौचमं तरगतौ तु त्र्यहस्तन्नौचित्याच्च ॥ अस्मद्गुरवस्तु पंचतमा
दन्हः आनतो न्यूनं । त्र्यहादि त्रैत्यादस्मिन्विषये पूर्वेणैवाशुद्धिः शिष्यते । दशाहादिरात्रिशेषे
त्र्यहादन्याशौचानां परस्परं रात्रिशेषसंपाते च नद्व्यहादिरुद्धिरित्यर्थमाहुः । कचित्पूर्वशेषेणशु
द्धेरपवादमाह गौतमः रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति । प्रभाते त्वयामे । रात्रिशेषे त्वहा
च्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति शातातपोक्तेः । इदं शावांते सूतकपाते सजातीयेवातुल्यं । अ
त्रकेचित् । रात्रिशब्दः अहोरात्रिपरः । अहःशेषे द्वाभ्यां प्रभाते तिसृभिरिति शंखलिखितोक्तेः ॥
॥ अथ परदेशगतासन्निपाते श्रवणे दशरात्रमाशौच ॥ ॥मानवमादिवसात्र

दऊर्ध्वं द्विरात्रेणाशुद्धानां त्रिरात्रेणेति बौधायनोक्तेः पुनःपाते दशाहः प्राक्पूर्वेण सह गच्छति दशमे
ह्नि पतेद्यस्याहर्द्वयात्स विशुध्यति। प्रभाते तु त्रिरात्रेण दशरात्रिष्वयं विधिरिति देवलोक्तेश्च। नवमद
शमशब्दौ चोपान्त्यान्त्यदिनपरौ। तेन क्षत्रियादावपि तथेत्याहुः। माधवीयेप्येवं। अन्ये त्वाहुः अंत
र्दशाहे स्यातां चेत्पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति। मनुपराश
राभ्यां दशमदिने नोत्तरस्य शुद्धेरुक्तत्वाद्विरोधः स्यादेवं विरोधे च यद्वै किंचन मनुरवदत्तद्भेषजं। क
लौ पाराशरः स्मृतिरित्यनेन च पूर्ववचसां बाधः। अत एव वाचस्पतिनानेषामनाकरत्वमुक्तम्। सा
करत्वेपि जातिमात्रविप्रादिविषयं देशांतरविषयं युगांतरविषयं वास्तु। तेन गौतमीये रात्रिशब्दे
नाहोरात्रपरः। रात्रिमात्रावशिष्टे इति मिताक्षरोक्तेश्च। ननु कविकृतेरिवान्यथाव्याख्या युक्ता।
माधववत्तु॥ अनिर्गतदशाहमिति पूर्वस्य ग्रंथविरोधादुपेक्ष्य इति अस्मत्पितृचरणास्तु बौधाय
नीये आ नवमाद्दिवसादिति द्वितीयाशौचस्य नवमं दिनं प्रथमस्य दशममेवाहुः। त्र्यहादिवृद्धेः पू
र्वशेषापवादत्वात्तस्य च न्यायतो द्वितीयदिनादेव प्रवृत्तेः। अत ऊर्ध्वमिति दशमरात्रिपरं। शंखलि
खितावुक्तौ देवलोक्तौ चाहःशेषदशमेह्नि वा नीते रात्रौ पतेदित्यर्थः। दशम्यां पिता नाम कुर्यादिति
वत्। तेन न मन्वाद्यैर्विरोधो नापि मिताक्षराद्यैरित्याहुः। अपरार्के निर्णयामृते स्वरसोप्येवं। यत्तु तंत्रे
वप्राह॥ आद्यंतभागद्वयं यावत्सूतकस्य तु सूतके। द्वितीये पतिते त्वाद्यात्सूतकाच्छुद्धिरिष्यते।
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः। एतदेव विचार्यं स्यान्मृतके मृतकांतरे। मृतकस्यांत
रे पतत्सूतकं प्रति पद्यते॥ सूतकस्यांतरे वाथ मृतकं यत्र विद्यते। मृतकांते भवेत्तत्र शुद्धिर्वर्णेषु सर्व
श इति। अस्यार्थस्तत्रैवोक्तः॥ पूर्वाशौचपरमहोरात्रस्य दिनरूपे आद्यभागद्वये न्याशौचपाते पू
र्वेण शुद्धिः। भागद्वयोर्ध्वं रात्रौ सूतकांतरे द्वितीयात्। पूर्वं भिन्नात्सूतकांतात् त्र्यहादिरूर्ध्वा शुद्धि
रिति। अपरार्के त्वाशौचकालं त्रिधा विभज्य निर्गुणविषयत्वेनेदमुक्तं। अस्य वचनस्य निर्मूल
त्वोक्तिरज्ञोक्तिरेव। अतः पूर्वाशौचे त्वपरात्रावन्याशौचेऽहोरात्रद्वयमधिकं। रात्रेरंत्ययामे तु दिन
त्रयमिति मदनरत्नोपदिष्टः पंथाः॥ एतत्संपूर्णाशौचसंपाते एव। रात्रिशेषे त्रिरात्रादिसंपाते तु पूर्व
शेषेणैव शुद्धिः। द्विरात्रादिवृद्धेः पूर्ववाक्ये दशाहविषयत्वादपवादाभावे शेषशुद्धेरेव सामान्य
तः प्रवृत्तेः॥ षडशीतौ तु दशाहांतेऽहपातेपि द्वित्रिदिनवृद्धिरुक्ता॥ रात्रिशेषे यदाशौचं पूर्वान
धिकमापतेत्। ऊर्ध्वं दिनद्वयं पूर्वे याममशेषे दिनत्रयमिति। अनधिकं समं न्यूनं वा। तन्नुच्छं॥ त
स्य निर्मूलत्वात् तेपक्षिण्यादिपातेपि द्विरात्रादिवृद्ध्यापत्तेश्च। पूर्वाशौचांतवर्द्धितद्वित्रिदिनमध्ये
धिकाशौचांतरपाते तु वर्धितस्याल्पत्वादधिकेनैव शुद्धिः। न च वर्धितस्य पूर्वशेषत्वं शंकनीयं॥
रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकवृत्तिन्यायोज्जीवनात्। अपवादाभावे उत्सर्गस्य प्राप्तेः। अ
पवादमाह शंखः॥ मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। पितुः शेषेण शुद्धिः स्यान्मातुः कुर्या
त्तु पक्षिणीं। पादत्रयं स्पष्टम्॥ तुर्यस्य त्वयमर्थः। पित्राशौचमध्ये मातृमृतौ पित्राशौचांते मातुः पक्षि
णीमधिकां कुर्यादिति॥ तत्राशुद्धावित्युक्ते रात्र्यहादेः पितुराशौचाभावान्मातृमरणे न पक्षिणी
किंतु पूर्णमेवाशौचं। इयं च पक्षिणी ततीयादिपरान्नाद्यदिनद्वये प्रति निमित्तं। नैमित्तिकावृत्तिन्या

पूर्वशेषाच्छुद्धिः॥ तदाहांगिराः॥ सूतके सूतकं चेत्स्यात्मृतके त्वथ सूतकं तत्राधिकृत्य मृतकं शौचं कुर्या
न्न सूतकं॥ षट्त्रिंशन्मते॥ शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्। शावेन शुध्यते सूती न सूती शावशो
धिनी॥ चतुर्विंशतिमतेऽपि॥ मृतेन शुध्यते जातं न मृतं जातकेन तु। अतो यदा दशाह जननमध्ये त
दंते वा त्र्यहादिशावं तदा पूर्वेण शुद्धावपि तन्निमित्तमस्पृश्यत्वं भवत्येव। मरणोत्पत्तियोगे तु गरीयो
मरणं भवेदिति कौर्मोक्तेश्च। गौतमव्याख्यायां हरदत्तोऽपि। सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं
आर्तवाद्द्विगुणा सूती सूतितोऽपि शवदाहकः। अत्र पूर्वपूर्वेणोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्या
दित्यर्थः। षडशीतावपि। स्वभाववहुसूतिस्तु न्यूनशावविशोधिनी। रात्रिशेषादेवर्द्धितद्वित्रिदि
नैरागंतुकैः। सूतेर्वहुत्वेन स्वभावेनातत्त्वन्न्यूनशवस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनात
तत्त्वन्न्यूनशवस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेत्युक्तं। वाक्ये। नागंतुकैरधाहोभिरशौचमप
नुपद्यते। तच्च पातनिमित्तं न शावं त्वन्यस्य शौचमिति। एवं तत्पक्षाः। यदा तु त्र्यहाद्यल्पाशौचमध्ये
सजातीयं विजातीयं वा दीर्घकालमुत्तरं तदाप्युत्तरं पूर्णं कार्यं न पूर्वेण शुद्धिः। स्वल्पाशौचस्य म
ध्ये तु दीर्घाशौचं भवेद्यदि। न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति। उशनसोक्तेः। तेन त्र्यहादि
शावमध्ये दशाहादिसूतकेऽपि न पूर्वेण शुद्धिरित्यपरार्कः। शावनिमित्तमस्पृश्यत्वमेव भवत्येवाशुद्धि
विवेके तु शावेन शुध्यते सूतिरिति माधवोक्तेस्तत्राप्युत्तराशौचनिवृत्तिरुक्ता। तन्न॥ उत्तरस्य कालाधि
क्येन बलवत्त्वात्। माधवीयेप्येवमपि॥ अर्धशुद्धिमदाशौचं यश्चिमेन समापयेत्। यथा त्रिरात्रे प्रक्रांते
दशाहं प्रविशेद्यदि। आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यतीति। हारीतोऽपि। गुरुणा लघुमध्ये
तु लघुना नैव तद्भवेदिति। गुरुत्वं च लघुत्वं च कालकृतमेव। पूर्वानुरोधात्। एतच्च हरदत्तेन स्पष्टमुक्तं। मि
ताक्षरायामप्येवं॥ यत्तु अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी। मरणोत्पत्तियोगे तु गरीयो मरणं भवे
दिति हारीतकौर्मोक्तं तत्रास्पृश्यत्वाभिप्रायं शावस्य गुरुत्वं ज्ञेयं। क्वचिदल्पकालेनापि दीर्घकाला
शौचनिवृत्तिमाह देवलः॥ परतः परतोऽशुद्धिरघवृद्धौ विधीयते। स्याच्चेत्पंचतमादह्नः पूर्वेणैवात्र
शिष्यते॥ अस्यार्थः॥ अघवृद्धौ दीर्घाशौचे परतोऽशौचशुद्धिः परतोऽशौचं यदि पूर्वाशौचमुत्तरस्य पंच
दिनात्परतोऽनुवर्तते। तदा पूर्वेणैव शुद्धिः। पूर्वस्योत्तराशौचावधिककालव्यापित्वे पूर्वशेषाच्छुद्धि
रित्यर्थः। यथा पक्षगर्भस्रावपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः यथा वा त्र्य
हमध्ये स्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चित्॥ तन्न॥ दशाहावधिपूर्वशेषशुध्यादेकवा
क्यविरोधात्। षष्ठादिदिने तु पूर्णाशौचं मध्यरात्रौ तु त्र्यहस्पृष्टो विष्णाच्च॥ अस्मद्गुरवस्तु पंचतमा
दह्न आततोऽस्तं। अहादिवेत्त्यादस्मिन्विषये पूर्वेणैवाशुद्धिः शिष्यते। दशाहादिरात्रिशेषे
त्र्यहादल्पाशौचानां परस्परं रात्रिशेषसंपाते च न त्र्यहादिरवृद्धिरित्यर्थमाहुः। क्वचित्पूर्वशेषेणाशु
द्धेरपवादमाह गौतमः। रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति। प्रभाते त्वपाये। रात्रिशेषे त्र्यहा
च्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति शातातपोक्तेः। इदं शावे जातसूतकपाते सजातीये वा तुल्ये। अ
त्र केचित्। रात्रिशब्दः अहोरात्रिपरः। अहः शेषे द्वाभ्यां प्रभाते तिसृभिरिति शंखलिखितोक्तेः॥

॥ अथ पादिदशरात्रासन्निपाते पूर्णदशरात्रमाशौचं॥ ॥मानवमाद्दिवसान्

यनुव्रतीमेतंनव्रतेनविमुच्यतेइतिमनूक्तेः निर्हरणमंत्यकर्मपरं एवंमातामहस्य। यथाव्रतस्थोपिसुतःपितुः
कुर्यात्क्रियांनृप तथामातामहस्यापिदौहित्रः कर्तुमर्हतीतिअपरार्केभविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदेहिकं। कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादितिकालादर्शोक्तेः। तत्रांत्यकर्मनिमित्तमस्पृ
श्यत्वंदशाहमस्त्येव। सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धंशुद्धेतुदशमेहनी
तिदिवोदासोक्तवचनात्। अतएवब्रह्मचारिणः शवकर्मणोव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेति
गौतमीयेऽन्यत्रनिवृत्तेरेवपर्युदासोनाशौचस्य। संध्यादिकर्मलोपस्तुनास्ति नत्यजेत्सूतकेकर्मब्रह्मचा
रीस्वयंक्वचित् इतिच्छंदोगपरिशिष्टात्। पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्यपियःसुतः। सव्रतस्थोपिकुर्वीत
अग्निकुंडोदकक्रियां। तेनाशौचमकर्तव्यंसंध्याचैवनलुप्यते। अग्निकार्यंचकर्तव्यंसायंप्रातश्च
नित्यशइतिचंद्रिकायां॥ संवर्तश्च॥ अत्रकर्मानधिकाररूपाशौचनिषेधएव। अपरार्केमाधवादय
स्तु एकाहमाशौचमाहुः। आचार्यंवाप्युपाध्यायंगुरुंवापितरंचवा। मातरंवास्वयंदग्ध्वाव्रतस्थस्त
त्रभोजनं। कृत्वापततितोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नचतैःसहसंवसेत्। ए
काहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः। तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौ
चंच॥ दिवोदासादयस्तु ब्राह्मोक्तेः॥ प्रथमेह्निसंध्यादिलोपः। ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यतीति। प्रजापतिवचनात् द्वितीयाहादौपिंडदान
कालेएवास्पृश्यत्वमात्रंनान्यदित्याहुः। दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तं।
अंत्यकर्माकरणेतुब्रह्मचारिणः। पित्रादिमरणेप्याशौचाभावएव। सोपिब्रह्मचर्यकालएव। समा
वर्तनोत्तरंतुपूर्वमृतानामाशौचंभवत्येव। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्। समाप्तेतूदकं
दत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः। तत्रापिविकल्पः। पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्
आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिच्छंदोगपरिशिष्टात्॥ यथाकृतजीवच्छ्राद्धेन
किमप्याशौचंनकार्यमितिहेमाद्रिः शुद्धितत्वेकौर्मे॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेचाप्युपद्रवे डिं
बाहवहतानांचविद्युतापार्थिवैर्द्विजैः। उपद्रवेग्रमरके॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतेइ
ति। पराशरोक्तेः। उपसर्गोग्रमरकइतिशूलपाणिनिरुद्धभट्टादयः॥ मरीचियाज्ञवल्क्यावपि। आ
पद्यपिचकष्टायांसद्यःशौचंविधीयतेइति। मरणसमयेपिनाशौचं। तथाचशुद्धिरत्नाकरेदक्षः
स्वस्थकालेत्विदंसर्वंसूतकंपरिकीर्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकं। अतःसतिवैरा
ग्येसंन्यासोप्यातुरस्यभवतीतिकेचित्॥

॥अथकर्मतः॥

॥त्रिंशत्श्लो
क्यां। तत्तत्कार्येषुसत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशि
ल्पानुगानां। संप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा। चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेष्वेतदर्थे। नाशौचमितिशेषः। सत्री अन्नसत्रवान्। मुख्यसत्रस्यदीक्षितपदात्सिद्धेः॥ व्रती
अनंतव्रतादिनियमवान्। नव्रतीनांव्रतेइतिविष्णूक्तेः॥ प्रचेताः कारवःशिल्पिनोवैद्यादासीदासा
स्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःसूपकाराद्याःशिल्पिनःश्चैलनिर्णेज
काद्याः आतुरस्यव्याधिनाशार्थे दानादौतुलादानादेः। प्रारंभोनांदीश्राद्धं संकल्पोवा। यजनंतडागो

यापवादत्वादिति तच्चरणाः॥ सपिंडाद्यशौचेन मातापित्रोराशौचापकर्षो नास्त्येव॥ एवं भर्तुरपि॥ इयं च पक्षिणी दशमदिनात्पूर्वं मातृमरणे ज्ञेया। दशम्यां तु गौतमभानेवामातृमरणेऽहः सहसु च्चिता पक्षिणी निष्कर्षितः॥ तत्र संख्यांतरोपजननापत्त्या अह्नादिश्रुतिबाधापत्तेः। यत्तु रूपका देयापरदेयादित्यादौ श्रुतसंख्याबाधापत्तेः। समुच्चयो निरस्तो द्वादशे। गृहस्थिलघोस्तु मतेनेः। गुरु लघुशुद्ध्यादित्युक्तेश्च। मातुस्त्वारोहणेऽनुपक्षिणी। यदा नारी विशेदग्निं त्रिपक्षाभ्यां तदा त दाशौचं विधातव्यं भर्त्रशौचक्रमेण हीति पृथ्वीचंद्रोदये लघुहारीतोक्तेः। तत्रैव षडशीतिमतेपि॥ मृतं पतिमनुव्रज्य पत्नी चेदनलं गता। ततः पक्षिणी कार्या पैतृकादेव तु ध्रुवम्। पुत्रोन्यो वान्विर स्तस्यास्तावदेवाशुचित्वयोः नवश्राद्धं च पिंडं च पृथगप्यनुसमापयेत्। गृहीताशौचानां तु आरणादिभिः संस्कारे मातुः सपिंडस्य वा मरणे नायं निर्णयः। अतिक्रांतकालादिषु मातृनिमित्तस्य च वक्तव्यत्वात्। द्वादशवर्षोत्तरसंस्कारे शौचमध्ये सपिंडमरणेप्येवं। पत्न्यपरार्के नाहे॥ नाम्नेर्वा दानसाध्वी स्त्री न भवेदात्मघातिनी। महाशौचे निवृत्ते च श्राद्धं मासि त्रिशास्त्रवदिति। तत्र भर्तुराशौचान्तरमन्वा रोहणे त्रिरात्रं शेषे च परमिति पृथ्वीचंद्रः। ब्राह्मणादेः क्षत्रियाद्यनुगमने त्वाशौचपरमित्यपरार्कः। गु डितत्वाखो गौडास्तु। भर्त्राशौचान्तरमन्वारोहणे त्रिरात्रं। सहगमने तु संपूर्णं। युद्धहतस्य सद्यः शौ चेन्वारोहणेप्याह लोके त्रिरात्रत्वाद्भर्तुरपि अहे त्रिपिंडदानं। एकचितेनुसद्यः शौचमित्याहुः। अन्य त्राप्युक्तं। पूर्वशेषेणाशुद्धेरेव वा दानमुक्तं षडशीत्यां। पूर्वाशौचेन पार्श्वद्धिः सूतके मृतकेपि च। सू तिकामग्निदेहित्वा मृतस्य च सुतानपि। निर्णयामृते स्मृतिसंग्रहेपि। इत्थं विशुद्धिरुदिता सूतिकाम ग्निदं विना। इदं मूलेन दाहकरणे। मातुलादिसंबंधे दाहमात्रकरणे तु त्रिरात्रमेवेत्युक्तं प्राक्। वृद्धा त्रिः सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं आर्तवाद्द्विगुणा सूतिका तेभ्योपि शवदाहकः। तथाशौ च। संपाते पित्रशावजननं निमित्तकार्यमविनिबंधः। अशौचे तु समुत्पन्ने पुनरन्यद्यदा भवेत् कर्तुस्ता त्कालिकी शुद्धिः पूर्वाशौचेन शुध्यतीति प्रजापतिः स्मृतेः॥ आशौचे द्विविधेपि॥ शातातपः॥ अंत र्दशाहे जननात्पश्चात्स्यान्मरणं यदि। प्रेतमुद्दिश्य कर्तव्यं पिंडदानं यथाविधि। प्रारब्धे प्रेतपिंडे तु मध्ये चेज्जननं भवेत्। तथैवाशौचपिंडास्तु शेषान्दद्याद्यथाविधि॥ मातुः पक्षिणीमध्ये पितुरेकाद शाहश्चेत्कुर्यात्। आद्यं श्राद्धमशुद्धोपि कुर्यादेकादशेहनीति स्मृतेः। केचित्तु रजस्वलादिपरं। वि प्रादेस्त्वाशौचान्तरे एकादशाहश्राद्धेन्याहुः। अत एव विज्ञानेश्वरेण दशमपिंडमुक्त्वा नवाशौ चेशुचिर्भवेदिति शुचित्वं महैकोद्दिष्टांगविप्रनिमंत्रणपरमिति वदता तत्र शुद्धेरंगत्वं दर्शितं। एवं वृषोत्सर्गशय्यादावपि। दैवयाज्ञिकेन त्वाशौचांतरेपि भवत्येवेत्युक्तं॥

॥अथाशौचापवादः॥

॥सपंचधा॥ कर्तृतः कर्मतः द्रव्यतः मृततो यतः विधानाच्च॥ आद्यो ब्रह्मचारिपत्न्यादिषु नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणां नाशौचं कीर्तितं सद्भिः पतिते च मृते तथा इति कौर्मोक्तेः। तूर्यपादे शावे वा पितृत्वे चेति द्वलपाठः। आशौच मंत्यकर्मोपलक्षणं। ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः। यदि कुर्याच्चरेत्कृच्छ्रं पुनः सं स्कारमेव चेति देवलोक्तेः॥ एतत्पित्राद्यतिरिक्तविषयं। आचार्यं त्वथोपाध्यायं मातरं पितरं गुरुं। निर्हृ

त्तनुव्रतीप्रेतंनव्रतेनवियुज्यतइतिमनूक्तेः निर्हरणमंत्यकर्मपरं। एवंमातामहस्य। यथाव्रतस्थोपिसुतः पितुः
कुर्यात्क्रियांनृप तथामातामहस्यापिदौहित्रः कर्तुमर्हतीतिअपरार्के भविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदेहिकं। कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादितिकालादर्शोक्तेः। तत्रांत्यकर्मनिमित्तमस्पृ
श्यत्वंदशाहमस्त्येव। सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धंशुद्धेतुदशमेहनी
तिदिवोदासोक्तवचनात्। अतएवब्रह्मचारिणः शवकर्मणाव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेति
गौतमीयेऽन्यत्रनिरुक्तैरेवपर्युदासोनाशौचस्य। संध्यादिकर्मलोपस्तुनास्ति नत्यजेत्सूतकेकर्मब्रह्मचा
रीस्वयंक्वचित्इतिछंदोगपरिशिष्टात्। पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्यपियःसुतः। सव्रतस्थोपिकुर्वीत
अग्निकुंडोदकक्रियां। तेनाशौचमकर्तव्यंसंध्याचैवनलुप्यते। अग्निकार्यंचकर्तव्यंसायंप्रातश्च
नित्यशइतिचंद्रिकायां॥ संवर्तोपि॥ अत्रकर्मानधिकाररूपाशौचनिषेधएव। अपरार्केमाधवीयेप
तु। एकाहमाशौचमाहुः। आचार्यंवाप्युपाध्यायंगुरुंवापितरंचवा। मातरंवास्वयंदग्ध्वाव्रतस्थस्त
त्रभोजनं। कृत्वापततितोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नचतैस्सहसंवसेत्। ए
काहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः। तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौ
चंच॥ दिवोदासादयस्तु। ब्राह्मोक्तेः॥ प्रथमेह्निसंध्यादिलोपः। ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यतीति। प्रजापतिवचनात्द्वितीयाहादौपिंडदान
कालेएवास्पृश्यत्वमात्रंनान्यदित्याहुः। दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तं।
अंत्यकर्माकरणेतुब्रह्मचारिणः। पित्रादिमरणेप्याशौचाभावएव। सोपिब्रह्मचर्यकालएव। समा
वर्तनोत्तरंतुपूर्वमृतानामप्याशौचंभवत्येव। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्। समाप्तेतूदकं
दत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः। तत्रापिविकल्पः। पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्
आशौचंकर्मणांतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात्॥ यथाकृतजीवच्छ्राद्धेन
किमप्याशौचंनकार्यमितिहेमाद्रिःशुद्धितत्वेकौर्मे॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेचाप्युपद्रवे डिं
बाहवहतानांचविद्युतापार्थिवैर्द्विजैः। उपद्रवेत्यमरके॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतेइ
ति। पराशरोक्तेः। उपसर्गोत्यमरकइतिशूलपाणिनिरुद्धभट्टादयः॥ मरीचियाज्ञवल्क्यावपि। आ
पद्यपिचकष्टायांसद्यःशौचंविधीयतइति। मरणसमयेपिनाशौचं। तथाचशुद्धिरत्नाकरेदक्षः
स्वस्थकालेत्विदंसर्वंसूतकंपरिकीर्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकं। अतःसतिवैरा
ग्येसन्यासोप्यातुरस्यभवतीतिकेचित्॥

॥अथकर्मतः॥

॥त्रिंशत्श्लोक्यां। तत्कार्येषुसत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशि
ल्पातुराणां। संप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा। चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेष्वेतदर्थे। नाशौचमितिशेषः। सत्रीअन्नसत्रवान्। मुख्यसत्रस्यदीक्षितपदात्सिद्धेः॥ व्रती
अनंतव्रतादिनियमवान्। नव्रतीनांव्रतेइतिविष्णूक्तेः॥ प्रचेताः कारवःशिल्पिनोवैद्यादासीदासा
स्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःसूपकाराद्याः। शिल्पिनश्चैलनिर्णेज
काद्याः। आतुरस्यव्याधिनाशार्थेदानादौतुलादानादेः। प्रारंभोनांदीश्राद्धंसंकल्पोवा। यजनेतुतडागो

र्गकोटिहोमादिष्वपि विष्णुः॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सू-
तकं। प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति। पाकस्य
परिसम्पन्नत्वात्। क्रियापाकप्रोक्षणमिति शुद्धिप्रदीपः तन्मंदरूढयोगाद्दुर्बलत्वात्। तीर्थेति। आ-
शौचे श्राकस्मिकतीर्थप्राप्तौ। विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि। न तत्र सूतकं तद्वत्कर्म य-
ज्ञादिकारयेदिति पैठीनसिस्मृतेः। अत्र विशेषः प्रागुक्तः जपः पुरश्चरणादिस्तोत्रपाठः। अवि-
च्छेदेन संकल्पितहरिवंशश्रवणादिश्च॥ अत एवोक्तं ब्राह्मे॥ गृहीतनियमस्यापि न स्यादन्य-
स्य कस्यचिदिति। एवं देवपूजादि। मदनपारिजातेप्येवं। शिवविष्ण्वर्चने दीक्षायस्य चाग्निप-
रिग्रहः। श्रौतकर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात्। गौडाः शुद्धितत्त्वे मंत्रमुक्तावल्यां जपो दे-
वार्चनविधिः कार्यो दीक्षान्वितैर्नरैः। नास्ति पापं यतस्तेषां सूतकं वा यतात्मनां। राघवभट्टीये ना-
रदः॥ अथ सूतकिनः पूजां वक्ष्याम्यागमचोदितां। स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया तु
वै। बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्। यदि कामी न चेत्कामी नित्यमेवं सदाचरेत्। यत्तु
नृसिंहकल्पे॥ सदा मंत्रजपं मुक्त्वा यदि स्यादशुचिर्नरः मनसा विहितं तत्र स्मरेन्मंत्रं न तूच्चरेत्
जन्मन्यथाशौचपरं। रामार्चनचंद्रिकायां। अशुचिर्वाऽशुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि। मंत्रैक-
स्मरणं विद्वान्मनसैव सदाभ्यसेत्। कालनियमाभावेन। स्तोत्रहरिवंशादिष्वेवमेव। उत्सवोर-
थयात्रादिः एषु नाशौचं। अयमाशौचाभावोऽनन्यगतित्वात्रार्त्विक्क्षेपः॥ अत्र मूलमाकरेऽन्वे-
ष्यं। अत्र दीक्षितस्यावभृथान्तं कर्ममेवाशौचाभावः। तदादित्वाशौचमस्त्येव। तेन वैतानोपास-
नाकार्या इति वैतानत्वेप्यवभृथादि न भवत्येव। अत एवोक्तं माधवीये ब्राह्मे॥ तद्गृहीतदीक्षाव स्यत्रै-
विद्यस्य महामखे स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकमिति वैतानोपासनाः कार्या इति अन्ये नैव सि-
द्धेः ऋत्विजां न दाक्षिता नां चेति। तु न दीक्षितगृहीणां यजमानेस्वयं कर्त्तृत्वार्थे स्नानमावश्यं चेति। वि-
ज्ञानेश्वरः॥ वस्तुतस्तु दीक्षणीयासंस्कृतस्यप्रागवभृथात्कर्मप्रारब्धं दीक्षितगृहणात् तेन ततः
निषेधपूर्वे एव। यत्तु प्रारंभो वरणं यज्ञे इति। तद्दृत्विक्परं तथा च छंदोगपरिशिष्टे। न दीक्षिणपाः
परं यज्ञे न कृच्छ्रादि तपश्चरन्निति। शुद्धितत्त्वेप्येवं। ऋत्विजां च मधुपर्कोत्तरमाशौचाभावः। गृही-
तमधुपर्कस्य यजमानानुऋत्विजः। पश्चादशौचे पतिते न भवेदिति निश्चयः। इति ब्राह्मात्। अत
एव शार्ङ्गधरः। ऋत्विजां वरणे पक्षेऽन्येषामाशौचेन्य आगमितत्वादित्याह। एवं स्मार्तेपि तुलाकोटि
होमादौ मधुपर्केसति दोषाभावो ज्ञेयः॥ यत्तु प्रारंभो वरणं यज्ञ इति तत्रापि मधुपर्कोत्तरं ज्ञेयं तेन
नाधानेपि पशुबंधादौ तदभावादन्ये भवंतीति सिद्धं। अपवादांतरमाह याज्ञवल्क्यः॥ वैतानो-
पासनाः कार्याः क्रियाश्च श्रुतिचोदनात्। तत्र त्यागमात्रे स्नानोत्तरं स्वयं कर्तव्यं। श्रौते कर्मणि तत्
कालं स्नातः शुद्धिमवाप्नुयात् इति स्मृतेः॥ त्यागातिरिक्तं तु श्रौते स्मार्ते चान्येनैव कर्त्तव्यं सूतके
मृतके चैवमशक्तौ श्राद्धभोजने। प्रवासादिनिमित्तेषु हावयेन्न तु हापयेदिति वृहस्पत्युक्तेः। नि-
त्यानि निवर्त्तेरन्वैतानवर्ज्जं शालाग्नौ चैकेन्यएतानि कुर्युरिति पैठीनसिस्मृतेश्चेति विज्ञानेश्वरः
एकमहणं पूजार्थं तेन स्मार्तं कार्यमेवेति हारलतायां। दाक्षिणात्यास्तु विकल्पमाहुः॥ अपरा-

कादिनिर्बंधात्तु श्रौतं सर्वं स्वयं कार्यं स्मार्त्ते त्यागातिरिक्तोऽन्यस्यैव कर्तृत्वं। त्यागमात्रे तु स्वयं। कर्म वैता
निकं कार्यं स्नानोपस्पर्शवान्स्वयमिति हारीतोक्तेः। दर्शं च पूर्णमासं च कर्म वैतानिकं च यत्। सूतके
पि त्यजन्मोहात्प्रायश्चित्तीयते द्विज इति मरीच्युक्तेः। जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते। शा
लाग्नौ केवलो होमः कार्य एवान्यगोत्रजैरिति जाबालोक्तेश्चेत्याहुः। आशार्केप्येवं। सूतके तु समु
त्पन्ने स्मार्त्तं कर्म कथं भवेत्। पिंडयज्ञं चरुं होमम् असगोत्रेण कारयेदिति जातूकर्ण्योक्तेश्च। चरुः स्मा
र्त्तस्थालीपाकः। श्रवणाकर्मादिश्चेति विज्ञानेश्वरः। प्रारब्धं तु सपिंडेनापि वार्यं। न च तत्कर्म कु
र्वाणः सनाभ्योप्यशुचिर्भवेदिति मनूक्तेः। छंदोगपरिशिष्टेपि। होमं श्रौते तु वर्त्तव्यः शुष्कान्नेन फ
लेन वा। अकृतं हावयेत्स्मार्त्ते तदभावे कृताकृतं। अकृतं व्रीह्यादि। कृतमन्नं कृताकृतं तंडुलादि॥ स्मार्त्तहो
मादौ तु विकल्पोऽत्रेयः। शालाग्नौ चैके इति प्रागुक्तेः। यदाकरणं तदान्यद्वारा। अत्रेदं तत्त्वम्। येषां
वह्न्यादीनां दर्शाद्यहोमेपि नाग्निविच्छेदस्तैर्न कार्यं। तैत्तिरीयाद्यैः कार्यं च तूर्णमहू यमा
नोग्निर्लौकिकः संपद्यत इति सुदर्शनभाष्यवचनात्। समारूढे त्वग्नौ तेनापि न कार्यं। किंतु पुनरा
नमेव समारोपः प्रत्यवरोह योरशौचापवादाभावादनन्यकर्तृकत्वाच्च अन्यथा पुनराधा
नमपि स्यात्। यत्त्वाश्वलायनः॥ तौ वापि सूतके शावे पर्वणीष्टिमहापदि। पुष्पवत्यां च भार्यायां तन्
कुर्यात्ताकदाचन स्मार्त्तोग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः। श्रौताग्निस्तु सकृद्धुत्वा समाप्ते वा स्व
यं हुनेदिति। तदपि समारूढपरं तदाह स एव। स्मार्त्ताग्निरात्मनोन्येषामभावे सूतकादिषु॥ समा
रोप्य तदंते तु विहृत्य जुहुयात्स्वयमिति। तथा मनुः॥ प्रत्यूहेन्नाग्निषु क्रिया इति। वैश्वदेवस्य त्वग्नि
साध्यत्वेपि वचनान्निवृत्तिः। विप्रो दशाहमासीत वैश्वदेवविवर्जित इति संवर्त्तोक्तेः। यद्यपि पंच
यज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरिति तेनैवोक्तेः पूर्वनिषेधो व्यर्थः। तथाप्यापस्तंबादीनां वै
श्वदेवस्य पंचयज्ञभिन्नत्वात्पृथङ्निषेधः। हरदत्तस्त्वाशौचेपि बह्वृचैर्वैश्वदेवः कार्यः। तस्य द्वाव
नध्यायौ यदात्माशुचिर्यद्देश इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधात्। संध्यादीनामप्यपवाद
माह। अपरार्के पुलस्त्यः॥ संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत्सूतके वापि त्य
जन्गच्छेदधो द्विजः। सूतके मृतके चैव संध्याकर्म समाचरेत्। मनसोच्चारयेन्मंत्रान्प्राणायाम
मृते द्विजः॥ यत्तु चंद्रिकायां जाबालः॥ संध्यां पंचमहायज्ञान्नैत्यकं स्मृतिकर्म च। तन्मध्ये हाप
यत्तेषां दशाहांते पुनः क्रियेति॥ यच्च संवर्त्तः। सूतके कर्मणां त्यागः संध्यादीनां विधीयते॥ य
च्च विष्णुपुराणे। सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुर
भीतित इति तत्पूर्णसंध्यापरं। अर्घ्यांता मानसी संध्या कुशवारिविवर्जितेति शुद्धिदीपे च्यवनो
क्तेः॥ पैठीनसिस्त्वर्घ्ये मंत्रोच्चारणमाह। सूतके सावित्र्यांजलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्याय
न्नमस्कुर्यात्। प्रयोगपारिजाते भरद्वाजोपि। सूतके मृतके कुर्यात्प्राणायाममंत्रकं। तथा मा
र्जनमंत्रांस्तु मनसोच्चार्य मार्जयेत्। गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं च निवेदयेत्। मार्जनं तु न
वा कार्यमुपस्थानं न चैव हि। ग्रहणे श्राद्धादावप्याशौचापवादमाह व्याघ्रः॥ स्मार्त्तकर्मपरित्यागो
राहोरन्यत्र सूतके इति। लैंगेपि। सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मु

त्रिर्नेष्यते। प्रयोगपारिजाते बृहस्पतिः॥ कन्याविवाहे संक्रांतौ मृतकं न कदाचन॥ वृद्धशातातपः॥ यदाभो
जनकाले तु अशुचिर्भवति द्विजः। भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति। भक्षयित्वा तु तं ग्रासम
होरात्रेण शुध्यति। अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति। इदमविशेषान्मृतकादिपरमपीति
शुद्धितत्त्वे शूलपाणिः॥ ॥अथद्रव्यनः॥ ॥मरीचिः॥ लवणे मधुमांसे
च पुष्पमूलफलेषु च। शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च। तिलौषधाजिने चैव पक्वापक्वे स्व
यंग्रहः। पण्येषु चैव सर्वेषु नाशौचं मृतसूतके। स्वयमेव स्वाम्यगृहात्पायासेन तद्धस्तादित्यर्थः। क्रये
तु तद्धस्तादपि न दोषः। पक्वं लड्डुकादि। अपक्वं तंडुलादि। एतच्च सत्रपरं। अन्नसत्रप्रवृत्तानामाम
मन्नमगर्हितम्। भुक्त्वा पक्वान्नमेतेषां त्रिरात्रे तु व्रती भवेदित्यंगिरसोक्तेः। पक्वान्नं मोदकादि।
न तु भक्ष्यं। षट्त्रिंशन्मते॥ उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत्। एकेनापि परिज्ञाते भोक्तुर्दोष
मुपावहेत्। विवाहोत्सवयज्ञेषु त्वंतरा मृतसूतके। परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः॥ भुंजा
नेषु तु विप्रेषु त्वंतरा मृतसूतके। अन्यगेहोदकाचांताः सर्वे ते शुचयः स्मृताः॥ बृहस्पतिः॥ विवाहो
त्सवेष्वायुक्ता। एवं संकल्पितान्नेषु न दोषः परिकीर्तितः॥ प्रउशीनो॥ संसर्गो यस्य चाशौचं यस्याति
क्रांतकालता। तदीयद्रव्यदार्थस्य नाशौचं विद्यते क्वचित्॥ शुद्धितत्त्वे शुभ्रदिग्वत्तुरत्नौ विष्णुः॥
मोक्षणेन पुस्तकमिति॥ ॥अथमृतदोषः॥ ॥हेमाद्रौ षट्त्रिंशन्म
ते॥ कौर्मं वा व्यापादयेद्यस्तु मानं स्नानमम्बुदकादिभिः। विहितं तस्य नाशौचं नापि कार्योदक
क्रिया। शवदर्शनं यावदाशौचमस्त्येव। हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनामिति याज्ञ
वल्क्योक्तेः॥ शुद्धितत्त्वे कौर्मे॥ सद्यः शौचं समाख्यातं शापादिमरणे तथा। आदिपदादभिचा
रहतो भविष्ये॥ स्वेच्छया मरणं विषाच्छृंगिदंष्ट्रिसरीसृपात्। अंत्यान्यजविषोद्बंधैरात्मनाचै
वताडने। पाखंडमाश्रिताश्चैव महापातकिनस्तथा। स्त्रियश्च व्यभिचारिण्या आरूढपतितास्तथा
नैतेषां स्नानसंस्कारो न श्राद्धं न सपिंडनं॥ गौतमः॥ प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्र
पतनैश्चेच्छतामिति॥ नाशौचमिति शेषः॥ अंगिराः॥ चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युता
पि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणां। उदकं पिंडदानं च प्रेतेभ्यो यत्प्रदीयते। नोपति
ष्ठति तत्सर्वमंतरिक्षे विनश्यति। षट्त्रिंशन्मतेप्येवं। ब्राह्मेपि। शृंगिदंष्ट्रिनखिव्यालविषवह्नि
स्त्रियाजलैः। व्यालोजगरः। सुदूरात्परिहर्तव्यं कुर्वन्क्रीडां मृतस्तु यः। नागानां विप्रियं कुर्व
न्हतश्चाप्यथ विद्युता। निगृहीताश्च ये राज्ञा चौर्यदोषेण कुत्रचित्। परदारान्हरंतश्च द्वेषा
त्तत्पतिभिर्हताः। असमानैश्च संकीर्णैश्चांडालाद्यैश्च विग्रहं। कृत्वा तैर्निहतास्तद्वच्चांडालादी
न्समाश्रिताः। शाल्मलिगरदाश्चैव पाषंडाः क्रूरबुद्धयः। क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बंध
नं जलं। गिरिवृक्षप्रपातं च ये कुर्वंति नराधमाः। कुशिल्पजीविनो ये च सूनालंकारधारिणः।
मुखेभगास्तु ये केचित्क्लीबप्रायनपुंसकाः। ब्रह्मदंडहता ये च ये चापि ब्राह्मणैर्हताः। महापा
तकिनो ये च पतितास्ते प्रकीर्तिताः। पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थिसंचयः। न चाश्रुपा
तपिंडौ वा कार्यं श्राद्धादि क्वचित्॥ एतानि पतितानां तु यः करोति विमोहितः। तप्तकृच्छ्र

येनैव तस्य शुद्धिर्नचान्यथा। एतद्बुद्धिपूर्वं। सर्वेषां करणे तु माधवीये वसिष्ठः। यः आत्मत्यागिनां कुर्या
त्स्नेहात्प्रेतक्रियां द्विजः। स तप्तकृच्छ्रसहितं चरेच्चांद्रायणव्रतं। अज्ञाने तु॥ कृत्वाग्निमुदकं स्ना
नं स्पर्शनं वहनं कथां रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यतीति ज्ञेयं। प्रत्येकं बुद्धिपूर्वं एतदि
ति मदनपारिजातः। प्रत्येकं तु स्पर्शाश्रुणोर्मिताक्षरायां। तच्छवं केवलं स्पृष्ट्वा अश्रु वा पातितं य
दि पूर्वोक्तानामकारी चेदेकरात्रमभोजनं। एकरात्रं तु नाश्नीयात्त्रिरात्रं बुद्धिपूर्वकमिति माधवीये
उक्तार्थं। अन्येषु संवर्तः। एषामन्यतमं प्रेतं यो वहेत दहेतापि वा। कटोदकक्रियां कृत्वा कृच्छ्रं सां
तपनं चरेत्। अज्ञाने त्वहं। एतदनाहिताग्नेः। आहिताग्नेः कृच्छ्र एवेति माधवः॥ मिताक्षरायां
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया। तेषामपि तथा गंगातोये संस्थापनं हितं। आ
हिताग्नेस्तु विशेषो हेमाद्रौ भविष्ये। वैताने प्रक्षिपेदस्थु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ
साग्निके पापकर्मणि॥ छंदोगपरिशिष्टेपि। महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि॥ पुत्रा
दिः पालयेदग्नीन्युक्तश्चादोषसंक्षयात्। प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि। गृह्यं तन्नि
र्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदः। पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत्। माधवीये परा
शरः॥ आहिताग्निर्मृतो विप्रश्चांडालेनात्मघातकः। दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मंत्रवर्जितं
प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात्। दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः। स्वेना
ग्निना स्वमंत्रेण पृथगेनं पुनर्दहेत्। हेमाद्रौ तु। दाहयित्वा शवं तेषां शूद्रैरविधिपूर्वकमित्युक्तं। ए
तद्रूपोदिनामरणे ज्ञेयं। तांस्ते प्रेत्यापि गच्छंति ये के चात्महनो जना इति। अत्र चात्महनने एव दो
षोक्तेः। प्रमादमरणे त्वाशौचादि सर्वं भवत्येव। तदाहांगिराः॥ ॥ अथ कश्चित्प्रमादेन म्रियेता
ग्न्युदकादिभिः। तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया। ब्राह्मेपि। प्रमादादपि निःशंकस्त्व
कस्माद्विधिचोदितः। शृंगिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः। चंडालैरथवा चौरैर्निह
तो वापि कुत्रचित्। तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः इति॥ प्रमादमरणे त्रिरात्रमाशौच
मिति गौडाः। शुद्धितत्त्वादयः दशाहादिति दाक्षिणात्याः। अस्यापवादो हेमाद्रौ भविष्ये। प्रमादा
दिच्छया चापि न कुर्यात्सर्पतो मृते। नागपूजां विना न कुर्यादित्यर्थः॥ बौधायनोऽपि। बुद्धिपूर्वा
त्स्वहंतॄणां क्रियालोपो विधीयते। क्रियांत्यकर्म। न तु मरणनिमित्तदानादिकार्यं। तच्च विश्वप्र
काशादौ ज्ञातव्यं। पीये च। व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत्। सर्पदष्टे नागबलिर्देयः सर्प
श्च कांचनः। चतुर्निष्कमितं हेमगजं दद्याद्गजे हते। राज्ञा विनिहते दद्यात्पुरुषं तु हिरण्मयं। चौरेण
निहते धेनुं वैरिणा निहते वृषं। वृषेण निहते दद्याद्यथाशक्त्या च कांचनं॥ शय्यामृते प्रदातव्या
शय्या तूलिसमन्विता। निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता। शौचहीने मृते चैव द्विनिष्कं
स्वर्णजं हरिं। संस्कारहीने च मृते कुमारमुपदापयेत्। निष्कमात्रस्वर्णमितं दद्यादश्वं हयाहते। शु
नाहते क्षेत्रपालं स्थापयेन्निजशक्तितः। सूकरेण हते दद्यान्महिषं दक्षिणान्वितं। कृमिभिश्च
मृते दद्याद्गोधूमान्पंचखारिकाः। वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतं शृंगिणा निहते दद्या
द्वृषभं वस्त्रसंयुतं। शाकटेन हते दद्याद्वृक्षं सोपस्करान्वितं। भृगुपाते मृते चैव प्रदद्याद्धान्यपर्वतं

अग्निना निहते कार्यमुदपानं स्वशक्तितः। दाहव्याधिहते चैव कर्तव्या सद्मने सभा। शस्त्रेणनिहते
दद्यात् महिषीं दक्षिणान्वितां। अश्मना निहते दद्यात्सवत्सां गां पयस्विनीं। विषेणच मृते दद्यात्
मेदिनीं हेमनिर्मितां। उद्बंधनेनच मृते कपिलां कनकनिर्मितं। मृते जलेन वरुणं हैमं दद्याद्धि निष्कतः
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान्। घृतधेनुः प्रदातव्या कंठेन्नकवले मृते। काशरोगेण
च मृते अष्टकृच्छ्रं व्रतं चरेत्। अतीसारमृते लक्षं गायत्र्या अपि तो जपेत्। शाकिन्यादिग्रहग्रस्ते
जपेद्रुद्रं यथोदितं विद्युत्पातेन निहते विद्यादानं समाचरेत् अंतरिक्षमृते कार्यं वेदपारायणं तथा
सच्छास्त्रपुस्तकं दद्यात् स्पृष्टास्पृष्टे गतो मृते। पतिते च मृते कुर्यात्प्राजापत्यास्तु षोडश। मृते चाप्यपर
हिते कृच्छ्राणां नवतिं चरेत् एवं कृते विधाने तु विदध्यादौर्ध्वदेहिकं तथा वेधमरणेपि न दोषः
तदाहतुर्मनुवृद्धगार्ग्यौ॥ वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्व
ग्न्यनशनांबुभिः। तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमा
चरेदिति। हेमाद्रौ विष्णुधर्मेपि। नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुं। असूर्या नाम ते लोका
अंधेन तमसावृताः। तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः अरिष्टैरात्मनो ज्ञात्वा मृत्युका
लमुपस्थितं। व्याधितो भिषजा त्यक्तः शूरो वा युधि चात्मनः यथायुगानुसारेण संत्यजेदात्मनस्तनुं
तस्मिन्काले तनुत्यागाद्यथेष्टं फलमाप्नुयात्। आयुषस्तु परिक्षये मरणं ब्राह्मणस्य च। नेमिगोऽना
मयपाठः॥ उत्तरार्धे असंगतेः॥ क्षत्रियस्य तु संग्रामे मृते मंत्रैर्न योषितः॥ अपरार्के ब्रह्मगर्गः॥ जो
जीवितुं न शक्नोति महाव्याध्युपपीडितः। सोग्न्युदकमहायात्रां कुर्वन्नात्र दुष्यति। अत्रोक्तेर्वक्ष्य
माणवचोनिचयात्प्रयागातिरिक्ते चिकित्स्यरोगाद्युपहतानामधिकारः। सोपि जीर्णवानप्रस्थ
स्यैवेति विज्ञानेश्वरदेवयाज्ञिकादयः॥ अत एव मिताक्षरादौ भृगुपातानशनादिकं वानप्रस्थ
स्यैवोक्तं॥ मनुरपि॥ आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुं। वीतशोकभयो विप्रो ब्रह्मभू
यायकल्पत इति। तेनान्यत्रापि नद्विषयतैव। मूलं व्यादिति केचित्। तन्न॥ वानप्रस्थमरणाश्
शौचनिषेधात्॥ तेन गृहस्थादिपरमेवेदं तेन पतेर्नाधिकारः। काम्ये नधिकाराच्च। नैमित्तिक
त्वेत्वकरणे दोषो नित्यताच स्यात्॥ प्रयागे त्वरोगिणां च॥ यत्तु॥ शूद्राश्च स्त्रियो वैश्या अंत
जाश्च तथाधमाः॥ एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजन्मप पतित्वमत्र ब्राह्मणस्तत्र ब्रह्महाकाम
हा भवेदिति॥ तन्निर्मूलमिति मदनः॥ तत्त्वं तु हेमाद्रौ अनंतकोऽलिखनान्निर्मूलत्वं चिंत्यमेव। प्रा
मात्रपतित्वेति भृगुपातमात्रपरमुक्तं। ब्राह्मणस्याप्यनुज्ञातमिति॥ वक्ष्यमाणविरोधाच्च। पस्मार
त्पुराणे। अब्राह्मणो वा स्वर्गादिमहाफलजिगीषया प्रविशेज्ज्वलनं तोयं करोत्यनशनं तथेति
तत्प्रयागातिरिक्तपरमिति केचित्। हेमाद्रौ त्वेतदग्रे प्रयागवटशाखामादित्युक्तेः ब्राह्मणस्यापि
पितेति प्रतीयते। माधवीये पराशरे चादिपुराणे। दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमान्यः। प्रवि
शेज्ज्वलनं दीप्तं करोत्यनशनं तथा अगाधतोयराशिं च भृगोः पतनमेव च। गच्छेन्महापथं वापि
तुषारगिरिमादरात्। प्रयागवटशाखाग्राद्देहत्यागं करोति वा। स्वयं देहविनाशस्य काले प्राप्ते महाम
तिः। उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। एतेषामधिकारस्तु सर्वेषां सर्वजंतुषु। न

णामथ नारीणां सर्ववर्णेषु सर्वदा। ईदृशं मरणं येषां जीवतां कुत्र विद्यते। अशौचं स्यान्नहतेषां वज्रा
नलहते तथा। वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः। काष्ठपाषाणमध्यस्थो जाह्नवीजलम
ध्यगः। अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः॥ प्रणवं तारकं ब्रूते नान्यथा कुत्रचित्क्वचित्॥ हेमा
द्रावेवं। अत्र प्राप्तकाले इत्युक्तेः प्राप्तमरणकालायाः स्त्रिया अन्वारोहणे संपूर्णमेवाशौचम्। पृथ्वी
चंद्रस्त्वत्रापि त्र्यहमाह। शुद्धतत्त्वादिगौडग्रंथेष्वप्येवं। एतच्च वृद्धादिमरणं कलौ निषिद्धं। भृग्वग्निप
तनैश्चैव वृद्धादिमरणं तथेति माधवेन पृथ्वीचंद्रेण च कलिवर्ज्येषूक्तेः। न चात्र यावदुक्तनिषेधः। वि
शिष्टोद्देशे वाक्यभेदात्। न च कलौ वानप्रस्थाश्रमनिषेधादेव सिद्धे मरणनिषेधो व्यर्थ इति वाच्यं
सर्ववर्णेष्वित्यादिभिर्लिङ्गैरन्यस्यापि प्राप्तेः। काम्यं भवत्येव। येवै तन्वां विसृजंतीति श्रुतेः स्मृत्यासं
कोचायोगात्। न चैवं स्वाभाविकं मृत्युपरं धीरपदोक्तेः। मात्स्यभारतादिषु। न लोकवचनात्तात
वेदवचनादपि। मतिरुत्क्रमणीया ते प्रयागमरणं प्रतीत्युक्तेः। अत एव विष्णुधर्मे रोग्यादिमरणमुक्तो
क्तं। यथा युगानुसारेण संत्यजेदात्मनस्तनुमिति। काष्ण्यमप्युक्तं मात्स्ये। अग्निप्रवेशं ये कुर्युरविमु
क्ते विधानतः। प्रविशंति मुखं ते मे निःसंदिग्धं वरानने। हेमाद्रौ विवस्वान्। सर्वेष्वपि विमुक्तस्य स्व
व्यापारस्य समस्य च। प्रायश्चित्तमनुज्ञातमग्निपातो महापथः। धर्मार्जनासमर्थस्य कर्तुः पापांकि
तस्य च। ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणं। अपरार्के चैवं। सहगमनं कलौ भवत्येव।
कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते इति॥ ब्रह्मवैवर्तात्॥ एतेन मरणांतिकप्रायश्चित्तं
काशीखंडादौ चानुवर्णस्य तनुत्यागविधयश्च युगांतरपरा एव। प्रयागेऽपि त्रिस्थलीसेतौ स्कांदे।
यथाकथंचित्तीर्थेऽस्मिन् प्राणत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि॥ पा
द्मे विष्णुः॥ देहत्यागं तथा वीराः कुर्वंति मम सन्निधौ। मत्तनुं प्रविशंत्येव न पुनर्जन्मिनो नराः॥ कौर्मे॥
व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः। गंगायमुनमासाद्य यस्तु प्राणान्परित्यजेत्। ईप्सिता
ंल्लभते कामान्वदंति मुनिपुंगवाः। तथा॥ या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः। सा ग
तिस्त्यजतः प्राणान्गंगायमुनसंगमे॥ वाराहे॥ तत्र ये मुंचति प्राणान्वटमूलेषु सुंदरि। सर्वलो
कानतिक्रम्य मम लोकं प्रपद्यते॥ तथा॥ अकामो वा सकामो वा वटमूलेषु सुंदरि। शीघ्रं प्राणान्
प्रमुच्येत यदीच्छेत्परमां गतिं॥ तथा॥ पंचयोजनविस्तीर्णे प्रयागस्य तु मंडले। अतीतान्पुरुषा
न्सप्त भविष्यांश्च चतुर्दश॥ नरस्तारयते सर्वान्यस्तु प्राणान्परित्यजेत्॥ ब्राह्मे॥ ध्यात्वा विष्णु
पदांभोजं प्रयागे विष्णुतत्परः। तनुं त्यजति वै मोघं तस्य मुक्तिर्न संशयः॥ दुष्कृतोऽपि दुराचारो ब्र
ह्महत्यादिपातकी। हरिं ध्यात्वा त्यजेद्देहं प्रयागे मुक्तिमान्भवेत्। भविष्योत्तरे॥ समाः सहस्रा
णि तु सप्त वै जले दशैकमग्नौ पतने च षोडश। महाहवे षष्टिरशीति गोग्रहे अनाशके भारत चा
क्षया गतिरिति सामान्यतोऽपि फलं। एवमन्येऽपि विधयो ज्ञेयाः॥ यत्तु गौडाः॥ प्रयागादिमरणं ब्रा
ह्मणभिन्नविषयमित्याहुः॥ तन्न वर्णपितामहचरणैः प्रयागविधौ कृतमिति नात्रोच्यते। अ
त्र दशाहमाशौचं त्रिरात्रं स्यात्प्राप्तकालगोचरत्वादिति भट्टाः। युक्तं तु त्रिरात्रं॥ दिवोदासीये
ऽप्येवमस्तु द्विजत्वेऽपि कश्यपः॥ अनशनमृतानामशनिहतानामग्निजलनविषाणां भृगुसं

वचनमस्ति पुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः। प्रागुक्तबौधायनवचनाच्चेति दिक्॥ इदं प्रायश्चि
त्तार्हाणामेव। प्रायश्चित्तानर्हाणां तु पतितोदकमात्रं कार्यमिति केचित्॥ मदनपारिजातादिस्वर
सोऽप्येवम्॥ वस्तुतस्तु तदर्हानर्हयोर्वचनेऽनुपादानादविशेषात्तत्रापि नारायणबलिर्गयाश्राद्धं चे
त्युक्तं। पतितोदकविधिस्तु पित्राद्यतिरिक्तविषय इत्यपरे। स यथा॥ हेमाद्रौ ब्राह्मे॥ पतितस्य
तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति। स हि दासीं समाहूय सर्वंगां दत्तवेतनां। अशुद्धघटहस्तां तां प
थावृत्तं ब्रवीत्यपि॥ हे दासि गच्छ मूल्येन तिलानानय सत्वरं। तोयपूर्णं घटं चेमं सतिलं दक्षिणामु
खी। उपविष्टा तु वामेन चरणेन ततः क्षिप। कीर्तयेत्यातकीसंज्ञां त्वं पिबेति मुहुर्वद। निशम्य त
स्य वाक्यं सा लब्धमूल्या करोति तत्। एवं कृते भवेत्तृप्तिः पतितानां न चान्यथेति। इदं च मृताहे
कार्यं। पतितस्य दासी मृताह्नि पदा घटं विवर्जयेत्तेनावनायमुपचरितो भवतीति मदनरत्ने विस्पृ
क्तेः। इदं चात्मत्यागिविषयं। आत्मत्यागिनः पतितास्ते नाशौचोदकभाजः स्युरित्युपक्रम्य विष्णु
नारायणस्याभिधानादिति गौडाः। उपलक्षणत्वात्सर्वेषामिति तु युक्तं। यत्तु कश्चिदाह। यः पतितो
घटस्फोटेन बांधवैर्बहिःकृतस्तद्विषयाणि क्रियानिषेधवाक्यानि। जीवत्येव तस्मिंस्तत्कर्म
णः कृतत्वात्। पुनः करणाभावादिति। स बंधुत्यागेन ज्ञानवैराग्ययुक्तकृतप्रायश्चित्तस्याप्यकर
णापत्तेर्मिताक्षरादिविरोधमपश्यन्मूर्खैरप्युपेक्षणीयः। न च कृतघटस्फोटस्य संग्रहविधिर्ने
ति वाच्यं। मनुना कृतस्य घटस्फोटस्य त्यागमुक्त्वा प्रायश्चित्ते तु चरिते पूर्णं कुंभमपां नवं॥ तेनैव सा
र्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये। इत्युक्तेः। अन्यथा प्रायश्चित्तमात्रे एतत्प्रसंगात्। अतो घटस्फो
टेन बहिःकृतस्यापि पित्रादेरब्दांते नारायणबलिः॥ निषेधास्तु पितृव्यादिपरा इति तत्त्वं। केचि
त्तु नारायणबलौ कृतेऽप्यंतकर्म सपिंडनवर्जं कार्यं। गोब्राह्मणहतानां च पतितानां तथैव च। व्यु
त्क्रमाच्च प्रमीतानां नैव कार्या सपिंडनेति वचनात्। ब्राह्मणादिहते ताते पतिते संगवर्जित इति।
श्राद्धप्रकाशोक्तेश्चेत्याहुः। तद्धेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्छ्राद्धप्रका
शस्य वृद्धिश्राद्धविषयत्वादुपेक्ष्या॥ नारायणबलिस्तु हेमाद्र्याद्यनुसारेणोच्यते। तत्रादौ क्रिया
निबंधे गारुडे तर्पणमुक्तं। कार्यं पुरुषसूक्तेन मंत्रैर्वा वैष्णवैरपि। दक्षिणाभिमुखो भूत्वा प्रेतं विष्णु
मिति स्मरन्। अनादिनिधनो देवः शंखचक्रगदाधरः। अक्षयः पुंडरीकाक्ष प्रेतमोक्षप्रदो भवेति
शुक्लैकादश्यां देशकालौ संकीर्त्यामुकगोत्रस्यामुकस्यादुर्मरणात्मघातज दोषनाशार्थं और्
ध्वदेहिके संप्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्ये इति संकल्प्य ब्रह्माणं विष्णुं शिवं यमं
प्रेतं पंचकुंभेषु॥ विष्णुः स्वर्णमयः कार्यो रुद्रस्ताम्रमयस्तथा ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भ
वेत्। प्रेतो दर्भमयः कार्य इति गारुडोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्ते
नाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणा
ग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन्। नामगोत्राभ्यां मधुघृततिलयुतान् दश पिंडान् यज्ञोपवीत्येव अमु
कगोत्र अमुकशर्मन् प्रेत विष्णुरूपाय ते पिंड उपतिष्ठतामिति दत्वा कुशैः पुरुषसूक्तेनाभिमंत्र
यते यममिति सूक्तेन पिंडांस्तु मंत्र्य शंखोदकेन चाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रं वि

यामदेशांतरमृतानांज्ञातदत्तानांचत्रिरात्रमिति।एवंमरणांतप्रायश्चित्तेपि।पूर्वोक्तमात्महादेर्दाह
शौचादिनिषेधस्तदानीमेव।वत्सरांतेतुसर्वमौर्ध्वदेहिकंकुर्यात्॥गोब्राह्मणहतानांचपतितानां
तथैवच।ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमिति हेमाद्रौषट्त्रिंशन्मतात्।एवंम्लेच्छीकृ
तानामपिगयाश्राद्धमपिकार्यं॥ब्रह्महाचकृतघ्नश्चगोघातीपंचपातकी सर्वेतेनिष्कृतिंयांति
गयायांपिंडपातनादित्यग्निपुराणात्।एवंब्राह्मेपि॥क्रियतेपतितानांतुगतेसंवत्सरेक्वचित्
देशधर्मप्रमाणत्वात्गयाकूपेस्वबंधुभिः।मार्तंडपादमूलेवाश्राद्धंहरिहरौस्मरन्।रुद्रपदे
इत्यर्थः।तत्रवर्षमध्येकृच्छ्रमुक्तंपराकैर्वापूरणं।शुक्लपक्षेतुद्वादश्यांकुर्यात्छागंदत्वावत्सरंद्वा
दशाहानिवाकुर्यात्शुक्लेचप्रथमेहनि।छागलेयः॥नारायणबलिःकार्योलोकगर्हाभयान्न
रैः।तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः॥व्यासः॥नारायणंसमुद्दिश्यशिवंवायत्प्रदीयते
तस्यशुद्धिकरंकर्मतद्भवेन्नेतरन्यथेति।सचात्मघातादिप्रायश्चित्तंकृत्वाकार्यः॥तदुक्तंहेमा
द्रौषट्त्रिंशन्मते।कृत्वाचांद्रायणंपूर्वंक्रियाकार्यायथाविधिः॥नारायणबलिःकार्योलोकग
र्हाभयान्नरैः।पिंडोदकक्रियाःपश्चात्वृषोत्सर्गादिकंचयत्।एकोद्दिष्टानिकुर्वीतसपिंडीकर
णंतथा॥दिवोदासीयेवृद्धशातातपस्तु॥पतितेचमृतेशुद्धौभोजा[illegible]षोडशः॥मृतेवापत्यर
हितेकृच्छ्राणांनवतिंचरेत्॥इत्याहइदंप्रायश्चित्तार्हपित्रादिविषयं।इंद्रियैरपरित्यक्तापेयमद्
दाविषादिनः।यातयंतिस्वमात्मानंचांडालादिहताश्चये।तेषांपुत्राश्चपौत्राश्चदयापाशमभिप्लु
ताः।यथाश्राद्धंप्रकुर्वंतिविष्णुनामप्रतिष्ठितं।तथातेसंभवस्वामिनमस्कृत्यस्वयंभुवे।इतिहे
माद्रौबोधायनोक्तेः।तत्रैवबौधायनोपि॥नारायणबलिंव्याख्यास्यामोभिशस्तपतितसुरापात्मत्या
गिनांब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवावारिमरणंयत्रयस्यतत्रतत्रकुर्वीतेति।एत
त्परिशिष्टेतु॥चांडालादित्याद्युक्त्वादग्ध्वाशरीरंप्रेतस्यसंस्थाप्यास्थीनियत्नतः।प्रायश्चित्तंतु
कर्तव्यंपुत्रैश्चांद्रायणत्रयमित्युक्तं।मदनरत्ने॥ब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवाकु
र्वीतेति।मदनरत्नेब्राह्मे॥प्रमादादपिनिःशंकःत्वकस्माद्विधिचोदितः।चांडालैर्ब्राह्मणैश्चौ
रैर्निहतोयत्रकुत्रचित्।तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसः।चांद्रायणंतप्तकृच्छ्रंद्व
यंतस्यविशुद्धये।षड्वाकृच्छ्रान्पंचदशकृत्वातुविधिनादहेत्।बुद्धिपूर्वमृतानांतुत्रिंशत्कृच्छ्
समाचरेदित्युक्तम्॥स्मृतिरत्नावल्यां तद्विगुणंप्रायश्चित्तंकृत्वावीगप्यवात्सर्वंकार्यमित्युक्तं
आत्मनोघातश्चेत्तदर्थंचरेच्चांद्रायणद्वयं।तप्तकृच्छ्रंचत्रिंशत्कृच्छ्राणिवापुनः।अर्वाक्
संवत्सरात्कुर्याद्दहनादिमृतोद्विजः।कृत्वानारायणबलिमनित्यत्वात्रायुधइति।इदंचात्मवध
निमित्तंतज्जातिवधप्रायश्चित्तेनसमुच्चितंकार्यं।अतएवबोधायनेनोक्तं।द्वादशवर्षाणित्री
णिवेति।मदनपारिजाते।स्मृत्यर्थसारेच।ब्रह्महादीनांतद्योग्यंप्रायश्चित्तंकृत्वानारायणबलिः
कार्यइत्युक्तम्।एवंम्लेच्छीकृतानामपि॥यत्तुकश्चिदाहअकृतेनप्रायश्चित्तेनपितुःपापनाशे
मानाभावः।आत्मघातेतुवचनादस्तु।महापातकेतुकथंस्यादिति।सत्यमेवात्मवधप्रायश्चि
त्तस्यजातिवधनिमित्तेनसमुच्चयं।वदन्हृदयंपृष्टएव।नहिज्ञातिवधनिमित्तंपुत्रैःकार्यमिति

वचनमस्ति पुत्रकर्तृकसर्वप्रायश्चित्ताद्विप्लवापत्तेः। प्रागुक्तबौधायनवचनाच्चेति दिक्॥ इदं प्रायश्चि-
त्तार्हाणामेव। प्रायश्चित्तानर्हाणां तु पतितोदकमात्रं कार्यमिति केचित्॥ मदनपारिजातादिस्वर-
सोप्येवम्॥ वस्तुतस्तु तदर्हानर्हयोर्वचनेनुपादानादविशेषात्तत्रापि नारायणबलिर्गयाश्राद्धं चे-
त्युक्तं। पतितोदकविधिस्तु पित्राद्यतिरिक्तविषय इत्यपरे। स यथा॥ हेमाद्रौ ब्राह्मे॥ पतितस्य
तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति। स हि दासीं समाहूय सर्वे गां दत्तवेतनां। अशुद्धपदहस्तांताय
थावत्तं ब्रवीत्यपि॥ हे दासि गच्छ मूल्येन तिलानानय सत्वरं। तोयपूर्णं घटं चेमं सतिलं दक्षिणामु-
खी। उपविष्टा तु वामेन चरणेन ततः क्षिप। कीर्तयेत्पातकीसंज्ञां त्वं पिबेति मुहुर्वद। निशम्य त-
स्य वाक्यं सा लब्धमूल्या करोति तत्। एवं कृते भवेत्तृप्तिः पतितानां न चान्यथेति। इदं च मृताहे
कार्यं। पतितस्य दासी मृताह्नि पदा घटं विवर्जयेदेतावतायमुपचरितो भवतीति मदनरत्ने विष्णू-
क्तेः। इदं चात्मत्यागिविषयं। आत्मत्यागिनः पतितास्ते नाशौचोदकभाजः स्युरित्युपक्रम्य विष्णु-
नाप्येतस्याभिधानादिति गौडाः। उपलक्षणत्वात्सर्वेषामिति तु युक्तं। यत्तु कश्चिदाह। यः पतितो
घटस्फोटेन बांधवैर्बहिःकृतस्तद्विषयाणि क्रियानिषेधवाक्यानि। जीवत्येव तस्मिंस्त्यक्तकर्म-
णः कृतत्वात्। पुनः करणाभावादिति। स बंधुत्यागेन ज्ञातवैराग्यस्य कृतप्रायश्चित्तस्याप्यकर-
णापत्तेर्मिताक्षरादिविरोधमपश्यन्मूर्खैरुपेक्षणीयः। न च कृतघटस्फोटस्य संग्रहविधिर्ने-
ति वाच्यं। मनुना कृतस्य घटस्फोटस्य त्यागमुक्त्वा प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवं॥ तेनैव सा-
र्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये। इत्युक्तेः। अन्यथा प्रायश्चित्तमात्रेणैतत्प्रसंगात्। अतो घटस्फो-
टेन बहिःकृतस्यापि पित्रादेरब्दांते नारायणबलिः॥ निषेधास्तु पितृव्यादिपरा इति तत्त्वं। केचि-
त्तु नारायणबलौ कृतेप्यंतकर्म सपिंडनवर्जं कार्यं। गोब्राह्मणहतानां च पतितानां तथैव च। मु-
क्तेमाच्च प्रमीतानां नैव कार्या सपिंडनेति वचनात्। ब्राह्मणादिहते ताते पतिते संगवर्जिते इति।
श्राद्धप्रकाशोक्तेश्चेत्याहुः। तन्न हेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्च श्राद्धप्रका-
शस्य वृद्धिश्राद्धविषयत्वाद्वोपेक्ष्या॥ नारायणबलिस्तु हेमाद्र्याद्यनुसारेणोच्यते। तत्रादौ क्रिया-
निबंधे गारुडे तर्पणमुक्तं। कार्यं पुरुषसूक्तेन मंत्रैर्वा वैष्णवैरपि। दक्षिणाभिमुखो भूत्वा प्रेतं विष्णु-
मिति स्मरन्। अनादिनिधनो देवः शंखचक्रगदाधरः। अक्षय्यः पुंडरीकाक्ष प्रेतमोक्षप्रदो भवेति
शुक्लैकादश्यां देशकालौ संकीर्त्यामुकगोत्रस्यामुकस्य दुर्मरणात्मघातज दोषनाशार्थं। औ-
र्ध्वदेहिके संप्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्य इति संकल्प्य ब्रह्माणं विष्णुं शिवं यमं
प्रेतं पंचकुंभेषु॥ विष्णुः स्वर्णमयः कार्यो रुद्रस्ताम्रमयस्तथा। ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भ-
वेत्। प्रेतो दर्भमयः कार्य इति गारुडोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्ते-
नाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणा-
ग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन्। नामगोत्राभ्यां मधुघृततिलयुतान् दश पिंडान्यज्ञोपवीत्येवामु-
कगोत्रामुकशर्मन्प्रेत विष्णुरूपायं ते पिंड उपतिष्ठतामिति दत्वा कुशैः पुरुषसूक्तेनाभिमंत्र्य
पनेयममिति सूक्तेन पिंडाननुमंत्र्य शंखोदकेन चाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रं वि-

स्वरूपं केनं तर्पयामीति पृथक्पृथक् तेन तत्त्वं तर्पयित्वा एकपात्रेऽन्नं ब्रह्मादिभ्यश्च दद्यात् मंत्रस्तु ॥ ब्र
ह्मविष्णुमहादेवाय यमश्चैव सकिंकरः । बलिं गृहीत्वा कुर्वंतु प्रेतस्य च शुभां गतिमिति । मिताक्षरा
यां तु होमवस्त्रादि नोक्तं । ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुघृतगुडानि च निवेद्य पिंड
मभ्यर्च्य नत्वा क्षिप्त्वा रात्रौ नव सप्त पंच वा विप्रान्निमंत्र्योपोषितेन जागरणं कृत्वा श्वोभूते तु
न विष्णुयमसंयुक्तं एकोद्दिष्टविधिना श्राद्धं पंचकं करिष्ये इत्युक्त्वा ब्रह्मविष्णुशिवयमप्रेतान् स्मरन्
विप्रान् उपविश्य प्रेतस्थाने चैकं विष्णुस्मरन्नावाहनार्घ्यपुष्पधूपदीपाच्छादनानि कृत्वा होमस्वनादिकृ
त्वान्नशेषेण ब्रह्मणे विष्णवे शिवाय यमाय सपरिवाराय च चतुरः पिंडान् दत्वा प्रेतनामगोत्रे स्मृ
त्वा विष्णुनाम्ना पंचमं दत्वाभ्यर्च्याचांतेभ्यो दक्षिणां दत्वैकं प्रेतं स्मृत्वा विशेषतः ॥ सतोऽथ विप्रैः
प्रेतायेदं तिलोदकमुपतिष्ठतामिति । सतिलमुदकं दापयित्वा भुंजीतेति । अत्र विशेषांतरं भट्ट
नारायणीये पद्धतौ ज्ञेयं । सर्पहते तु वर्षपर्यंतं पूर्वेद्युरेकभक्तं पूर्वं शुक्लपंचम्यामुपवासं नक्तं वा कृत्वापि
ष्टमयं नागमनंतवासुकिशंखपद्मकंबलकर्कोटकाश्वतरधृतराष्ट्रशंखपालकालियतक्षक
कपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान् संभोज्य वर्षांते हैमं नागं गां च सत्पात्राय द
त्वा नारायणबलिं कुर्यात् । मूलं तु हेमाद्रौ ज्ञेयं । बौधायनसूत्रे सर्पमृतानां नमोऽस्तु सर्पेभ्य इति त्रि
स्त्र आहुतीर्हुत्वोदके मृतानां समुद्राय वरुणायेति हुत्वेति । क्रियां कुर्यादिति शेषः ॥ व्यासः ॥ सेव
णं भारं निष्पन्नं अंगं कृत्वा तथैव गां । व्यासाय दत्वा विधिवत् पितुराननृण्यमाप्नुयात् । हेमाद्रौ भ
विष्ये । पंचम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत् । क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत् । प्रा
यश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुनेति । अपर्के स्मृत्यंतरे ॥ तदेव शुध्यति प्रेतो नारायणबलौ कृ
ते । यो ददाति क्रियापिंडं तस्यैव तन्नाप्यवेत्सुतः तस्यैवाशौचमुद्दिष्टं अहमेव न संशयः । विष्णुश्चाह
समाप्तौ तु त्रयोदश्यां दिनत्रयं अशौचं पिंडदः कुर्यात् न तु तद्बंधुगोत्रजाः । यस्य वै मृत्युकाले तु व्यु
च्छिन्ना संततिर्भवेत् सर्वस्य नरके नित्यं पंकमग्नः करीषवत्स्युपक्रमम् । बलिं नारायणं कुर्यात्त
स्योद्देशेन भक्तिमानिति गारुडोक्तेः स्वस्यापि पत्न्यादिभिः कार्य इत्युक्तं देवयाज्ञिकेन ॥

॥ अथ विधानाशौचाभावः ॥

॥ यथापतिपुत्रमृतादिषु त्र
याणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः । यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सः इति
ब्राह्मात् ॥ उशनाः ॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु
विधीयते । सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः । त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते । त
त्संस्कारं वक्ष्यामः स्वस्थानेषु ॥ एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियां । न कुर्याद्वार्षिकादन्यत्
ब्रह्मीभूताय भिक्षवे । वार्षिकादर्वाक् मासिकादिनिषेधोऽनुदाहृतोर्णादेः संन्यासिनोऽप्या
ब्दिकादि पुत्रः कुर्याद्यथाविधीति । माधवीयोक्तेः ॥ पृथ्वीचंद्रोदये प्रजापतिः ॥ अहन्येकाद
शे प्राप्ते पार्वणं तु विधीयते । सपिंडीकरणं तस्य न कर्तव्यं सुतादिभिः । सपिंडनादिनि
षेधानुवादेन पार्वणोक्तेः । ततस्थानापन्नत्वेन पार्वणस्य गम्यते ॥ न गिरा गिरेति ब्रूयादैरं कृ
त्वोद्धेयमितिवत् । इदं वार्षिकादिविधानं त्रिदंडिपरं । एकदंडी परमहंसादीनां तु न किमपि
कार्यं । पूर्वोक्तोशनोवाक्ये त्रिदंडीग्रहणादिति शूलपाण्यादयो गौडाः ॥ त्रिदंडिशब्देन म

नोदंडादिदंडत्रयोक्तेः। यस्मैतेनियताद्दंडाः सत्रिदंडीतिचोच्यतेइतिस्मृतेः। बौधायनः। नारायण
बलिश्चास्यकर्त्तव्योद्वादशेहनि॥ अस्यपार्वणेनसमुच्चयोज्ञेयः। तंचसएवाह। कृत्वाविष्णो
र्महापूजांपायसंविनिवेदयेत्। अग्नौहुत्वातुतच्छेषंव्याहृतीभिःसमाहितः। यतीन्नरहस्था
न्साधून्वानिमंत्र्यद्वादशावरान्। अभ्यर्च्यगंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः। संभोज्यहव्येनान्ते
नदक्षिणांचनिवेदयेत्। त्रयोदशंद्विजश्रेष्ठमात्मसंज्ञंयतेंद्रियं। विष्णुंयथातथाभ्यर्च्यपाद्यार्घ्यै
श्चविधानतः। दद्यात्पुरुषसूक्तेनगंधपुष्पादिकंक्रमात्। वस्त्रालंकरणादीनियथाशक्तिप्र
दापयेत्। उच्छिष्टसन्निधौतस्यदर्भानास्तीर्यभूतले। भूर्भुवःस्वःस्वधायुक्तैस्तस्मैदद्याद्बलि
त्रयं। अश्वमेधसहस्रस्यवाजपेयशतस्यच। यत्फलंतल्लभेदेवंयत्करोतियतिक्रियां॥ शौन
कस्तु॥ शौनकोहंप्रवक्ष्यामिनारायणबलिंपरं। चंडालादुदकात्सर्पात्ब्राह्मणाद्वैद्युताद
पि॥ दंष्ट्रिभ्यश्चपशुभ्यश्चरज्जुशस्त्रविषाश्मभिः। देशांतरमृतानांचमृतानांचैवसाधनैः॥
जीवच्छ्राद्धंमृतानांचकनिष्ठानांतथैवच। यतीनांयोगिनांपुंसामन्येषांमोक्षकांक्षिणां।
पुण्यायायुक्ष्यार्थायद्वादशेहनिकारयेत्। द्वादश्यांश्रवणेवाथपंचम्यांपर्वणोस्तुवेत्युक्त्वा
पूर्वोक्तंसर्वंविधिमुक्त्वातोदेवेति षड्भिःपुरुषसूक्तेनचप्रत्यृचंपायसंहुत्वाकेशवादिद्वा
दशनामभिस्तद्रूपिणेपित्रेद्वादशविप्रान्संभोज्यतैरेवद्वादशपिंडान्दद्यादित्यधिकमाह
पुत्रमृतेतुप्रागुक्तं॥ कृतजीवच्छ्राद्धेमृतेसपिंडैराशौचादिकार्यंनवा॥ तदुक्तंहेमाद्रौलैंगे
मृतेकुर्यान्नकुर्याद्वाजीवन्मुक्तोयतःस्वयं॥ कालेगतेद्विजभूमौखनेद्वापिदहेत्तवा। पुत्रःक्र
मशेषंचकृत्वादोषोनविद्यते जीवत्यपिविशेषस्तत्रैवोक्तः। नित्यनैमित्तिकंयत्तुकुर्याद्वा
संत्यजेत्तवा। बांधवेपिमृतेतस्यनैवाशौचंविधीयते। सूतकंचनसंदेहःस्नानमात्रेणशुद्ध्य
ति॥ एतद्योगोविषयंच। योगमार्गरतोपिवेतितस्याप्युक्तेः। तथा॥ आहिताग्नेःप्रोषितमृते
तदस्थिदाहात्पूर्वंपुत्रादीनामाशौचं। संध्यादिकर्मलोपश्चनास्ति। अनग्निमतउत्क्रांतेराशौ
चादिद्विजातिषु। दाहादग्निमतोविद्याद्विदेशस्थेमृतेसतीतिस्मृतेः॥ आहिताग्नेर्दाहात्प्रा
गपिदशाहःसंस्कारांगंचभिन्नोदशाहः इतिधूर्त्तस्वामीरामांडारश्च॥ तच्चिंत्यं॥ मूलेक्वा
ह्यचोविरोधाच्च॥ एतत्प्रागुक्तं। अत्रदेहस्यैवसंभवेदाह। आहिताग्नौविदेशस्थेमृतेसतिक
लेवरं। निर्धंयनाग्निभिर्यावत्तदीयैरपिदह्यते। इतिब्राह्मोक्तेः॥ तदभावेछंदोगपरिशि
ष्टे। विदेशमरणेस्थीनिआहृत्याभ्यज्यसर्पिषा। दाहयेद्दर्हिषाच्छाद्यपात्रन्यासादिपूर्ववत्
अस्थ्नामलाभेपर्णानिशकलान्युक्तयावृता दाहयेदस्थिसंख्यानिततःप्रभृतिसूतकं॥
हेमाद्रौषड्विंशन्मते॥ कुर्याद्दर्भमयंप्रेतंदर्भैस्त्रिशतषष्टिभिः। पालाशीभिःशमिद्भिर्वासं
ख्याचैवंप्रकीर्तिताः। भविष्ये॥ चत्वारिंशतशिरःस्थानेग्रीवायांतुदशैवतु। बाह्वोश्चैवश
तंदद्याद्विंशतिंचतथोरसि। उदरेविंशतिंदद्यात्त्रिंशतंकटिदेशयोः। ऊर्वोश्चैवशतंदद्या
त्त्रिंशतंजानुजंघयोः। पादांगुलीषुदशवैएषाचप्रेतकल्पना। मदनरत्नेयत्तपार्श्वः॥ शि
रस्यशीत्यर्द्धंदद्यात्ग्रीवायांतुदशैवतु बाह्वोश्चैवशतंदद्यात्दशचैवांगुलीषुच॥ उरसि

स्वरूपं केशवं तर्पयामीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एकशफं च ब्रह्मादिभ्यो दद्यात् मंत्रस्तु॥ ब्र
ह्मविष्णुमहादेवा यमश्चैव सकिंकरः। बलिं गृहीत्वा कुर्वंतु प्रेतस्य च शुभां गतिमिति। तिलाज्यए
यानु होमः यत्यादिनोक्तः। ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुघृतगुडानि च निवेद्य पिंडा
नभ्यर्च्य तेषां प्रोक्षित्वा अग्नौ नव सप्त पंच वा विप्रान्निमंत्र्योपोषितेन जागरणं कृत्वा श्वोभूते पु
नर्विष्णुं पूजयित्वा एकोद्दिष्टविधिना श्राद्धं पंचकं करिष्य इत्युक्त्वा ब्रह्मविष्णुशिवयमप्रेतान्स्मरन्
विप्रानुपवेश्य प्रेतस्थाने चैकं विष्णुं स्मरन्नावाहनाद्यर्घ्ययुतं तच्छ्राद्धं कृत्वा तृप्तेषु तेषु स्वनादि कृ
त्वान्नशेषेण ब्रह्मणे विष्णवे शिवाय यमाय सपरिवाराय चतुरः पिंडान्दत्वा प्रेतनामगोत्रे स्मृ
त्वा विष्णुनाम्ना पंचमं दत्वाभ्यर्च्य तेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः। संतोष्य विप्रैः
प्रेताय तिलोदकमुपतिष्ठतामिति। सतिलमुदकं दापयित्वा भुंजीतेति। अत्र विशेषांतरं भट्टकृ
तांत्येष्टिपद्धतौ ज्ञेयं। सर्पहते तु वर्षपर्यंतं पूर्वेद्युरेकभक्तं पूर्वं शुक्लपंचम्यामुपवासं नक्तं वा कृत्वा पि
ष्टमयं नागमनंतं वासुकिं शंखपद्मकंबलकर्कोटकाश्वतरधृतराष्ट्रशंखपालकालियतक्षक
कपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान्संभोज्य वत्सरांते हैमं नागं गां च प्रत्यक्षां दद
त्वा नारायणबलिं कुर्यात्। मूलं तु हेमाद्रौ ज्ञेयं। बोधायनसूत्रे सर्पमृतानां नमोस्तु सर्पेभ्य इति
सूत्राहुतीर्हुत्वोदके मृतानां समुद्राय वयुनायेति हुत्वेति। क्रियां कुर्यादिति शेषः॥ व्यासः॥ सौव
र्णभारनिष्पन्नं नागं कृत्वा तथैव गां। व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात्। हेमाद्रौ भ
विष्ये। पंचम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत्। क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत्। प्रा
यश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुनेति। अपरार्के स्मृत्यंतरे॥ न दैवं शुध्यति प्रेतो नारायणबलौ कृ
ते। यो ददाति क्रियां पिंडं तस्मै प्रेताय वै सुतः तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः। विष्णुश्राद्ध
समाप्तौ तु त्रयोदश्यां दिनत्रयं अशौचं पिंडदः कुर्यान्नतु तद्बंधुगोत्रजाः। यस्यैव मृत्युकाले तु व्यु
च्छिन्ना संततिर्भवेत् सर्वस्मिन्नरके नित्यं पंकमग्नः करीषवत् इत्युपक्रम्य। बलिं नारायणं कुर्यात्त
स्योद्देशेन भक्तिमानिति गारुडोक्तेः पुत्रस्याप्यपुत्राद्यैः कार्य इत्युक्तं देवयाज्ञिकेन॥

॥अथ विधानाशौचाभावः॥ ॥यत्यादिपुत्रमृतादिषु॥ त्र
याणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः। यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति
ब्राह्मात्॥ उशनाः॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणं तु
विधीयते। सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः। त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते। त
त्संस्कारं वक्ष्यामः॥ दत्तात्रेयः॥ एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियां। न कुर्याद्वार्षिकादन्यत्
ब्रह्मीभूताय भिक्षवे। वार्षिकादर्वाक् मासिकादिनिषेधो न तु दर्शादेः। संन्यासिनोप्या
ब्दिकादि पुत्रः कुर्याद्यथाविधीति। वायवीयोक्तेः॥ पृथ्वीचंद्रोदये प्रजापतिः॥ अहन्येकाद
शे प्राप्ते पार्वणं तु विधीयते। सपिंडीकरणं तस्य न कर्तव्यं सुतादिभिः। एकपिंडमादिनि
षेधानुवादेन पार्वणोक्तेः। ततस्यानापन्नत्वं पार्वणस्य गम्यते॥ निर्णयामृते निर्णयादेरेकृ
त्वोद्देशमितिवत्। इदं वार्षिकादिविधानं च त्रिदंडिपरं। एकदंडीपरमहंसादीनां तु न किमपि
कार्यं। पूर्वोक्तोशनोवाक्ये। त्रिदंडीग्रहणादिति शूलपाण्याद्यो गौडाः॥ त्रिदंडिशब्देन म

नोदंडादिदंडत्रयोक्तेः। यस्मैतेनिपतन्तांदंडाः सन्निदंडोतेचोच्यते। इतिस्मृतेः। बौधायनः। नारायण
बलिश्चास्यकर्तव्योद्वादशेहनि॥ अस्यपार्वणेनसमुच्चयोज्ञेयः। तत्रैवसएवाह। कृत्वाविष्णो
र्महापूजांपायसंविनिवेदयेत्। अग्नौहुत्वातुतच्छेषंव्याहृतीभिःसमाहितः। यतीन्वाहंस्या
न्साधून्वानिमंत्र्यद्वादशावरान्। अभ्यर्च्यगंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः। संभोज्यहव्येनान्ते
नदक्षिणांचनिवेदयेत्। त्रयोदशंद्विजश्रेष्ठमात्मसंज्ञंयतेंद्रियं। विष्णुंयथातथाभ्यर्च्यपाद्याद्यै
श्चविधानतः। दद्यात्पुरुषसूक्तेनगंधपुष्पादिकंक्रमात्। वस्त्रालंकरणादीनियथाशक्तिप्र
दापयेत्। उच्छिष्टसन्निधौतस्यदर्भानास्तीर्यभूतले। भूर्भुवःस्वःस्वधायुक्तैस्तस्मैदद्याद्बलि
त्रयं। अश्वमेधसहस्रस्यवाजपेयशतस्यच। यत्फलंतल्लभेदेवंयत्करोतियतिक्रियां॥ शौन
कस्तु॥ शौनकोहंप्रवक्ष्यामिनारायणबलिंपरं। चंडालादुदकात्सर्पात्ब्राह्मणाद्वैद्युताद
पि॥ दंष्ट्रिभ्यश्चपशुभ्यश्चरज्जुशस्त्रविषाश्मभिः। देशांतरमृतानांचमृतानांचैवसावनः [illegible]
जीवच्छ्राद्धंमृतानांचकनिष्ठानांतथैवच। यतीनांयोगिनांपुंसामन्येषांमोक्षकांक्षिणां
उत्पाद्याद्यक्षयार्थायद्वादशेहनिकारयेत्। द्वादश्यांश्रवणेवांतेपंचम्यांपर्वणोस्तु [illegible]
पूर्वोक्तंसर्वंविधिमुक्त्वातोदेवेतिषड्भिः पुरुषसूक्तेनचमंत्रैःपायसंहुत्वाकेश [illegible]
दशनामभिस्तद्रूपिणेपित्रेद्वादशविप्रानसंभोज्यतैरेवद्वादशपिंडान्दद्यादित्यभि [illegible]
युद्धमृतेतुप्रागुक्तं॥ कृतजीवच्छ्राद्धेमृतेसपिंडेत्वाशौचादिकार्यंनवा॥ तदुक्तंहेमा [illegible]
मृतेकुर्यान्नकुर्याद्वाजीवन्मुक्तोयतःस्वयं॥ कालेगतेद्विजेभूमौखनेद्वापिदहे [illegible]
समशेषंचकृत्वादोषोनविद्यते जीवत्यपिविशेषस्तत्रैवोक्तः। नित्यनैमित्तिकं [illegible]
संत्यजेत्तथा। बांधवेपिमृतेतस्यनैवाशौचंविधीयते। सूतकंचनसंदेहः स्नानम [illegible]
ति॥ सद्यःशौचंविषयंच। योगमार्गरतोपिवेतितस्याप्युक्तेः तथा॥ आहिताग्न [illegible]
तदस्थिदाहात्पूर्वंपुत्रादीनामाशौचं। संध्यादिकर्मलोपश्चनास्ति। अनग्नि [illegible]
चादिद्विजातिषु। दाहादग्निमतोविंद्याद्विदेशस्थेमृतेसतीतिस्मृतेः॥ आ [illegible] चे
गपिदशाहः। संस्कारांगंचभिन्नोदशाहः इतिधूर्तस्वामीरामांडारश्च॥ त [illegible] गे
द्वयोर्विरोधाच्च॥ एतत्प्रागुक्तं। अत्रदेहस्यैवसंभवेदाह। आहिताग्नौविदे [illegible] तु च
लेवरं। निर्धेयंनाग्निभिर्यावत्तन्नदीयेरपिदह्यते। इतिब्राह्मोक्तेः॥ तद [illegible] तु जी
शे। विदेशमरणेस्थीनिआहृत्याभ्यज्यसर्पिषा। दाहयेद्वहिंसाच्छाद्य [illegible] नेमित्त
नैस्थामलाभेपर्णानिशकलान्युक्तयावृता दाहयेदस्थिसंख्यानि [illegible] वेश्वती
हेमाद्रौषड्विंशन्मते॥ कुर्याद्दर्भमयंप्रेतंदर्भैस्त्रिशतषष्टिभिः। पा [illegible] तस्मादपि
ल्पावैवंप्रकीर्तिताः। भविष्ये॥ चत्वारिंशतशिरःस्थानेग्रीवायां [illegible] न्तेश्रात्म
तेदद्याद्विंशतिंचतथोरसि। उदरेविंशतिंदद्यात्त्रिंशतंकटिदे [illegible] चाह शौनव
त्रिंशतंजानुजंघयोः। पादांगुलीषुदशवैएषाचप्रेतकस्यना॥ [illegible] चम्यांवापि
रस्यशीर्षपर्यंदद्याद्ग्रीवायांतुदशैवतु बाह्वोश्चैवशतंदद्यात् [illegible] त्वरेत्कृच्छ्राश्च

त्रिंशतं दद्यात्त्रिंशतं जठरोदरे। द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव तु। ऊर्वोश्चैव शतं दद्यात्त्रिंशतं
जंघयोर्द्वयोः। पादांगुलीषु दद्यात् एतत्प्रेतस्य कल्पनं। फले केनारिकेलं तु अलाबुं तालुके त
था। पंचरत्नं मुखे न्यस्य जिह्वायां कदलीफलं। चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकं। क
र्णयोर्नलपत्राणि केशे वटप्ररोहकाः। नालकं कमलानां तु अंत्रस्थाने विनिर्दिशेत्। मृत्तिकां तु
वसार्थां तु हरितालकगंधकौ शुक्रे तु पारदं दद्यात् पुरीषे पित्तलं तथा। संधीषु तिलपिष्टं तु मां
से स्याद्यवपिष्टकं मधु स्याल्लोहितस्थाने त्वचस्थाने मृगत्वचः। स्तनयोर्गुंजके देये नाशायां पु
नपत्रकं। कमलं नाभिदेशे स्यात् वृंताकं वृषणाश्रिते। लिंगे च रक्तमूलं तु परिधानं दुकूलकं
गोमूत्रं गोमयं गंधं सर्वौषध्यादि सर्वत इति। क्रियानुबंधे गारुडेप्येवमुक्त्वान्यदपि। घृतं नाभ्या
मदेयं स्यात्कौपीने च त्रपु स्मृतं। मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं। सिंदूरं नेत्रकोणेषु तां
बूलाद्युपहारकैः। सर्वौषधियुतं कृत्वा शुज्ञां चैव यथोदितां। इदं निरग्नेरपि॥ तत्रैव वृद्धमनुः
सोपि तस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्। रहस्य
ति॥ यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरान्। कुशपुत्रकदाहेन तस्य स्यादवधारणा॥ भ
विष्ये॥ पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकं। कु
र्यात्तस्य तु संस्कारं यथोक्तविधिना ततः। तदादीन्येव सर्वाणि प्रेतकार्याणि कारयेत्। द्वादशा
ब्दप्रतीक्षा पितृभिन्नविषये इति मदनरत्ने उक्ता। गल्लकारिकायां तु॥ तस्य पूर्ववयस्कस्य विंशतो
र्ध्वं ततः क्रिया। ऊर्ध्वं पंचदशाद्वा तु मध्यमे वयसि स्मृताः। द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृ
ता। चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतः। कुशैः प्रतिकृतिं दग्ध्वा कार्यो शौचादिका
क्रियेत्युक्तं पराशरः॥ देशांतरगतो नष्टस्तिथिर्न ज्ञायते यदि। कृष्णाष्टमी ह्यमावास्या कृष्णा
चैकादशी तथा। उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्॥ इदं मासज्ञाने॥ तत्राहिताग्नेः पूर्णा
शौचं॥ अनाहिताग्नेस्तु त्रिरात्रं। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयं। तदलाभे प
लाशानां वृंतैः कार्यः पुमानपि। वेष्टितव्यस्तया पत्या तत्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण
बध्वा तु मलेपश्च यवैस्तथा। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोका
य स्वाहेत्युक्त्वा सबांधवैः। एवं पर्णशवं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः। इदं त्रिरात्रं
न दशाहमध्ये दाहे तत्र शेषितकालशेष्या स्यादित्युक्तेः॥ किंतु तदूर्ध्वं। तत्र पत्नीपुत्रयोः पूर्वमगृ
हीताशौचयोर्दशाहाद्येव। गृहीताशौचयोस्तु त्रिरात्रं। पत्नी मृतौ भर्त्तुश्चैवं। सपत्न्योश्चैव
मिति स्मृत्यर्थसारे। अन्यसपिंडानां तु सर्वत्र पर्णशरदाहे त्रिरात्रं॥ तदाहांगिरः॥ देशांतरस्थ
तं श्रुत्वा नाशौचं चेत्कथंचन। कालात्ययेपि कुर्वीत दाहकाले दिनत्रयमिति स्मृत्यर्थसारे तु॥
गृहीताशौचानां स्नानमात्रमुक्तं। वह्वृचपरिशिष्टेपि॥ ॥अथातीतसंस्कारः
सर्वे तद्दशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात्क्रमेण यथा
कालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः कर्मांगं त्रिरात्रमिति॥ षडशीतावप्येवं। वि
श्वादर्शे तु। प्रतिकृतिदहने त्वग्निदेशात् त्रिरात्रमित्युक्तं। द्वादशवर्षादिप्रतीक्ष्योत्तरं दाहे तु पु

त्रादीनां सर्वेषां त्रिरात्रमेवेति कल्पतरुदिवोदासादयः॥ ॥ अथ प्रेतसंस्कारे कालः॥ हेमाद्रौ गार्ग्यः॥ अन्त्यस्य शवसंस्कारे दिनं नैव विशोधयेत्। आशौचमध्ये संस्कारे दिनं शोध्यं तु संभवे। आशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः। संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि। प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणं कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनत्रयं। वाराहे॥ चतुर्थाष्टमगे चंद्रे द्वादशे च विवर्जयेत्। प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा। करणे विष्टिसंज्ञे च शनैश्चरदिने तथा। त्रयोदश्यां विशेषेण जन्मतारात्रये तथा। जन्मदशमैकोनविंशति॥ जन्मतारात्रयं॥ भारते॥ नक्षत्रे तु न कुर्वीत यस्मिन्जातो भवेन्नरः। न प्रौष्ठपदयोः कार्यं तथाग्नेये च भारत॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्। कश्यपः। भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च। प्रेतकृत्येति दुष्टानि धनिष्ठाद्यं च पंचकं फाल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः। आषाढद्वे विशाखा च भानि द्विचरणानि च। एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत्॥ ज्योतिर्नारदः॥ चतुर्दशीं तिथिं नंदां भद्रां शुक्रारवासरौ। सितेज्ययोरस्तमयं व्यंघ्रिभं विषमांघ्रिभं॥ शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमं। वसूत्तरार्द्धतः पंचनक्षत्रेषु त्रिजन्मसु। पौष्णब्राह्मद्वयोश्चैव दहनात्कुलनाशनं॥ अस्यापवादमाह। तत्रैव वैजवापः॥ प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि। नक्षत्रतिथिवारादि शोधनीयं न किंचन॥ युगमन्वादिसंक्रांतिदर्शप्रेतक्रिया यदि। दैवादापतिता तत्र नक्षत्रादि न शोधयेत्॥ विश्वप्रकाशेपि॥ गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे। नातीतः पितृमेधः स्याज्जयां गोदावरीं विना॥ दानमपि तत्रैवोक्तं॥ भद्रायां भूमिदानं स्यात्त्रिपादर्क्षे हिरण्यदः। वारेषु तत्र दुष्टेषु वासोदानं विधीयते। धनिष्ठापंचके प्राप्ते पंचरत्नानि दापयेत्। एकाशीतिपलं कांस्यं तदर्द्धं वा तदर्द्धकम्॥ नवषट्त्रिपलं वापि दद्याद्धि शापशांतिनश्यत्यलं प्रसंगेन॥ हेमाद्रौ वृद्धमनुः। अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदैहिकं। प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च। जीवन्यदि समागच्छेद्घृतकुंभे निमज्ज्य तं। उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु। स्नात्वोद्वहेत्तां भार्यामन्यां वा तदभावतः। अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। अथैंद्राग्नेन पशुना गिरिं गत्वा च तत्र तु। इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः। अनाहिताग्नेस्तु चरुः। मृतवार्तामात्रश्रवणे इत्याश्वलायनः। सुरभयस्त्वयस्मिन्जीवे मृतशब्द इति। यस्य तु जीवत एव मृतिवार्त्तां श्रुत्वा स्त्रिया सहगमनं कृतं तदानहैधमेव। भर्तृमरणज्ञानस्यैव निमित्तत्वात्। प्रमाणत्वस्य गौरवेणायुक्तत्वाच्चेति केचित्। तन्न॥ मरणज्ञानस्य निमित्तत्वे अतीतानागतयोरपि तथात्वापत्तेः। भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च। तस्मादाशौचवत्। ज्ञानमरणस्यैव निमित्तत्वं। न चात्र तदस्ति। परं काम्यं मरणमस्तु। अत आत्महननदोषो नेति तातपादाः। तथा सर्पसंस्कारः कृते त्रिरात्रमाशौचं। तद्विधिं चाह शौनकः॥ अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं। सिनीवाल्यां पौर्णमास्यां पंचम्यां वापि कारयेत्॥ कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि। वधं प्रत्यापयेमापी चरेत्कृच्छ्रांश्चतुर्दे

त्रिंशतं दद्यात्त्रिंशतं जठरोदरे। द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव तु। ऊर्वोश्चैकशतं दद्यात्त्रिंशतं
जंघयोर्द्वयोः। पादांगुलीषु दश दद्यादेतत्प्रेतस्य कल्पनं। मस्तके नारिकेलं तु अलाबुं तालुके त
था। पंचरत्नं मुखे न्यस्य जिह्वायां कदलीफलं। चक्षुषोर्लुकपर्दौ द्वौ नासिकायां तु कालकं। क
र्णयोर्जल्पपत्राणि केशे वटप्ररोहकाः। नालकं कमलानां तु श्रोत्रस्थाने विनिर्दिशेत्। मृत्तिकां तु
वसाधां तु हरितालकगंधकौ। शुक्रे तु पारदं दद्यात्पुरीषे पित्तलं तथा। संधीषु तिलपिष्टं तु मां
से स्याद्यवपिष्टकं। मधु स्याल्लोहितस्थाने त्वचस्थाने मृगत्वचः। स्तनयोर्गुंजके दद्यान्नाशायां श
तपत्रकं। कमलं नाभिदेशे स्यात्वृंताकं वृषणाश्रिते। लिंगे च रक्तमूलं तु परिधानं दुकूलकं
गोमूत्रं गोमयं गंधं सर्वौषध्यादि सर्वत इति। क्रियानुबंधे गारुडेप्येवमुक्त्वान्यदपि। घृतं नाभ्यां प्र
देयं स्यात्कौपीने च त्रपु स्मृतं। मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं। सिंदूरं नेत्रकोणेषु तां
बूलाद्युपहारकैः। सर्वौषधियुतं कृत्वा पूजां चैव यथोदितां। इदं निरग्नेरपि॥ तत्रैव वृद्धमनुः।
प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्। वृहस्प
तिः॥ यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरान्। कुशपुत्रकदाहेन तस्य स्यादवधारणा॥ भ
विष्ये॥ पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकं। कु
र्यात्तस्य तु संस्कारं यथोक्तविधिना ततः। तदादीन्येव सर्वाणि प्रेतकार्याणि कारयेत्। द्वादशा
ब्दप्रतीक्षा पितृभिन्नविषयेति मदनरत्ने उक्तं। गृह्यकारिकायां तु॥ तस्य पूर्ववयस्कस्य विंशत्यो
र्ध्वं ततः क्रिया॥ ऊर्ध्वं पंचदशाद्वा तु मध्यमे वयसि स्मृताः। द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृ
ता। चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः। कुशैः प्रतिकृतिं दग्ध्वा कार्या शौचादिका
क्रियेत्युक्तं पराशरः॥ देशांतरगतो नष्टस्तिथिर्न ज्ञायते यदि। कृष्णाष्टमी ह्यमावास्या कृष्णा
चैकादशी तथा। उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्॥ इदं मासज्ञाने॥ तत्राहिताग्नेः शर्णं
शौचं॥ अनाहिताग्नेस्तु त्रिरात्रं। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयं। तदलाभे प
लाशानां वृंतैः कार्यः पुमानपि। वेष्टितव्यस्तथा पत्नात्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण
बध्वा तु प्रलेप्तव्यो यवैस्तथा। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोका
य स्वाहेत्युक्त्वा सबांधवैः। एवं पर्णशवं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः। इदं त्रिरात्रं
न दशाहमध्ये दाहे तत्र शेषिते कालः शुध्येदित्युक्तेः। किंतु तदूर्ध्वं। तत्र पत्नीपुत्रयोः पूर्वमगृ
हीताशौचयोर्दशाहाद्येव। गृहीताशौचयोस्तु त्रिरात्रं। पत्नीमृतौ भर्तुश्चैवं। सपत्न्योश्चैव
मिति स्मृत्यर्थसारे। अन्यसपिंडानां तु सर्वत्र पर्णशरदाहे त्रिरात्रं॥ तदाहांगिरः॥ देशांतरमृ
तं श्रुत्वा नाशौचं चेत्कथंचन। कालात्ययेपि कुर्वीत दाहकाले दिनत्रयमिति स्मृत्यर्थसारे तु॥
गृहीताशौचानां स्नानमात्रमुक्तं। वृद्धचपरिशिष्टेपि॥ ॥अथातीतसंस्कारः
सवेदं तद्दशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वं माहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात्क्रममेव यथा
कालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः कर्मांगं त्रिरात्रमिति॥ षडशीतावप्येवं। वि
श्वादर्शे तु। प्रतिकृतिदहनेप्यदेशात्त्रिरात्रमित्युक्तं। द्वादशवर्षादिप्रतीक्षोत्तरं दाहे तु उ

त्रादीनां सर्वेषां त्रिरात्रमेवेति कल्पतरुदिवोदासादयः ॥ ॥ अथ प्रेतसंस्कारे कालः ॥
हेमाद्रौ गार्ग्यः ॥ अन्यस्य शवसंस्कारे दिनं नैव विशोधयेत् । अशौचमध्ये संस्कारे दिनं शोध्यं न संभवे । अशौचविनिवृत्तौ चेत्पुनः संक्रियते मृतः । संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि । प्रेतकार्याणि कुर्वीत श्रेष्ठं नन्दोत्तरायणम् । कृष्णपक्षश्च तत्रापि वर्ज्यमेतत्तु दिनत्रयम् । वाराहे ॥ चतुर्थी षष्ठमेकं च द्वादशीं च विवर्जयेत् । प्रेतकृत्ये व्यतीपाते वैधृतौ परिघे तथा । करणे विष्टिसंज्ञे च शनैश्चरदिने तथा । त्रयोदश्यां विशेषेण जन्मताराद्वये तथा । जन्मदशमैकोनविंशति ॥ जन्मताराद्वयं ॥ भारते ॥ नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रौष्ठपदयोः कार्यं तथाग्नेये च भारत ॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् । कश्यपः । भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च । प्रेतकृत्ये तु दुष्टानि धनिष्ठाद्यं च पंचकं फाल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः । आषाढे द्वे विशाखा च भानि द्विचरणानि च । एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत् ॥ ज्योतिर्नारदः ॥ चतुर्दशीं तिथिं नंदां भद्रां शुक्रारवासरौ सितेज्ययोरस्तमयं घ्रिभं विषमांघ्रिभं ॥ शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमं । वसूत्तरार्द्धतः पंचनक्षत्रेषु त्रिजन्मसु । पौष्णब्राह्मसंयोश्चैव दहनात्कुलनाशनं ॥ अस्यापवादमाह । तत्रैव वैजवापः ॥ प्रेतस्य साक्षाद्दग्धस्य शान्तेल्वेकादशेह्नि । नक्षत्रतिथिवारादिशोधनीयं न किंचन ॥ युगमन्वादिसंक्रांतिदर्शेषु प्रेतक्रियापदि दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥ विश्वप्रकाशेपि ॥ गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे नातीतः पितृमेधः स्यादूर्ध्वं गोदावरीं विना ॥ दानमपि तत्रैवोक्तं ॥ भद्रायां भूमिदानं स्यात्त्रिपादर्क्षे हिरण्यदः । वारेषु तत्र दुर्गांतु वासोदानं विधीयते । धनिष्ठापंचके प्रेते पंच रत्नानि दापयेत् । एकाशीतिपलं कांस्यं तदर्द्धं वा तदर्द्धकम् ॥ नव षट् त्रिपलं वापि दद्याद्विप्राय शक्तितः इत्यलं प्रसंगेन ॥ हेमाद्रौ वृद्धमनुः । अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकं । प्राप्य श्वितमसौ स्नात्वा तं कृत्वाग्नौ नादधीत च । जीवन्यदि समागच्छेद्घृतकुंभे निमज्य तं । उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु । स्नात्वोद्वहेत्तां भार्यां अन्यां वा तदभावतः । अग्निमाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् । अथैंद्राग्नेन पशुना गिरिं गत्वा च तत्र तु । इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः । अनाहिताग्नेस्तु चरुः । मृतवार्त्तामात्रश्रवणे इत्याश्वलायनः । सुरभपत्रे व यस्मिन् जीवेन्मृतशब्द इति । यस्य तु जीवत एव मृतिवार्त्तां श्रुत्वा स्त्रिया सहगमनं कृतं तन्दानहेतुमेव । भर्तृमरणज्ञानस्यैव निमित्तत्वात्प्रमाणत्वस्य गौरवेणाप्रक्तत्वाच्चेति केचित् । तन्न ॥ मरणज्ञानस्य निमित्तत्वे अतीतानागतयोरपि तथात्वापत्तेः । भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च । तस्मादशौचवत् ज्ञानमरणस्यैव निमित्तत्वं । न चात्र तदस्ति । परं काम्यं मरणमस्तु । अतश्चात्महननदोषोस्तीति तातपादाः । तथा सर्पसंस्कारः कृते त्रिरात्रमाशौचं । तद्विधिं चाह शौनकः ॥ अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं । सिनीवाल्यां पौर्णमास्यां पंचम्यां वापि कारयेत् ॥ कृते सर्पवधो विप्रः पूर्वजन्मनि वा यदि । वधं प्रख्यापयेन्मापी चरेत्कृच्छ्रांश्च तुर्दे

श विभागपलो हैमं दंडं च तन्मूल्यं वापि दापयेत्। याज्ञवल्क्योपि॥ उरगेष्वायसो दंड इति। मूल्यमाह॥
निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसं॥ अनुमत्यादिकर्तॄणां निष्कमर्धं न दंडकं। दंडस्वर्णा
प्ययोः शक्त्याज्ञेयं। संस्कारमाह। पिष्टेन व्रीहिगोधूमतिलपिष्टेन वा पुनः। कृत्वा सर्पाकृतिं शू
र्पे निधाय प्रार्थयेद् द्विजः॥ एहि पूर्वं मृतः सर्प अस्मिन्पिष्टे समाविश। संस्कारार्थमहं भक्त्या प्रा
र्थयामि समासतः। वस्त्रोपवीतगंधाद्यैः संपूज्य च हरेद् द्विजः॥ कुर्यात्संस्कारसंकल्पं प्राणाया
मपुरःसरं। यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्मसु। लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमा
चरेत्। ततोग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः। चितिं कृत्वाथ संस्तीर्य कुशैराग्नेयकाग्र
कैः। पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत्। कृत्वेध्माधानमाघारौ चक्षुषी च यथाविधि।
सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः। स्रुवेणाज्यं जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः। सर्पा
स्ये जुहुयादाज्यं व्याहृत्या च समग्रया। आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत्। चमसस्थैर्जलैः
सर्पं व्याहृत्याभ्युक्ष्य पाणिना। अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत्॥ उपतिष्ठेद्दह्यमा
नं नमोस्तु सर्पमंत्रतः। ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया॥ पूर्वजन्मनि वा सर्प तत्त्वं क्ष
न्तुमर्हसि। क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिर्जलैः। नास्थिसंचयनं कुर्यात्स्नात्वा च
स्वगृहं व्रजेत्। ब्रह्मचर्यादिकं कार्यं त्रिरात्राशौचमिष्यते। सचैलं तु चतुर्थेह्नि स्नात्वा विप्रान्
समर्चयेत्। सर्पोनंतस्तथा शेषः कपिलो नाग एव च। कालिकः शंखपालश्च भूधरश्चेति नाम
भिः गंधपुष्पासनैर्धूपदीपाद्यैरर्चयेद् द्विजान्। घृतपायसभक्ष्यैश्च द्विजानष्टौ च भोजयेत्। एवं
कृते विधानेन सर्पसंस्कारकर्मणि। सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशय इति॥

॥इति सर्पसंस्कारः॥ ॥कश्चित्तु जीवतोप्यन्त्यकर्माशौचं कार्यम्। यथाप्रायश्चित्ता
निच्छोः पतितस्य घटस्फोटे॥ पतितस्योदकं कार्यं सपिंडैर्बांधवैः सह। निंदितेहनि सायाह्ने
ज्ञात्यृत्विग्गुरुसन्निधौ। दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्तदा। अहोरात्रमुपासीरन्नाशौचं बां
धवैः सहेति मनूक्तेः। निंदिते रिक्तादौ। अपरार्के वसिष्ठोपि॥ वेदविप्लावकः शूद्रयाजकोत्तम
वर्णो वर्णपतितास्तेषां पात्रनिनयनमपात्रसंकरादुक्तं। पात्रमादायसोऽसवर्णो दासो वा बंधु
रसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान्दर्भान्लोहितान्वोपस्तीर्य पूर्णपात्रमस्मै
निनयंति नेतारस्त्वस्य प्रकीर्णकेशा ज्ञातयोन्वालभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन्नत
ऊर्ध्वं तेन धर्ममपेयुर्लब्धमीणस्तं धर्मयं नरति। उत्तमवर्णो ब्राह्मणादयस्तेषां वर्गः समूहस्त
स्मात्पतिता ब्रह्महादयः अपात्रसंकरः। कुत्सितपात्रसमूहः। प्रवृत्ताग्राश्छिन्नाग्रायाः स्वैरं
येच्छं धर्मादिकार्यं कुर्युः। अस्माद्वचनसामर्थ्यात्पात्रनिनयनात् प्राक्पतितज्ञातीनां धर्म
कार्येष्वधिकारो नास्तीत्यपरार्कः॥ तस्य विधागृह्ये यो नित्यं वधार्हः संनिपात्य सर्वाण्युदका
दिप्रेतकार्याणि कुर्युः। पात्रं चास्य विपर्यस्येयुर्दासः। कर्मकरो वाऽवकरादमेध्यं पात्रमा
नीय दासीघटात् पूरयित्वा दक्षिणामुखः। पदा विपर्यस्येदमुदकं करोमीति नामग्राहं सर्वे
ऽन्वालभेरन्। प्राचीनावीतिनो मुक्तशिखा विधागृह्यो यो नित्यं बद्धाश्च वीक्षेरन्। अप उपस्पृ

ग्रामं च विशेयुरिति गौतमोक्तेश्च। उदकादिमुक्तेर्दाहनिवृत्तिः तेन कार्याण्येकादशाहश्राद्धं
नि। दास्याहृतो वा घटो दासीघटः। तेनोदकेनामेध्यपात्रं पूरयित्वा दासादिर्मुक्तं वामपादेन कु
र्यादिति हरदत्तः। अत्र नामग्राहवचनमुदकादि तेन कार्यं तद्वर्ज्यत्वार्थं तेन तत्तूष्णीं भवति॥ एत
त्प्रायश्चित्तानिच्छोः। तस्य गुरोर्बांधवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनः पुन
राचार्यं लभस्वेति संपद्येत। मध्यन्नवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येदिति शंखोक्तेः। जीवं
मेवोद्दिश्य पिंडोदकश्राद्धानि नाम्ना दद्यादित्यपरार्के। कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्र
हविधिमाह गौतमः॥ यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुंभमयं पात्रं पुण्यतमाद्ध्रदात्पूरयित्वा
स्रवंतीभ्यो वा तत एनमुपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्प्रतिगृह्य जपेच्छांता द्यौः शांता पृथिवी
शांतं विश्वमंतरिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समंदीभिः कूष्मां
डीभिश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां वाचार्याय यस्य तु प्राणांतिकं प्रायश्चित्तं स मृतः शुध्येत्। स
र्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरेतदेव शांत्युदकं सर्वेषूपपातकेष्विति। घटस्फो
टोत्तरं प्राणांतिकप्रायश्चित्ते कृते तु मृत एव शुध्येन्न तत्र संग्रहविधिः। अत्र तेन विनापि प्रेतकर्म
कुर्यादित्यर्थः। उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः॥ याज्ञवल्क्यः॥ चरितव्रत आ
याते निनयेरन्नवं घटं जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः। कृतघटस्फोटस्यैवायं परिग्रहवि
धिरिति मिताक्षरायामपरार्के च। अन्यथा प्रायश्चित्तमात्रेणैतत्प्रसंगात्। मनुरपि घटस्फोटमुक्त्वा
निवर्तेरंश्च तस्मात्संभाषणसहासने इत्युक्त्वा। प्रायश्चित्ते तु चरिते पूर्णं कुंभमपां नवं तेनैव सा
र्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये इति तच्च कृतप्रायश्चित्तं॥ अपरार्के वसिष्ठोऽपि॥ पतितानां चरित
व्रतानां प्रत्युद्धारो यथाप्युदाहरंति॥ अग्रेऽभ्युद्धरंतो गच्छेयुः क्रीडंतो हसंतश्च। पश्चात्पातयितो
गच्छेच्छोचन्निव हरन्निवेत्याचार्यमातापितृहंतारस्तत्प्रसादादपगतपापा एषां तेषां प्रत्यासत्तिः
पूर्णाद्ध्रदात्सुवर्णाद्वा कांचनं पात्रं माहेयं वाद्भिः पूरयित्वापो हिष्ठीयाभिरेनमद्भिरभिषिंचेयुः सर्वेष
वाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इति। प्रत्युद्धारः परिग्रहः। तत्रोद्धरतो हसन्निवाग्रे
सरः स्यात्। पातयतो घटस्फोटं कुर्वतः शोचन्निव पश्चाद्गच्छेत्॥ मात्रा पित्रादिहंतॄणां परिग्रहो
न कार्यः। तत्प्रसादे सति चीर्णव्रतानां कार्यः। प्रवृत्तनिर्भरः॥ पुत्रजन्मनेत्यभिषेकोत्तरं। जातक
र्मादयः संस्काराः पुत्रजन्मवत्कार्या इत्यपरार्कप्राच्यौ॥ अत एव विज्ञानेश्वरः॥ घटेऽपवर्जि
ते ज्ञातिमध्यस्थो यवसं गवां प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रियेत्यत्र गवां भक्षणाभा
वे पुनर्व्रतं चरेदित्येतत्कृते एव चरितव्रतविधौ विशेषाय मिति वदन्घटस्फोटोत्तरं परिग्रहवि
धिः पुनः संस्कारो भवतीति सिद्धं॥ तथा जीवच्छ्राद्धे उक्तं हेमाद्रौ बौधायनः॥ तत्राशौचं दशाहं स्या
दित्यलं प्रसंगेन। एवं सापवादे आशौचे उक्ते प्रतिशाखं भिन्नेऽप्यंत्यकर्मणि साधारणं किंचिदुच्यते
तत्राधिकारिणः प्रागुक्ताः। सर्वाभावे धर्मपुत्रो वा कार्यः। अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रय
त्नतः। पिंडोदकक्रियाहेतोर्नामसंकीर्तनाय वेति मात्स्यवचनात्। गृह्यपरिशिष्टे। कर्तृदेशविष
ये विशेषो मैत्रायणीयगृह्यपरिशिष्टे। स्वगृहे वियते यत्र पिता यो यस्य तत्र सः। केनापि तत्र चारथ्य

मग्निपिंडोदकादिकं पुनःसंचयनात्प्राक्चेत्कुर्य्यादूर्ध्वं तन्नाचरेत्। स्वगृहे तत्र वा सर्वमेतत्कार्यं सपिंड
ने॥ तथा॥ भयस्थानेथवामार्गे मृतस्तत्र च संस्कृतः। न तिष्ठति जनः पिंडं नैनं तत्र च वर्त्तयेत्। मंत्रेण दा
होस्थिसंचयनं च संस्कारस्तस्मिन्कृते तत्र च। भयादिनास्थातुमशक्तौ यत्रयत्रैतत्कार्यं कृतं चे
त्तत्र तत्रैव पिंडोदकदानादि सपिंडनांतं समापयेदिति श्राद्धसंकल्पः। तदेवं परिशिष्टयोर्विरोधे यथा
चारमापन्नापदादिभेदेन व्यवस्था ज्ञेया। केचित्तस्यापवादत्वमाहुः। असगोत्रः सगोत्रो वा यदि
स्त्री यदि वा पुमान्। प्रथमेहनि यो दद्यात्स दशाहं समापयेत्। दद्यात्पिंडमिति शेषः॥ भविष्ये॥ प
त्राद्ये दीयते पिंडस्तत्र सर्वं समापयेत्॥ ब्राह्मेपि॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नं त
वसु चान्येषु स एव प्रदद्यादपि॥ विज्ञानेश्वरादयस्तु॥ केचित्तु अग्निदद्यादिति व्याचक्षते। सगोत्रो
वासगोत्रो वा योग्निं दद्यात्सखे नरः। सोपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेहनीति। दिवोदासीये व
चनाच्च। तत्रैव॥ दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनं। भूमिस्थं पितरं पुत्रो यद्दिदानं प्र
दापयेत्। तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि॥ तानि यथा॥ मोक्षं देहि हृषीकेश मोक्षं दे
हि जनार्दन मोक्षधेनुप्रदानेन मुकुंद प्रीयतां मम इति मोक्षधेनुमंत्रः। ऐहिकामुष्मिकं यच्च सप्तज
न्मार्जितं ऋणम् तत्सर्वं शुद्धिमायातु गामेतां ददतो मम इति। ऋणधेनोः॥ आजन्मोपार्जितं पा
पं मनोवाक्कायकर्मभिः तत्सर्वं शुद्धिमायातु गोप्रदानेन केशव इति पापधेनोर्भारते॥ शुक्ल
पक्षे दिवा भूमौ गंगायां चोत्तरायणे। धन्यास्तात मरिष्यंति हृदयस्थे जनार्दने। हेमाद्रौ वाराहे॥
व्यतीपातेथ संक्रांतिस्तथैव ग्रहणे रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् तदभावे तु गौरेव नरकोत्तारणाय वै। तदा यदि न श
क्नोति दातुं वैतरणीं तु गां। शक्तोन्यो रुक्तदा दत्त्वा दद्याच्छ्रेयो मृतस्य तु। मदनरत्ने जातूकर्ण्यः॥
उत्क्रांत्यादीनि दानानि दश दद्यान्मृतस्य तु। गोभूतिलहिरण्याज्यं वासो धान्यं गुडानि च। रू
प्यं लवणमित्याहुर्दश दानान्यनुक्रमात्। एतानि दश दानानि नरणां मृत्युजन्मनोः कुर्या
दभ्युदयार्थं तु प्रेतेपि हि परत्र वै॥ ब्राह्मे॥ ताम्रपात्रे तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु। सहिरण्यं च
यो दद्यात्कृष्णावित्तानुसारतः। सर्वपापविशुद्धात्मा लभते गतिमुत्तमां। उत्क्रांतिवैतरण्यौ च
दश दानानि चैव हि। प्रेते पितृत्वात्तेनं शवधर्मेण दापयेत्। तत्रैव परिशिष्टे॥ विष्णुमाराध्य स्वश
रणं तु पुण्यमंत्रान्जपेत्ततः। क्रियानिबंधे गारुडे त्वष्टौ दानान्युक्तानि। तुलसीसन्निधौ कृत्वा शाल
ग्रामशिलां तथा तिललोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिं गावो ह्येकैकं पा
वनं स्मृतमिति। दशदानवैतरणीधेनूत्क्रांतिधेनुदानादि मदनरत्नेपिपद्मेज्ञेयं। कर्त्रा
तकर्माधिकारार्थं त्रीन्कृच्छ्रान्कुर्यादिति तत्रैवोक्तं। अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तं वाराहे। दृष्ट्वा सुविह्वलं सेनं यममार्गानुसारिणं। प्रयाणकाले तु नरो मंत्रेण वि
धिपूर्वकं॥ मधुपर्कं त्वरन्गृह्य स्वयं मंत्रमुदाहरेत्। गृहाण चेमं मधुपर्कमाद्यं संसारनाशनक
रं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां दाहे च शांतिकरणं सुरलोकपूज्यं। अनेनै
व तु मंत्रेण दद्याच्च मधुपर्ककं। नरस्य मृत्युकाले तु परलोकसुखावहं॥ ॥अथदुर्मरणादि

दासीये॥ चांडालादिमृते विप्रे त्वंतरिक्षे मृतेपि वा कृच्छ्रातिकृच्छ्रचांद्रैस्तु शुद्धिस्तत्र प्रकीर्तिता
स्वजानीये जावालिः॥ शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिं। प्रायश्चित्तं प्रकुर्वीत ब्राह्मणः
पापशुद्धये। चांद्रायणं पराकं च प्राजापत्यं विशोधनं गृह्यकारिकायां॥ उदक्यासूतिकावापिय
दे प्रेतं स्पृशंति हि तस्यैव विधिरादिष्टो वाल्मीकेन महात्मना। एषः सूतिकोक्तः। मदनरत्ने स्मृत्यं
तरे॥ ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च। दुःस्पर्शस्पर्शने चैव खड्गादिमरणेपि च। श्वा
नकवादसंस्पर्शे कृमिकीटोद्भवेपि च। एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत्॥ कृच्छ्रांस्त्रिष
ट्पंचदशाश्चाब्दत्रयमथापि वा। शुध्येत तदानीं संपाद्य च स्वधर्मेण दाहयेत्॥ गृह्यकारिकायां
वध्वायां मरणे चैव त्रींस्त्रीन्कृच्छ्रान्प्रकल्पयेत्। सप्तांत्यजैस्तु संस्पृष्टो मृतो दैवात्कथंचन॥
एकत्रिंशता कृच्छ्रैः शुद्धिरुक्ता मनीषिभिः। कुणपत्वं तु दग्धे तु चितास्पृष्टांत्यजादिभिः। तत्स्प
र्शनं दूषणं च त्रिभिः कृच्छ्रैर्विशुध्यति धर्मप्रदीपे तु॥ चांडालसूतिकोदक्यास्पृष्टे प्रेते तथैव च
तत्पापविशुद्ध्यर्थं कृच्छ्रान्पंचदश चरेत् इत्युक्तं॥ मनुः॥ अस्वर्ग्या ह्याहुतिः सा स्यात् शू
द्रसंपर्कदूषिता॥ अत्रापि कृच्छ्रत्रयं। अस्पृश्यस्पर्शने चैवेत्युक्तेः॥ तत्रैव कर्मप्रदीपे। रात्रौ वा रा
त्रिशेषे वा म्रियेताथ द्विजातयः। दाहं कृत्वा प्रयत्नात् द्वौ पिंडौ निर्वपेत्सुतः॥ रजस्वला गर्भिण्या
दौ मृतौ तु वक्ष्यामः। निर्णयामृते मदनपारिजाते च धूमः। संध्यायां वा तथा रात्रौ दाहः पाथेय
केमे च नवश्राद्धं च नो कुर्यात्कृतं निष्फलतां व्रजेत्। एतद्दिनमृतस्य॥ दिनमृतस्यास्यादि
नरात्रिदाहनिषेधार्थमिति। अन्येपि पद्धतौ भट्टाः रात्रिनिषेधार्थं। यत्तु स्कांदे॥ यदि रात्रौ दहे
त्तस्य समाप्तिर्दहनस्य तु। परेह्नि तु दिने सूर्ये कार्या तस्योदकक्रिया। दग्धस्य तु न वै कार्या रात्रौ
जातूदकक्रियेति तन्निर्मूलं॥ रात्रिमृतस्य तु तत्रैव संग्रहे॥ रात्रौ दग्ध्वा तु पिंडं च कृत्वा वपन
वर्जितं वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रियेति॥ वपनं तु प्रातः॥ तच्च सर्वैः पुत्रैः कार्यं। ग
यायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते। आधाने सोमयागे च वपनं सप्तसु स्मृतमिति मिता
क्षरायां स्मृतेः। मरणस्थानं गत्वा नैमित्तिकमिदं। तदेवं संग्रहवचनेन परेद्युरुक्तमिष्यते इती
थेवत्। तेन कस्यचिद्दाहांगत्वोक्तिश्चिंत्या। मदनरत्ने गालवः॥ प्रथमेह्नि कर्तव्यं वपनं चानु
भाविभिः प्रेतस्य केशश्मश्र्वादि वापयित्वा प्रदाहयेत्। आशौचांते तु पुनः कार्यं। विधिवल्ला
ने। मदनपारिजातेप्येवं। तेन सर्वस्यास्य निर्मूलत्वोक्तिरेव। स्मृतिरत्नावल्यां॥ शावं रात्र्युषितं
चैव न कृच्छ्रान्कृत्वा दहेत्सुतः॥ मदनरत्ने गिराः। ऊर्ध्वोच्छिष्टाधरोच्छिष्टे त्वंतरिक्षमृतेपि
च। कृच्छ्रत्रयं प्रकुर्वीत आशौचे मरणेपि च॥ ॥अथ साग्नेर्विशेषः॥ कारिकायां॥
कल्पपक्षे प्रमीयेत यद्यन्हि प्रातराहुतीः॥ शेषास्तु जुहुयाद्दर्शपर्यंताः पक्षहोमवत्। प्रतिप
त्प्रातर्होमांता इत्यर्थः। यद्याहिताग्निरपरपक्षे म्रियेताहुतिभिरेनं पूर्वपक्षं हरेयुरित्याश्वला
यनोक्तेः। तदानीमेव जुहुयात्। प्रातःकालाहुतीरपि। सकृद्गृहीतमंत्रेषु भिन्नतंत्रे च होमयोः
दर्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु। छंदोगपरिशिष्टे। हुतायां सायमाहुत्यां दुर्बलश्चेद्गृ
हीभवेत्॥ प्रातर्होमस्तदैव स्याज्जीवेच्चेत्स्वपनेन वा। इदं दुष्कृतपक्षपरं॥ दुर्बलो मुमूर्षुः॥ त्रि

मग्निपिंडोदकादिकं पुनःसंचयनात्प्राक्चेत्कुर्यादूर्ध्वं तदाचरेत्। स्वगृहे तत्र वा सर्वं प्रेतकार्यं सपिंड
नः॥ तथा॥ मध्यस्थानेथवा मार्गे मृतस्तत्र च संकृतः। न तिष्ठति जनः पिंडं तत्र तत्र च वर्तयेत्। मंत्रेणदा
होस्थिसंचयनं च संस्कारस्तस्मिन्कृते तत्र च। भयादिना स्थानमशक्तौ यत्र यत्र प्रेतकार्यं कृतं चेत्
तत्र तत्रैव पिंडोदकदानादि सपिंडनांतं समापयेदिति श्राद्धसंकल्पः। तदेवं परिशिष्टयोर्विरोधे यथा
चारमापन्नापद्रादिभेदेन व्यवस्थाज्ञेया। केचित्तत्सापवादत्वमाहुः। असगोत्रः सगोत्रो वा यदि
स्त्री यदि वा पुमान्। प्रथमेहनि यो दद्यात्स दशाहं समापयेत्। दद्यात्पिंडमिति शेषः॥ भविष्ये॥ प
त्राघेदीयते पिंडस्तत्र सर्वं समापयेत्॥ ब्राह्मेपि॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नं न
वसु चान्येषु स एव प्रददात्यपि॥ विज्ञानेश्वरादयस्तु॥ केचित्तु अग्निदद्यादिति व्याचक्षते। सगोत्रो
वासगोत्रो वा योग्निं दद्यात्सखे नरः। सोपि कुर्यान्नवश्राद्धं धेनुं दशमेहनीति। दिवोदासीये व
चनाच्च। तत्रैव॥ दृष्ट्वा स्थानस्थमासन्नमधोन्मीलितलोचनं। भूमिस्थं पितरं पुत्रो यच्छिद्रानं प्र
दापयेत्। तद्धि शिष्टं गयाश्राद्धादश्वमेधशतादपि॥ तानि यथा॥ मोक्षदे हि हृषीकेश मोक्षदे
हि जनार्दन मोक्षधेनुप्रदानेन मुकुंद प्रीयतां मम इति मोक्षधेनुमंत्रः। ऐहिकामुष्मिकं यच्च सप्तज
न्मार्जितं ऋणम्। तत्सर्वं शुद्धिमायातु गामेतां ददतो मम इति। ऋणधेनोः॥ आजन्मोपार्जितं पा
पं मनोवाक्कायकर्मभिः। तत्सर्वं शुद्धिमायातु गोप्रदानेन केशव इति पापधेनौ भारते॥ शुक्ल
पक्षे दिवा भूमौ गंगायां चोत्तरायणे। धन्यास्तात मरिष्यंति हृदयस्थे जनार्दने। हेमाद्रौ वाराहे॥
व्यतीपाते तथा संक्रांतिस्त्वेवं ग्रहणे रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्। तदभावे तु गौरेव नरकोत्तारणाय वै। तदा यदि तु श
क्तो तिदातुं वैतरणीं तु गां। शक्तोन्योरुग्णादस्त्वा दद्याच्छ्रेयो मृतस्य तु। मदनरत्ने जातूकर्ण्यः॥
उत्क्रांत्यादीनि दानानि दद्याद्दद्यान्मृतस्य तु। गोभूतिलहिरण्याज्यवासो धान्यगुडानि च। रू
प्यं लवणमित्याहुर्दशदानान्यनुक्रमात्। एतानि दशदानानि न एणां मृत्युजन्मनोः। कृपा
दभ्युदयार्थं तु प्रेते पिहि परत्र वै॥ ब्राह्मे॥ ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु। सहिरण्यं च
यो दद्यात्श्रद्धावित्तानुसारतः। सर्वपापविशुद्धात्मा लभते गतिमुत्तमां। उत्क्रांतिवैतरण्योर्वा
दशदानानि चैव हि। प्रेते पितृत्वानमेनं शवधर्मेणादहयेत्। तत्रैव परिशिष्टे। म्रियमाणस्य क
र्णे तु पुण्यमंत्रान् जपेत्ततः। क्रियानिबंधे गारुडेत्वष्टौ दानान्युक्तानि। तुलसीसन्निधौ कृत्वा शाल
ग्रामशिलां तथा तिललोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिर्गावो एकैकं पा
वनं स्मृतमिति। दशदानं वैतरणीधेनूत्क्रांतिधेनुदानादि मदनरत्नादिषु परस्तो ज्ञेयं। कर्ता
न्तकर्माधिकारार्थं त्रीन्कृच्छ्रान्कुर्यादिति तत्रैवोक्तं। अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तं वाराहे। दृष्ट्वा सुविह्वलं सेनं यममार्गानुसारिणं। प्रयाणकाले तु नरो मंत्रेण वि
धिपूर्वकं॥ मधुपर्कं त्वरन्नस्य स्वस्थं मंत्रमुदाहरेत्। गृहाण चेमं मधुपर्कमाद्यं संसारनाशनक
रं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां देहेच शांतिकरणं सुरलोकपूज्यं। अनेनै
व सुमंत्रेण दद्याच्च मधुपर्ककं। नरस्य मृत्युकाले तु परलोकसुखावहं॥ ॥अथ दुर्मरणेरि

पत्नीमपश्विनीं। ईजेवहुविधैर्यज्ञैः सहभ्रातृभिरच्युत इत्यादीनि तानि पूर्वाग्निष्वेवाग्निहोत्रादि
पराणि। नत्वपत्नीकस्याधानार्थानि। क्रतुविधीनामाधानाप्रयोजकत्वात्। अपत्नीकस्याधा
नाप्रवृत्तिरिति मानवपरिशिष्टाच्च। सोमो न भवत्येव। अपत्नीकोप्यसोमप इति श्रुतेः। यत्तु भार
द्वाजापस्तंबसूत्रे॥ दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमिति। अस्यार्थः॥ पुनर्विवाहा
शक्तौ यदग्न्याधेयं पूर्वं कृतमस्ति तदात्मार्थमेवा न पत्न्यै दद्यादिति। ब्राह्मणभाष्यापरार्कौश
केणमांडारादितत्वमप्येवम्। त्रिकांडमंडनस्तु पक्षद्वयमाह। अन्येप्यपत्नीकस्याधानमाहुस्त
दाशयं न विद्मः। वृद्धयाज्ञवल्क्यः॥ आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहि
ताग्निरेकेन लौकिकेनापरो जनः॥ मनुः॥ एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीं॥ दा
दग्निहोत्रेण यज्ञपात्रैश्च धर्मवित्। कारिकायाम्॥ पत्नीमपि दहेदेवं भर्तुः पूर्वं मृताय
। अनग्निकां दहेदेवं कापालेन हविर्भुजा॥ छंदोगपरिशिष्टे॥ अनयैवावृता नारी दग्ध
याव्यवस्थिता। अग्निप्रदानमंत्रोस्या न प्रयोज्य इति स्थितिः॥ इदं छंदोगानामेव। तथा।
ग्निनैव दहेद्भार्यां स्वतंत्रां पतितां न चेत्। तदुत्तरेण पात्राणि दाहयेत्पृथगंतिके। इदमपि तेषामे
॥ आशौचप्रकाशे क्रतुः॥ विधुरं विधवां चैव कपालस्याग्निना दहेत्। ब्रह्मचारियतिं चैव द
दुत्तपनाग्निना। तुषाग्निना च दग्धव्याः कन्यका बाल एव च। अग्निवर्णं कपालं तु कृत्वा तत्र वि
ः क्षिपेत्। करीषादि ततो वह्निर्जातोयं सकपालजः। अनुपनीते यद्यपि जातारण्यग्निः के
उक्तस्तथापि तस्य कलौ निषिद्धत्वात्तेरयमेव ज्ञेयः॥ स्मृत्यंतरे॥ गृहस्थो ब्रह्मचारी च विधुरो वि
धवाः स्त्रियः। औपासनस्योत्तपनस्तुषाग्निश्च कपालजः॥ उत्तपनस्तु॥ दर्भाग्नेरग्निं तु प्रज्वाल्य
पुनर्दर्भैस्तु संयुतः। पुनर्दर्भैर्गतीयोग्निरेष उत्तपनः स्मृतः॥ यमः॥ यस्यानयति शूद्रोग्निं तृणं का
ष्ठहवींषि च। प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते॥ देवलः॥ चांडालाग्निरमेध्याग्निः सूतिका
ग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः॥ पश्चिमोत्तरपूर्वैस्तु यथा सं
ख्यं द्विजातयः॥ दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। अनुप्रातिलोम्येन क्रमः॥ पूर्वामुखस्तु
नेतव्यो ब्राह्मणो बांधवैर्गृहात्। उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा। दक्षिणाभिमु
खः शूद्रो निर्हर्तव्यः स्वबांधवैरित्यादि पुराणादित्यपरार्के॥ तेन त्रिशतश्लोक्युक्तोनुलोमक्र
मो हेयः॥ आश्वलायनः॥ ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुः॥ अथाधानोत्तरं द्वितीय
विवाहे कृते यजमानमरणे श्रौतस्मार्त्ताग्न्योः संसर्गः॥ बौधायनसूत्रे॥ अथ यद्याहिता
ग्निर्द्वैभार्यो विंदेत प्राक्संयोगात्क्षिप्रमेनौपासनं संपरिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृही
त्वा समिद्वत्यग्नौ जुहोति प्रमितं संकल्पे थामिति मिंदाकूती व्याहृतीश्च हुत्वाथैतमग्निं
मयं ते योनिर्ऋत्विय इति॥ समिधि समारोप्य गार्हपत्ये समिधमभ्यादधाति भवतं नः समनसा
विति गार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं च
तुर्गृहीत्वा विच्छिन्नः स्रुगिति संयहमग्नौ जुहोत्यथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मण एकहोते
ति दशभिरथ प्राचीनावीत्यन्वाहार्ये वचने जुहोति ये समाना मे सज्ञाना इति द्वाभ्यामथ तत्रैव

[illegible] एकैकस्य हूनेन पृथक् । पुरोनु
[illegible] समीपे तु पतिर्यदि । प्रेतस्या
[illegible] नक्रिया विच्छिन्नश्रौताग्ने
[illegible] नेरणी सन्निधाप्यारणीमथ
[illegible] हितायस्वर्गलोकमिमंत्रेण
नयन्त्विति मंत्रः ॥ अरणीमपावकां नष्टां दाहदेशापालसा पंथाः ॥ नष्टौ हुत्वा ततः कुर्यात्त्रेतमान्यार
तिक्रिया । नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् । आहरेद्दरणीं दृढं मनो ज्योतिर्जुषतान
नः यज्ञपार्श्वे ॥ यजमाने चिताहूढे पात्रन्यासे कृते सति । वर्षाद्यभिहते वह्नौ कथं कुर्वन्ति याज्ञि
काः तदर्द्धदग्धकाष्ठेन मंथनं तत्र कारयेत् तच्छेषालाभतोऽन्येन दग्धशेषेण वा पुनः कृत्वा
जं लौकिके वह्नौ दग्धशेषं दहेत्तु वा । अत्राग्निवसत्त्व परोक्षे शरीरोत्पत्तिः । शरीरे वासति
प्रेताधानेनाग्न्युत्पत्तिः । उभयाभावे तु प्रेताधानेऽनधिकाराद्दाहादिसंस्कारलोपः ॥ उदकदा
नाद्येव कार्यमिति केशवीकारस्तदयी पृष्ठुत्वाः ॥ तन्न ॥ निषेकाद्याः श्मशानांता येषां वै मंत्र
तः क्रिया इति विरोधात् । क्रियालोपगताये चेति निषेधात्तदभावे पलाशनाद्यैः कार्यः पुमानपी
त्यभावे विधानस्याग्न्यभावेऽपि साम्याच्च ॥ तेन मातरहुन्यभावेऽपि स्विष्टकृद्ध्यां जरणे क्ते रर्थत्वात्
प्रेताधाने । तद्दाहोऽपि भवत्येव प्रतिकृते रग्नौ नाच प्रेताधानप्रयोजकत्वाक्षते ॥ पत्न्या । अपि
एवं ॥ दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेः । यत्तु । द्वितीयां चैव यो
भार्यां दहेद्वैतानिकाग्निभिः । जीवंत्यां प्रथमायां तु सुरापानसमं स्मृतमिति । तदाधाने महान्
ष्विकृता विषयमिति विज्ञानेश्वरः ॥ मदनरत्ने ब्राह्मेऽपि । आहिताग्नेश्च दपत्नी पत्नी दौत्रि
यते शुचि । तस्या देहः सपिंडैश्च दग्धव्यस्त्रिभिरग्निभिः । पश्चान्मृतस्य देहस्तु दग्धव्यो लौकि
काग्निना । अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः । त्रिकांडमंडनस्तु विकल्पमाह । ज्ये
ष्ठायां विद्यमानायां द्वितीयापैस्त्वयोषिते । कामं निर्मथ्याग्निहोत्रेण वा न कथं चित्तयच्छति । स्त्री
मात्रं तु विशेषेण दग्धान्यं वैदिकाग्निभिः । विवाहादथवा तेषां यद्याधानमेवास्ति चेद्धधूरिति । अत्र
इतरच्च ॥ साग्नेः पत्नी मृता द्वौ पक्षौ पुनर्विवाहेच्छायां श्रौताग्निभिर्दाहादिरेकः पक्षः । भार्या
यै पूर्वमारिण्यै दत्त्वाग्नीनंत्यकर्मणि पुनर्दारक्रियां कुर्यात्पुनराधानमेव चेति मनूक्तेः । दाह
यित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेश्च । पुनर्विवाहाशक्तौ निर्मथ्येन
तारण्या पूर्वाग्निश्चैवाग्निहोत्राद्यादिकार्यमित्यन्यः ॥ आहार्येण नाहिताग्निपत्नीं चेत्याश्व
लायनोक्तेः ॥ भरद्वाजोऽपि ॥ निर्मथ्येन पत्नीमिति ॥ पूर्वाग्न्येकदेशेन दहेदिति यज्ञपार्श्वदेव
याज्ञिकादयः ॥ यानि च ॥ तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदिति श्रुतिः ॥ विष्णुः ॥ छंदोगप
रिशिष्टे च ॥ मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् । उपाधिनापि तत्कर्म यावज्जीवं समा
चरेत् । उपाधिर्हेमकुशपत्न्यादिः । अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपा
संते यावज्जीवमनुव्रताः । अपराके स्मृत्यंतरात् । कामायनोऽपि ॥ रामोऽपि कृत्वा सौवर्णीं सीता

जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत्। श्रोत्रे तूलूखलं दद्यात्पृष्ठे च मुशलं न्यसेत्। उरसि क्षिप्य दृ
षदं तंडुलाज्यतिलान्मुखे। श्रोत्रे च प्रोक्षणीं दद्यादंजनस्थालीं च चक्षुषोः। कर्णे नेत्रे मुखे घ्राणे
हिरण्यशकलं न्यसेत्। अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत्। प्रचेताः॥ स्नानं प्रेतस्य पुत्रा
द्यैर्विलेपैः स्रजनं ततः। नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत्॥ यमः॥ प्रेतं दहेच्छुभैर्गंधैः स्ना
पितं स्रग्विभूषितं॥ आश्वलायनसूत्रे। संस्थिते येनालंकारेण कुर्वंति केशश्मश्रुलोमनखा
नि वापयंति नलदेनानुलिंपंति नलदमालां प्रतिमुंचंतीति। माधवीये ब्राह्मे। दरिद्रोपि न दग्ध
व्यो नग्नः कस्यांचिदापदि॥ तथा॥ निःशेषस्तु न दग्धव्यः शेषं किंचित्त्यजेत्ततः। दाहकालेस्थि
नाशेत्। मदनरत्ने पद्मपार्श्वः॥ यजमानः मृतेक्वापि चिताग्नौ वा प्रवेशितः। वर्षाग्न्यभिहतेऽग्नौ तु
कथं प्रेतविकल्पना। शेषं दग्ध्वा प्रदग्धे तु निर्मथ्यैवानुकारयेत्॥ क्रियानिबंधे॥ उद्धारणं
विच्छिन्नां सिंचेत्कर्त्री प्रदक्षिणां। स्कंधाद्वसिक्तकुंभेन पादतः परिनिष्ठितं॥

॥अथ पर्णशरादिदाहे नाग्निनाशे पश्चाद्देहलाभे मदनरत्ने ब्राह्मे॥ अर्द्धे पर्णे
दग्धे पात्रन्यासे कृते सति। गतेथाग्नि पुनर्देहो यदि पूर्वो लभेत क्वचित्। तदार्द्धदग्धकाष्ठाग्निना
नैर्मथ्यं तं दहेत् यद्यर्धदग्धकाष्ठं तु न लभ्यते तदा तदस्थिखंडं तु निःसाग्न्यं महाजले दग्
एकदामृतौ विशेषमाह आपस्तंबः॥ तथैवैकेन सहैव पितृमेधो द्विवचनलिंगान्मंत्रान्संधा
ति। पितृमेधो दाहांतकर्म। दाहांत एकतंत्रत्वमिति बोधायनोक्तेः॥ अस्थिसंचयनमपि ए
उदकपिंडदानादि पृथगेव सहगमनेप्येवं॥ तदाह मदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ ए
कालमृतौ भार्याभर्त्तारौ च यदि चेद्द्वयोः। तंत्रेण दहनं कुर्यात्पिंडश्राद्धं पृथक्पृथक्। एककाले
तौ जायापती यदि तदा पितुः। विभज्याग्निं क्रियां कुर्यादिति यत्तदसांप्रतं। दाहांतमेकतंत्रत्व
मिति याज्ञिकसंमतं। मृतं पतिमनुव्रज्य या नारी ज्वलनं गता। अस्थिसंचयनं तस्या भर्त्तुः सं
गे एव हि। कीकसानां तु संस्कारो न्यायसिद्धोपि नो मतः एककालमृतेप्येवं कीकसानां वि
भिन्नतः। नवश्राद्धसपिंडानं भिन्नकालमृतौ यथा। कर्पादिकारिकापि॥ मृते भर्त्तरि तद्दाह
एव पत्नी म्रियते यदि। पत्न्यां वा शाकप्रमीतायां दाहाद्दर्वाक्पतिर्मृतः। तत्र तंत्रेण दाहः स्या
त्तेषु छिन्नमूलते। कीकसानां तु संस्कारः पृथगेव तयोर्भवेत्। एकाहमृतयोर्युगपच्च श्राद्ध
कं तयोः॥ मृतं पतिमनुव्रज्य पत्नी विंदेत्तलं गता। तत्रापि दाहस्तंत्रेण पृथगस्थिक्रिया भवे
द् अस्थिसंचयनं पृथक्त्वेकविकल्पः॥ सहगमने सर्वत्र पाकैक्यमाह प्रचेताः॥ एकचित्यां स
मारूढौ दंपती यदि। तंत्रेण श्रपणं कुर्यात्पृथक्पिंडं समावपेत्॥ ॥अथोद
के॥ वसिष्ठः। शरीरमग्निसंयोज्यानवेक्षमाणा अपोभ्युपयंति सव्योत्तराभ्यां पा
णिभ्यामुदकक्रियां कुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्च योनिसंबंधेभ्यः पितुश्चासप्तमात्पु
रुषाद्यावत्तां वा संबंधो ज्ञायते तेषां प्रेतेषूदकक्रियेति। गर्भान्परिहाप्यापरिवत्सरात्। वर्षान
न्वितेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापि ज्ञातयोभ्युपयंत्यपः। अपनः शोशुचदघं
न पितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकं नामगोत्रेण वाग्यताः। सप्तमाद्दशमाद्वादिवसा

स्रुवाहुतिं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यथ यज्ञोपवीती द्वादशगृहीतेन
स्रुवं पूरयित्वा पुरुषसूक्तेनाहवनीये जुहोत्यथ श्रुवाहुतीर्जुहोत्यग्नये विविचये स्वाहाग्नये व्रतप
तयेग्ने पवमानायाग्नये पावकायाग्नये शुचये स्वाहा॥ अग्नये पथिकृते स्वाहा अग्नये तनुप
नपे वैश्वानरायेत्यथ चतुर्गृहीतं जुहोति मनो ज्योतिरित्यत ऊर्ध्वं येन केन कर्मणाभिपद्यते। आहि
ताग्नौ विदेशमृते पथिकृती ष्टिर्मृताग्निहोत्रनदाहः पात्रयोजनञ्च कल्पसूत्रादिभ्यः स्नापि
तामहतेनापहतो ज्ञेयमिति। बह्वृक्रमेप्युपरस्पते। सान्नाग्नेस्तु क्रमदनरत्ने छन्दोगपरिशि
ष्टे च। दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतं। दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्।
घृतेनाभ्यक्तमाप्लाव्य शुद्धवस्त्रोपवीतिनं। चंदनोक्षितसर्वांगं सुमनोभिर्विभूषयेत्। हिरण्य
शकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु॥ मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः। आमपात्रेन्न
मादाय प्रेतमग्निपुरःसरं एकोनुगच्छेत्तस्यार्द्धमर्धपथ्युत्सृजेद्भुवि। ऊर्ध्वमादहनं कार्यमा
सीनो दक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिंडदानवत्॥ अथ पुत्रादिराप्लुत्य
कुर्याद्दाहं चरुं महत्। ततो न्नानं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णां स्रुवं दद्याद्दक्षि
णाग्रां नासि स्रुवं पादयोरधरां प्राचीमरणीमुरसीतरां। पार्श्वयोः शूर्पचमसौ सव्यदक्षिण
योः क्रमात्। मुसलं तु न्यसेन्न्युब्जं अंतरूर्वोरुलूखलं। चात्रौवौलीकमंत्रैर्वंत्वनग्नेरयं विधि
अपसव्येन कृत्वेतद्वाग्यतः पितृदिङ्मुखः। अथाग्निं सव्यमावृत्त्य दद्याद्दक्षिणतः शनैः।
अस्मात्त्वमधिजातोसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयन्।
तथा॥ एवमेवाहिताग्नेश्च पात्रन्यासादिकं भवेत्। कृष्णाजिनादिकं चात्र विशेषो ह्युपवो
दितः। तत्रैव॥ अनयैवावृता नारी दग्धव्यायाव्यवस्थिता। अग्निप्रदानमंत्रोस्या न प्रयो
ज्य इति स्थितिः। इदं छंदोगानामेव। पात्रन्यासोक्तेरुत्तानदेहत्वं साग्निकपरं। निरग्निस्तु
पुमानधोमुखः स्त्री तूत्तानादाह्याः सगोत्रजैर्गेही त्वातुश्चितामारोप्यते शवः। अधोमु
खो दक्षिणादिक्चरणस्तु पुमानिति। उत्तानदेहा नारी तु सपिंडैरपि बंधुभिरित्यादिपुरा
णादिति। शुद्धितत्वं हारलतादयः। उत्तरशिरस्त्वं सामगेतरपरं। वाराहे त्वग्निदानेन्यो मं
त्रः। कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पंचत्वमागतं। धर्मा
धर्मसमायुक्तं लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु। ज्वल
मानं महावह्निं शिरःस्थाने प्रदापयेत्। चतुर्वर्णेषु संस्थानमेवं भवति पुत्रके। अत्र क्रिया
निबंधे गारुडे षट्पिंडदानमुक्तं। मृतस्योत्क्रांतिसमये षट्पिंडान् क्रमशो ददेत्। मृतस्था
ने तथा द्वारि चत्वरे तार्क्ष्य कारणात्। विश्रामे काष्ठचयने तथा संचयने च षट्। तथा॥ श्रा
द्धे देयान् षट्पिंडान् दशपिंडान् दशाह्निकाः। स्थाने चार्द्धपथे नीते चितायां शवहस्तके। श्म
शाने वासिभूतेभ्यः षष्ठं संचयने तथा। ततः त्वंभूतकृज्जगद्योनिस्त्वं लोकपरिपालकः। उ
क्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय। इत्यग्निं दत्त्वा। अस्मात्त्वमिति मंत्रेण इद्वेभ्या
ज्याहुतिरुक्ता। आहिताग्नेपरशरः शम्यां शिश्ने विनिःक्षिप्य अरणीं मुष्कयोरपि॥

गुह्ये च दक्षिणे हस्ते वामे तु पद्मं न्यसेत्। श्रोत्रेतूलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत्। उरसि क्षिप्य दृषदं तंडुलाज्यतिलान्मुखे। श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः। कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत्। अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत्। प्रचेताः॥ स्नानं प्रेतस्य पुत्राद्यैर्विमलांबरवेष्टनं। नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत्॥ यमः॥ प्रेतं दहेच्छुभैर्गंधैः स्नापितं स्रग्विभूषितं॥ आश्वलायनसूत्रे। संस्थिते प्रेतालंकारणं कुर्वंति केशश्मश्रुलोमनखानि वापयंति नलदेनानुलिंपंति नलदमालां प्रतिमुंचंतीति। माधवीये ब्राह्मे। दरिद्रोपि नरः प्रेतो नग्नः कस्यांचिदापदि॥ तथा॥ निःशेषस्तु न दग्धव्यः शेषं किंचित्त्यजेत्ततः। दाहकालेग्निनाशे तु मदनरत्ने यज्ञपार्श्वः॥ यजमानः मृतेक्वापि चितारोवा प्रवेशितः। वर्षाद्यभिहते ग्नौ तु कथं प्रेतविकल्पना। प्रोषं दग्ध्वाप्रदग्धे तु निर्मथ्यैवानुकारयेत्॥ क्रियानिबंधे॥ उद्धारण विच्छिन्नां सिंचेत्कर्त्ता प्रदक्षिणां। स्कंधाद्वा सिक्तकुंभेन पादतः परितस्थितः॥

॥अथ पर्णशरादिदाहे नाग्निनाशे पश्चात्तद्देहलाभे मदनरत्ने ब्राह्मे॥ अदेपर्णे नरे दग्धे पात्रन्यासे कृते सति। गते यस्मिन्पुनर्देहे यदि पूर्वं लभेत क्वचित्। तदा तद्दग्धकाष्ठाग्निना निर्मथ्य तं दहेद्यद्यर्धदग्धकाष्ठं तु न लभ्यते तदा तदस्थि खंडं तु निःसृतं यमहाजले । दद्यात्। सोऽरेकदा मृतौ विशेषमाह आपस्तंबः॥ तथैव प्रेतेन सहैव पितृमेधो द्विवचनलिंगान्मंत्रान्संनमयंति। पितृमेधो दाहांतं कर्म। दाहांतमेतत्तंत्रत्वमिति बोधायनोक्तेः॥ अस्थिसंचयनमपि एकोद्दिष्टपिंडदानादि पृथगेव सहगमनेप्येवं॥ तद्दाह मदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ एककालमृतौ भार्याभर्त्तारौ च यदि चेद्द्वयोः। तंत्रेण दहनं कुर्यात्पिंडश्राद्धं पृथक्पृथक्। एककाले मृतौ जायापती यदि तदापि तु। विभज्याग्निं क्रियां कुर्यादिति यत्तदसांप्रतं। दाहांतमेकतंत्रत्वमिति याज्ञिकसंमतं। मृतं पतिमनुव्रज्य या नारी ज्वलनं गता। अस्थिसंचयनं तत्रास्याभर्तुः संस्कार एव हि। कीकसानां तु संस्कारोन्यायसिद्धोपि नो मतः एककालमृतेप्येवं कीकसानां विधिः स्मृतः। नवश्राद्धसपिंडांतं भिन्नकालमृतौ यथा। कपर्दिकारिकापि॥ मृते भर्त्तरि तद्दाहस्थानं वा पत्नी म्रियते यदि। पत्न्या वा भाक्प्रमीताया दाहदर्वीकृपतिर्भृतः। तत्र तंत्रेण दाहः स्यात्तंत्रेषु द्वित्वमूह्यते। कीकसानां तु संस्कारः पृथगेव तयोर्भवेत्। एकाहमृतयोर्युगपन्नवश्राद्धादिकं तयोः॥ मृतं पतिमनुव्रज्य पत्नी चेदनलं गता। तत्रापि दाहस्तंत्रेण पृथगस्थिक्रिया भवेत्। अस्थिसंचयने पृथक्त्व विकल्पः॥ सहगमने सर्वत्र पाकैक्यमाह प्रचेताः॥ एकचित्यां समारूढौ दंपती येन दंपती यदि। तंत्रेण श्रपणं कुर्यान्पृथक्पिंडं समावपेत्॥ ॥अथोदकदानं॥ वसिष्ठः। शरीरमग्निसंयोज्यानवेक्षमाणा अपोभ्युपयंति सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्च योनिसंबंधेभ्यः पितुश्चासप्तमात्पुरुषाद्यावतां वा संबंधो ज्ञायते तेषां प्रेते षूदकक्रियेति। गर्भान्परिहाप्याप रिवत्सरान्। वर्षोनबालान्विनेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापि ज्ञातयोभ्युपयंत्यपः। अपनः शोशुचदघमनेन पितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकं नामगोत्रेण वाग्यतः। सप्तमाद्दशमाद्वा दिवसा

दादत्तमिति विज्ञानेश्वरः॥ कात्यायनस्तु। सप्तमाद्द्वादशमात्पुरुषादित्याहुः॥ सप्तमात्पुरुषाद्दशमाद्वा समानग्रामवासे यावत्संबंधमनुस्मरेयुरिति पारस्करोक्तेः॥ मंत्रः स्नानांगमेवेति हेमाद्रिः॥ प्रचेताः॥ प्रेतस्पर्शी बांधवा यथावदुदकमवतीर्य नो पर्षयेयुरुदकांते प्रसिंचेयुरपसव्यं प्राचीनावीतिनो वा सर्वे दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययोः॥ स एव॥ नदीकूलं ततो गत्वा शुक्का॥ सचैलं तु ततः स्नात्वा शुचिः प्रयतमानसः पाषाणं ततआदाय विप्रे दद्याद्दशांजलीन्। द्वादश क्षत्रियो दद्यात् वैश्यः पंचदश स्मृताः॥ त्रिंशच्छूद्राय दातव्यास्ततः संप्रविशेद्गृहं। ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत्॥ प्रेतस्नाने विशेषः। शुद्धितत्त्वे आदिपुराणे॥ आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितस्ततः। कर्तव्यं तैः सचैलं तु स्नानं सर्वमलापहं। पूर्वं परिहितं वस्त्रं प्रक्षाल्य पुनः परिधाय स्नायादित्यर्थः। अपनइति वा मह स्नानामिक्रयाजलालोडनं। अवतरणोदकपूरः सरत्वोक्ते येथावालेयुरस्कृत्ये निवोधायनीयं। जलादुत्थानपरमिति॥ हारलतायां॥ आश्वलायनः। सव्याहृतो मजंत्यनीक्षमाणायत्रोदकमहस्रवति तस्मात्प्रसकृदुन्मज्जैकांजलिमुत्सृजंतस्य गोत्रं नाम गृहीत्वेति। प्रचेतसा त्वहमंजलित्रयमप्युक्तं। त्रिः प्रत्येकं कुर्युः प्रेतस्तृप्यत्विति तथा। दिने दिनेंऽजलीन् पूर्णान् प्रदद्यात्प्रेतकारणात्। तावद्वृद्धिश्च कर्तव्या यावत्पिंडः समाप्यते। एकवृद्धिस्त्रिकवृद्धिर्वेत्यर्थः। मदनरत्ने भरद्वाजगृह्ये तु द्विकवृद्धिरप्युक्ता। आशौचांते प्रदद्यात्तु प्रेतपुत्रस्तिलांजलीन्। प्रथमेऽह्नि सकृद्दद्यात्पिंडपक्षावृत्तादिवा। त्रीन्प्रदद्याद्द्वितीयेऽह्नि तृतीये पंचमेव च। चतुर्थे सप्तसंख्यास्तु पंचमे नव चोत्सृजेत्। षष्ठेऽह्नि चैकादशकाः सप्तमे तु त्रयोदश। अष्टमे पंचदशका नवमे दश सप्त च। एकोनविंशतिं चात्रे शतांजलिमतः स्मृतं केचिद्दशांजलीन्माहुः केचिदाहुः शतांजलीन्। पंचपंचाशतं चान्ये स्वशाखोक्तं व्यवस्थया। अशक्तौ गौतमः। प्रथमतृतीयसप्तमनवमेषूदकक्रियेति॥ छंदोगपरिशिष्टे। अथानवेक्ष्यमेयापं सर्वे चैव शवस्पृशः। गोत्रनामपदानेनुतर्पयामीत्यनेनतरं। दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक्पृथक्। विष्णुपुराणे॥ सपिंडीकरणं यावदृजुदर्भैः पितृक्रिया॥ सपिंडीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्॥ रामायणे॥ इदं पुरुषशार्दूल विमलं दिव्यमक्षय्यं पितृलोकेषु पानीयमदत्तमुपतिष्ठतां॥ दानवाक्ये विकल्पः॥ याज्ञवल्क्यः॥ कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजां। कामग्रहणात्। प्रेतस्तत्रीच्छायां देयमन्यथा नेत्यर्थः। शंखपारस्करौ। आचार्ये चैवमातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषामिति। द्विवचनात्मातामहयोश्च अपि। शंखलिखितौ। उदकक्रियाकामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि चेति। वद्धमनुः॥ क्लीबाद्या नोदकं कुर्युस्तेनाज्ञात्या विधर्मिणः। गर्भभर्तृद्रुहश्चैव सुरापश्चैव योषितः॥ याज्ञवल्क्यः। नत्रह्मचारिणः कुर्युरुदकं पतितास्तथा॥ षडशीतौ, स्त्रीयाचारादपि भ्रष्टाः पतिताश्चैव दूषिताः। न कुर्युरुदकं नैवैतेभ्योऽप्यन्येन चैव हि॥ मदनरत्ने हा-
[illegible] ततीतानकामतः। प्रत्तानां चैन कन्यानां नियमे सलिलक्रिया। अपरा-
[illegible] अपयात्रिनःकृतगरस्फोटनस्यानिक्षयहविधौ कृते आशौचादकादकृपादेवतापांशौच प्रकाशः॥ ॥अथाशौचे नियमाः

याज्ञवल्क्यः॥ इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः विदश्य निंबपत्राणि नियता द्वारि वेश्मनः आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः॥ प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ॥ इदं चाद्यह्नि। वसिष्ठः॥ अधःप्रस्तरे त्र्यहमनश्नंत आसीरन्। क्रीतोत्पन्नेन वा वर्तेरन्॥ शुद्धितत्त्वे वाजवापः। शमीमालभंते शमी पापं शमयत्विति। अश्मानमस्येव स्थिरो भूयासमिति अग्निमग्निर्नः शर्म यच्छत्विति। ज्योतिस्त्वं गिरणमजमुपस्पृशंतः क्रीत्वा लब्ध्वा चान्यगेहाद्वान्नमलवणमेकरात्रं दिवा भुंजीरंस्त्रिरात्रं च कर्मोपरमणम्। क्रीताद्यशनमुपवासाशक्तस्य। आश्वलायनस्तु॥ नैतस्यां रात्र्यामन्नं पचेत क्रीतेनोत्पन्नेन वा वर्तेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं वेत्याह। अशक्तौ रत्नाकरे आपस्तंबः। भार्यापरमगुरुसंस्थायां चाकालभोजनानि कुर्वीरन्। यदा मृतिः परदिने तावत्कालमित्यर्थः॥ बृहस्पतिः॥ अधःशय्यासना दीना मलिना भोगवर्जिताः। अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा। भोगोऽभ्यंगताम्बूलादिः क्षारः परिभाषायामुक्तः॥ यत्तु मार्कंडेयपुराणे॥ तैलाभ्यंगो बांधवानामंगसंवाहनं च यत्। तेन चाप्यायते जंतुर्यच्चाश्नंति सबांधवाः। प्रथमेह्नि तृतीये च सप्तमे नवमे तथा वस्त्रत्यागं बहिः स्नानं कृत्वा दद्यात्तिलोदकं इति॥ तदंत्यदिनपरं। अशौचांते तिलकल्कैः स्नात्वा गृहं प्रविशेयुरिति विष्णूक्तेः। विष्णुपुराणे त्वस्थिसंचयोर्ध्वं भोगोऽप्युक्तः। शय्याशनोपभोगस्तु सपिंडानामपीष्यते अस्थिसंचयनादूर्ध्वं संयोगस्तु न योषितां॥ भारते॥ तिलान्ददत पानीयं दीपं ददत जाग्रत ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभं॥ मनुः॥ मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ। देवयानीये कारिकायां॥ लवणं क्षीरमाषान्नाशूपमांसानि पायसं। वर्ज्ययेद्दाहकर्तॄंस्तेषु बालवृद्धातुरैर्विना। उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत्। मरीचिः॥ प्रथमेह्नि तृतीयेह्नि चतुर्थे सप्तमे तथा। ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभं। भोजनं च दिवैव। दिवा चैव तु भोक्तव्यममांसं मनुजर्षभ इति। विष्णुपुराणात्॥ क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुरिति पारस्करोक्तेश्च॥ मदनरत्ने हारीतः॥ पालाशेषु मृण्मयेषु पर्णपुटकेषु वाश्नीरन्। देवजानीये माह्ले। शुद्धितत्त्वे आदिपुराणे॥ आशौचमध्ये यत्नेन भोजयेच्च सगोत्रजान्। अंत्यदिने तु मदनरत्ने ब्राह्मे। यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः। स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि। अंत्यकर्मकालीनवस्त्रयोस्तत्रैवोक्तेः। ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी। अंत्यानामाश्रितानां च त्यक्त्वा स्नानं करोत्यथ इति। शंखः। दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिंडक्रियावर्जमाशौचे विनिवर्तते॥ काठकगृह्ये॥ यत्र प्राणोत्क्रमस्तत्रान्वहं महाबलिं कुर्यादिति पारस्करः। तदानीमेव वस्त्रं तंडुलं दीपं कांस्यभाजनं प्रेताय दद्यात् आशौचप्रकाशे भरद्वाजः॥ वासोन्नं च जलं कुंभं प्रदद्यात्कांस्यभाजनं। नग्नप्रच्छादनं श्राद्धे ब्राह्मणाय निवेदयेत्॥ भृगुः॥ तिलोदकं तथा पिंडं नग्नप्रच्छादनादिकं॥ गतैर्न कुर्यात्संध्यायां यदि कुर्यान्निरर्थकं॥

॥अथ प्रेतपिंडः॥

यद्यपि

हेमाद्रौ पारस्करेण॥ ब्राह्मणे दश पिंडाः स्युः क्षत्रिये द्वादश स्मृताः। वैश्ये पंचदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्ति
ताः इत्युक्तं। तथा पितृभ्यः सर्ववर्णेभ्यः पिंडान्दद्याद्दशैव हि इति तत्रैवोक्तेः सर्वेषां दशैव ज्ञेयाः॥ म
दनरत्नेप्येवं॥ तथा च हेमाद्रौ ब्राह्मपाद्मयोः। जात्युक्ताशौचतुल्यास्तु वर्णानां क्वचिदेव हि। दश
थमोनुरत्कृतमेतत्पिंडानवयंत्यपित्युक्त्वा विप्रान्येषु दशमपिंडोत्कर्ष उक्तः। क्षत्रस्तु दशमः पिंडो रा
ज्ञां वै द्वादशेहनि। वैश्यानां वै पंचदशे देयस्तु दशमस्तथा। शूद्रस्य दशमः पिंडो मासे पूर्णे हि दीय
ते इति। युद्धमृतादेरशौचे त्र्यहादौ च तत्रैवोक्तं। सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा॥ देवने
केपि न संतानाप्यप्रजापत्यवत्तंत्रेण किंतु दशपिंडान्पृथक्दद्यात्। शिरस्त्वाद्येन पिंडेनेति दश
त्वावच्छिन्नानामेव शरीरोत्पादकत्वात्। त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि। द्वितीयेहनि
चत्वारस्तृतीये पंच चैव हि। अत्रैव प्रकारांतरं प्रागुक्तं॥ शातातपः॥ आशौचस्य च ह्रासेपि पिंडा
न्दद्याद्दशैव तु। तत्रैकपात्रे सकृन्मंत्राद्दशपिंडान्दद्यात्॥ उत्तरीयशिलापात्रकर्तृद्रव्यविपर्य
ये। पूर्वदत्तां जलीं दद्यात्पूर्वपिंडास्तथैव चेति। गृह्यकारिकायां पात्रविपर्यये दोष उक्तः॥ शिला
विपर्यये घटस्फोटादेर्नावृत्तिः। अक्षाभ्यंजनादिपदक्रमेण एकहायनीनयनवद्दर्शयोजकत्वा
त्। तद्दत्वात्रलौकिकग्रहणं॥ केचित्तु॥ नवान्याद्यपभांडानि न्यारुकं चरुकं तथेति प्रचेतसोक्तेः
पात्रानेकत्वमाहुः। क्रियाकर्तर्यसत्यन्येन शेषः समापनीयः। एवं क्रियापरत्रानां यदि किंचिद्वि
पद्यते। तद्धुनाकार्पासवैर्वा सहकारिभिरिति शुद्धितत्त्वे बृहस्पतिस्मृतेः। पत्न्याः कर्तृत्वे रजो
दर्शने च तद्दंते कुर्यात्। शावाद्विगुणमार्तवमित्युक्तेः। आशौचांते श्राद्धे वे कर्तुरस्वास्थ्ये वान्येन
क्रियाः सर्वा वर्त्तनीयाः। कर्तृविपर्ययात्। कालातिक्रमायोगाच्च॥ वाराहे॥ स्थंडिले प्रेतभागं तु द
द्यात्पूर्वोक्त एव तु। कृत्वा तु पिंडसंकल्पं नामगोत्रेण सुंदरि। मरीचिः॥ प्रेतपिंडं बहिर्दद्याद्दर्भमंत्र
विवर्जितं। प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः॥ दर्भवर्जनमनुपनीतपरं। असंस्कृता
नां भूमौ पिंडं दद्यात्। संस्कृतानां कुशेष्विति प्रचेतसोक्तेः। मिताक्षरायां स्मृत्यंतरे॥ भूमौ माल्यं पिं
डं पानीयमुपले वा दद्युः। पुनः पुनः॥ फलमूलैश्च पयसा शाकेन गुडेन वा तिलमिश्रं तु दर्भेषु
पिंडं दक्षिणतो हरेत्। तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च। शालिनाशाकृभिर्वापि शाकैर्वाप्य
थ निर्वपेत्। प्रथमेहनि यद्द्रव्यं तदेव स्याद्दशाहिकं। मदनरत्ने मात्स्ये॥ तैजसं मृन्मयं चाथ पात्रं
संपाद्य प्रयत्नतः। लौकिकाग्नौ विधिश्रितं पचेदन्नं घृतप्लुतं। स्नात्वा तु तिलसंमिश्रं प्रदद्याद्दर्भ
संस्तरे। शुद्धितत्त्वे देवजानीये ब्राह्मे॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नेन वा
सु वान्येषु स एव प्रदद्यात्त्वपि। मृण्मये भांडमादाय नवं स्नातः सुसंयतः॥ तंडुलं प्रसृतिं तत्र त्रिःप्र
क्षाल्य पचेत्स्वयं। सपवित्रस्थले मिश्रं कृमिकेशविवर्जितं। द्वारेपाने ततः क्षिप्त्वा शुद्धं वामो
रमृत्तिका॥ भूयपस्तरे दर्भान्याम्याग्रान्देशसंभवान्। तेनोवनेजनं दद्यात्संस्मरन्गोत्र
मनि। तिलसर्पिर्मधुक्षीरैः संसिक्तं तत्तमेव हि॥ दद्यात्प्रेताय पिंडं तु दक्षिणाभिमुखस्थितः॥
अर्घैः पुष्पैस्तथा धूपैर्दीपैर्लोपैश्च शालिभिः। ऊर्णातंतुमयैः शुद्धैर्वासोभिः पिंडमर्चयेत्। स्व
सेरिव सेद्देयः पिंड एवं क्रमेण तु॥ सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा॥ त्र्यहाशौचे पिंदान

मास्त्रयःपिंडाःसमाहिताः।द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा।त्रींस्तुदद्यात्तृतीयेह्निवस्त्रादि
क्षालयेत्ततः।दशाहेपिचदातव्यःप्रथमेत्वेकएवहि।एकस्तोयांजलिस्त्वेवंपात्रमेकंचदीयते
द्वितीयेद्वौतृतीयेत्रीनित्याद्युक्त्वा।एवंस्युःपंचपंचाशत्तोयस्यांजलयःक्रमात्।तोयपात्राणि
तावंतिसंयुक्तानितिलादिभिरिति॥पात्रकुम्भः॥अत्राहःपदमहोरात्रपरं।तेनरात्रावपिदेय
इतिगौडाः।दिवसपदाद्रात्रौनेतिमैथिलाः॥सएवेत्युक्तेःसपिंडेनदशपिंडप्रक्रान्तेऽन्यागमे
पिसनदद्यात्।असगोत्रःसगोत्रोवेतिप्रागुक्तेः।दाहकर्त्तैवदशाहंकुर्यादितिमिताक्षरायां॥
शुद्धितत्त्वेवायवीये॥असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान्।यश्चाग्निदानात्प्रेतस्यपिं
डंदद्यात्सएवहीति।तत्रैव।पूरकेणतुपिंडेनदेहोनिष्पद्यतेयतः।कृतस्यकरणायोगात्पुनर्नि
वर्त्तयेत्क्रियां।शुद्धिप्रकाशेवायवीयेपि।निवर्त्तयतियोमोहात्क्रियामन्यनिवर्त्तितां।विधिघ्न
त्वेनभवतिपितृहावोपजायते।तस्मात्प्रेतक्रियायेनकेनापिचकृतायदि।नतांनिवर्त्तयेत्प्राज्ञः
सतांधर्म्ममनुस्मरन्निति॥आदिपुराणे॥पितृशब्दंस्वधांचैवनमपुंजीतकर्हिचित्।अनुशब्दं
तथावेदंप्रयत्नेनविवर्जयेत्।उपतिष्ठतामयंपिंडःप्रेतायेतिसमुच्चरेत्॥क्रियानिबंधेव्यासः॥
प्रेतायपिंडंदत्वातुततोश्नीयाद्दिनात्यये।भविष्ये॥ओदनामिषशक्तूनांशाकमूलफलादिषु।
प्रथमेह्नियद्दद्यात्तद्दद्यादुत्तरेहनि।गृहद्वारेश्मशानेवातीर्थेदेवगृहेपिवा।यत्राद्यदीयतेपिंड
स्तत्रसर्वंसमाचरेत्।ब्राह्मे।शिरस्त्वाद्येनपिंडेनप्रेतस्यक्रियतेसदा।द्वितीयेनतुकर्णाक्षिनासि
काश्चसमासतः।गलांसभुजवक्षांसितृतीयेनयथाक्रमं।चतुर्थेनतुपिंडेननाभिलिंगगुदा
नि च।जानुजंघेतथापादौपंचमेनतुसर्वदा।सर्वमर्माणिषष्ठेनसप्तमेनतुनाडयः।दंतलोमा
न्यष्टमेनवीर्यंतुनवमेनच।दशमेनतुपूर्णत्वंतृप्तताक्षुद्विपर्ययइति।याज्ञवल्क्येनतु॥पिंडय
ज्ञावृतादेयंप्रेतायान्नंदिनत्रयमित्युक्तेः।अत्रफलतारतम्यंज्ञेयं।इतिविज्ञानेश्वरः॥तेनत्र्य
हाशौचपरत्वंदेवयाज्ञिकोक्तंचिंत्यं।आशौचस्यतुह्रासेपिपिंडान्दद्याद्दशैवत्विदिवचनाच्च
दिनत्रयावश्यकत्वार्थमितिहारलताद्यः॥शातातपः॥जलमेकाहमाकाशेस्थाप्यंक्षीरंच
मृण्मये।पारस्करः॥मृण्मयेतांरात्रिंक्षीरोदकेविहायसिनिदध्युः।प्रेतात्रस्नाहीत्युदकंपिबचे
दंक्षीरं।इदंरात्राविति गौडाः॥गारुडेतु॥अपक्वेमृण्मयेपात्रेदुग्धंदद्याद्दिनत्रयमितिउक्तम्॥
हेमाद्रौप्राचेतुदशाहमुक्तम्।तस्मान्निधेयमाकाशेदशरात्रंपयोजलं।सर्वतापोपशान्त्यर्थंमध्वश्र
मविनाशनं॥देवजानीयेकारिकायां।तत्रप्रेतोपकृतयेदशरात्रमखंडितं।कुर्यात्प्रदीपंतैलेन
वारिपात्रंचमार्त्तिकं।भोज्याद्भोजनकालेतुभक्तमुष्टिंचनिर्वपेत्।नामगोत्रेणसंबुध्याथरिक्तांपि
तृयज्ञवत्।शातातपः॥भूलोकात्प्रेतलोकंतुगंतुमाद्यंसमाचरेत्।तत्पाथेयंहिभवतिमृतस्यमनु
जस्यतु॥

॥अथदशाहमध्येदर्शपातनिर्णयः॥

॥भविष्ये॥म
ध्यत्राशौचंततस्तुयदिदर्शोऽभ्यपद्यते।समाप्यचोदकंपिंडंनस्नानमात्रंसमाचरेत्॥ऋष्यशृंगः॥
आशौचमध्येदर्शोयदिस्यात्सर्ववर्णिनां।समाप्तिस्तेनतंत्रस्यकुर्यादित्याहगौतमः॥पैठीनसिः॥
आद्यदावेवकर्त्तव्याप्रेतपिंडोदकक्रिया।द्विरैंदवेतुकुर्वाणःपुनःशावंसमश्नुते॥मातापित्रोस्तु

श्लोकगौतमः ॥ अंतर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् । पित्रोस्तु यावदाशौचं दद्यात्पिंडं जलांजली
न् । इदमपि अहमध्ये दर्शपाते ॥ तदूर्ध्वं तु दर्शे तु पित्रोरपि तंत्रं समाप्यमेव । पित्रोराशौचमध्ये तु य
दि दर्शः समापयेत् तावदेवोत्तरं तंत्रं पर्यवस्येत् अहात्ययमिति गालवोक्तेः । अन्येषां तु अहमध्ये
स्यात् समाप्तिरिति । पराशरमाधवीये निर्णयामृते चोक्तं । कालादर्शेऽपि ॥ दर्शो दशाहमध्ये स्यादूर्ध्वं
तंत्रं समापयेत् । त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः । मदनपारिजाते तु गालवीयमापदनौ
रसपुत्रादिविषयं । अहोर्ध्वमपि पित्रोर्न तंत्रसमाप्तिरित्युक्तं । मदनरत्नेऽप्येवं । मम तु देशाचारतो व्य
वस्थेति प्रतिभाति ॥ ॥ अथास्थिसंचयः ॥ ॥ तत्राश्वलायनेन ॥
कृष्णपक्षे एकादशी दर्शेष्वाषाढाफाल्गुनीप्रोष्ठपदाभिन्नर्क्षेषूक्तं । तदाशौचमध्ये संभवेत्
तदूर्ध्वं च शाखाव्याकरणे ज्ञेयं । आशौचमध्ये तु मदनरत्ने संवर्त्तः । प्रथमेऽह्नि तृतीये वा सप्तमे
नवमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह । छंदोगपरिशिष्टे ॥ अपरेद्युस्तृतीये वा
अस्थिसंचयनं भवेदिति । द्वितीयेऽप्युक्तं । विष्णुकात्यायनौ । संचयनं चतुर्थीमिति । माधवीये
यमः ॥ भौमार्कमंदवारेषु तिथियुग्मे विवर्जयेत् । वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसंचयं प्रदात
जन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ॥ ब्राह्मे ॥ चतुर्थे ब्राह्मणानां तु पंचमेऽहनि भूभृतां । नवमे वैश्यजा
तीनां शूद्राणां दशमात्परं । दशमेऽहनीति वा पाठः ॥ शौनकः । पलाशेऽस्थिदाहे च सद्यः संचय
नं भवेत् । काम्यमरणे तु तस्य त्रिरात्रमाशौचं । द्वितीये त्वस्थिसंचयस्तूक्तं । अंगिराः ॥ प्रेतीभूतं
तयोर्द्विजश्रेष्ठः शुचिर्नकरोति चेत् । देवतानां तु यजनं तर्पणं त्वथ देवताः । तद्विधिः स्वस्वसूत्रे भट्ट
कृतो ज्ञेयः ॥ हेमाद्रौ नागरखंडे ॥ त्रीणि संचयनस्यार्थे तानि वै शृणु सांप्रतं । यत्र स्थाने भवेन्मृत्युः
तत्र श्राद्धं प्रकल्पयेत् । एको द्वितीयस्ततो मार्गे विश्रामो यत्र कारितः । ततः संचयनस्यार्थे तृतीयं श्रा
द्धमिष्यते ॥ अपरार्के मदनरत्ने च ब्राह्मे ॥ सद्यः शौचे तथैकाहे सद्यः संचयनं भवेत् । त्र्यहाशौचे तृ
तीयेऽह्नि कर्त्तव्यस्त्वस्थिसंचयः । तत्रैव श्मशानदेवतायागं चतुर्थे दिवसे चरेत् । मृण्मयेषु च भां
डेषु कुंभेषु त्वथ केषु वा । सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा । फलैर्मूलैर्वनोत्थैश्च रम्याः
क्रव्याद्देवताः । धूपो दीपस्तथा माल्यमर्घ्यं देयं त्वरान्वितैः । तत्र पात्राणि शूर्पाणि श्मशाना
ग्नेः समंततः निवेद्य प्रविक्रव्यैतैः सर्वैस्तैर्हुतैः । नमः क्रव्यादमुखेभ्यो देवेभ्य इति सर्वदा
येऽत्र श्मशाने देवाः स्युर्भगवंतः सनातनाः । तेऽस्मत्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयं । प्रेतस्या
स्य शुभान् लोकान् प्रयच्छंतु च शाश्वतान् । अस्माकमायुरारोग्यं सुखं च ददता चिरं । एवं कृ
त्वा बलिं सर्वं क्षीरेणाभ्युक्ष्य वाग्यतः । एवं दत्वा बलिं चैव दद्यात्पिंडत्रयं बुधः । एकं श्मशा
नवासिभ्यः प्रेताय चैव तु मध्यमं । तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् । ततो यज्ञियव
क्षोत्थां शाखामादाय वाग्यतः । तेनास्थीनि गृह्णाति प्रधानांगे भवानि च । शिरसो वक्ष
सः पाण्योः पार्श्वाभ्यां चैव पादतः । पंचगव्येन संस्थाप्य क्षौमवस्त्रेण वेष्ट्य वा । प्रक्षिप्य मृण्म
ये भांडे नवे साच्छादने शुभे । अरण्ये वृक्षमूले वा शुद्धे संस्थापयत्यपि । गृहीत्वास्थीनि तद्भ
स्म नीत्वा तोये विनिःक्षिपेत् । ततः संमार्जनं भूमेः कर्त्तव्यं गोमयांबुभिः पूजा च पुष्पधूपाद्यै

वेलिभिः पूर्ववत्क्रमात् इति॥ ॥अथतीर्थेऽस्थिक्षेपविधिः॥ ॥तत्रैव॥ त
स्यानाच्छन्नकेनीत्वाकदाचिज्जाह्नवीजले। कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः। मातुः
कुलं पितृकुलं वर्जयित्वा नराधमः। अस्थीन्यन्यकुलस्थस्य नीत्वा चांद्रायणं चरेत्। तत्रैवमल्लां
उपुराणे॥ अस्थीनि मातापितृपूर्वजानां नयंति गंगामपि ये कथंचित्। सद्भ्रातृबंधुः सापि दयाभि
भूतास्तेषां तु तीर्थानि फलप्रदानि। स्नात्वा ततः पंचगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च यो
ज्यः। ततस्तु मृत्पिंडपुटे निधाय पश्यन्दिशं प्रेतगणोपगूढां। नमोस्तु धर्माय वदन्प्रविश्य जलं स
मे प्रीत इति क्षिपेच्च। उत्थाय भास्वंतमवेक्ष्य सूर्यं सदक्षिणां विप्रमुखाय दद्यात्। एवं कृते प्रेत
पुरस्थितस्य स्वर्गे गतिः स्यात्तु महेंद्रतुल्या॥ यमः॥ गंगातोये तु यस्यास्थि क्षिप्यते शुभकर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात्॥ तथा॥ अस्तं गते गुरौ शुक्रे तथा मासे मलिम्लुचे।
गंगायामस्थिनिःक्षेपं न कुर्यादिति गौतमः॥ दशाहांतर्न दोषः। दशाहाभ्यंतरे यस्य गंगातोये
स्थि मज्जति। गंगायां मरणं यादृक् तादृक्फलमवाप्नुयादिति मदनरत्ने वृद्धमनूक्तेः। शौनको
हं प्रवक्ष्यामि अस्थिक्षेपविधिं क्रमात्। आदौ ग्रामाद्बहिर्गत्वा स्नानं कृत्वा सचैलकं। प्रोक्षयेत्
पंचगव्येन शुद्धमंत्रैर्विचक्षणः॥ गायत्र्याद्यैः पंचगव्यं मंत्रैर्निखातास्थिभूमिप्रोक्षणार्थैः। उप
सर्पादिभिर्मंत्रैः प्रार्थनं खननं तथा। मृत्तिकोद्धरणं चास्थ्नां ग्रहणं च यथाक्रमं। उपसर्पेति चतु
भिर्मंत्रैः क्रमेण प्रार्थनादिकं। स्नात्वास्थिशुद्धिं कुर्वीत एतोन्विंद्रमिति सूक्ततः। स्पृष्ट्वा स्पृष्ट्वा त
तः स्नानं पंचगव्येन शुद्ध्यति। दश स्नानि कुर्वीत तत्तन्मंत्रैर्विचक्षणः॥ गोमूत्रं गोमयं क्षीरं द
धि सर्पिः कुशोदकं। भस्म मृण्मधु वारीणि मंत्रतः स्नानि वै दश। कुशैः संमार्जयेदस्थीन्यतो दे
वेति मंत्रतः। एतोन्विंद्रं शुचिर्वेति नतमंहः इतीति च। पावमानीममाश्रेच रुद्रसूक्तं यथाक्रमं।
एतैः कुशैर्मार्जनं हेमश्राद्धं ततः कुर्यात्पितॄनुद्दिश्य यत्नतः। पिंडदानं प्रकुर्वीत ततश्च तिलत
र्पणं। अस्थिक्षेपांगं चेदं॥ अजिनं कंबलाद्दर्भा गोकेशाः शाणमेव च। भूर्जपत्रं ताडपत्रं स
प्तधा वेष्टनं स्मृतं। हेमं च मौक्तिकं रूप्यं प्रवालं नीलकं तथा। निक्षिपेदस्थिमध्ये तु शुद्धिर्भव
ति नान्यथा॥ ततो होमं प्रकुर्वीत तिलाज्येन विचक्षणः॥ उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतं
ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते। मूत्रपुरीषाचमनं कुर्वन्नास्थि निधारयेत्॥ अत्र द
शदानं वैतरणीऋणमोक्षपापधेनुदानमुक्तं दिवोदासीये। काशीखंडे॥ धनंजयोपि धर्मात्मा
मातृभक्तिपरायणः। आदायास्थीन्यतो मातुर्गंगामार्गस्थितो भवत्। पंचगव्येन संस्नाप्य त
था पंचामृतेन वै। यक्षकर्दमलेपेन लिप्त्वा पुष्पैः प्रपूज्य च। आवेष्ट्य तत्र वस्त्रेण ततः पट्टांबरेण
च। ततः सुरक्तवस्त्रेण ततो मांजिष्ठवाससा। नेपालकंबलेनाथ मृदा चाथ विशुद्धया। ताम्रसं
पुटके कृत्वा मातुरंगान्यथोवहत्। व्यासः॥ पट्टवस्त्रं च कौशेयं मांजिष्ठं श्वेतवस्त्रकं। कंबलं
शाणपत्रं च अजिनं च तथोत्तरं। एषां विकल्पः॥ अन्यश्चात्र विशेषस्त्रिस्थलीसेतौ दिवोदा
सीये च ज्ञेयः। संचयनोत्तरं श्राद्धमाहाश्वलायनः। श्राद्धमस्मै दद्युरिति। स्मृत्यर्थसारे॥ संच
यने कृते मनुष्यलोकं गच्छतः पाथेयश्राद्धमामेन कार्यमिति। अनुपनीतस्य न संचयनं॥

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेआंगिराः॥ प्रथमेह्नितृतीयेचपंच
मेसप्तमेतथा। नवमैकादशेचैवतन्नवश्राद्धमुच्यते। शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः। आपस्तंबाःषडित्याहुर्विभाषान्वितरेषुहि॥ पंचैकादशाहिकंविना। मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमाद्दिनवं। विच्छित्यैकादशे। तत्कुर्यादितिमदनर
त्नेबौधायनोक्तेः। भविष्ये॥ नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात्। आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥ हेमाद्रौवृद्धवसिष्ठः॥ अलब्ध्वातुनवश्राद्धंसेनत्वान्नेवमुच्यते। अर्वाक्तु
द्वादशाहस्यलब्ध्वातानिदुष्कृतं॥ अतःषडेव॥ एतान्येवविषमश्राद्धानीत्युच्यंते॥ नागरखं
डेतु॥ पंचमेसप्तमेतद्वदष्टमेनवमेतथा। दशमैकादशेचैवनवश्राद्धानितानिवैत्युक्तं॥ कात्या
यनस्तु॥ चतुर्थेपंचमेचैवनवमैकादशेतथा। यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते। प्रथमे
सप्तमेचैवेत्याद्यपरेव्यासपाठः॥ बह्वृचानांतु। नवश्राद्धंदशाहानिनवमिश्रंतुषड्दृतमित्युक्तं
नारायणवृत्तौ॥ दीपिकायां॥ अथतदनुपादाद्येचतुर्थेदिनेश्राद्धं। पंचमसप्तमाष्टनवदिक्
रुद्रेषुयुग्मद्विजैः। प्रथमेह्नितृतीयेह्निपंचसप्तनवस्वपि। द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकेतुविन्य
सेत्। एकोविषमश्राद्धेऽत्रवपवपिंडश्चैकइतिद्वाविंशत्यर्थः। अत्रशाखाभेदाव्यवस्था। अपरार्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच। नकरोतिसुतोयस्तुतस्याधःपितरोग
ताः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथ॥ मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥ पूजयिष्याम्यभोगैस्त्वामेवंविप्रंनिमंत्रयेत्। आवाहनेपितत्रैव। इहलोकंपरित्य
ज्यगतोसिपरमांगतिम्। मनसावायुभूतेनविप्रेत्वाहंनियोजयेइति। तत्रैवबह्वृचपरिशिष्टे।
अनूदकमधूपंचगंधमाल्यविवर्जितं। नवश्राद्धममंत्रंचपिंडोदकविवर्जितं। उदकमर्घ्यं। पिं
डोदकंशुद्धंतापितरइत्यवनेजनादि। एकोद्दिष्टेषुसर्वेषुनस्वधानाभिरम्यतां नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं। अनयन्येषुसर्वेषुनस्वधानाभिरम्यतां स्वस्त्यस्तुविसृजेदेवंसकृत्प्रणव
वर्जितं। एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते। पितृशब्दंनकुर्वीतपितृहाचोपजायते। सपिं
डनात्प्रागितिहेमाद्रिः। तेनतेनैवस्वधांप्रयुंजीतप्रेतशब्दंदशाहिकेइति। ऋष्यशृंगः। अतोदशाहि
कोत्तरैकादशाहेस्वधाप्रयोगएवेतिहारलतापरास्ता॥ रत्नावल्यां॥ आशीर्वोद्विगुणाश्चभोज
याशीःस्वस्तिवाचनं। पितृशब्दःस्वसंबंधशर्मशब्दस्तथैवच। पात्रालंभोवगाहश्चउल्मुकोल्ले
खनादिकं। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच। प्रदक्षिणाविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत्। अत्रस्वधापितृनमः। एशहेनतिलोसीतिमंत्रेणशरदे
हेनतूष्णींवातिलावपनं। तूष्णींमर्घ्यदानं। अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः। शुभ्राएकपिं
डःमिनपनमंत्रेऊहः। अनुमंत्रणादिस्वमंत्रकं। अभिरम्यतामितिविसर्जनं॥ एतन्नवश्राद्धवर्जं
कोद्दिष्टेषु। नवश्राद्धेत्वमंत्रकं। सर्वमितित्रिगणप्रभावृत्तिः। क्रियानिबंधे॥ उत्तानेस्याप्पेनाअमंत्रको
द्दिष्टेसदावुधः। न्युब्जंतुपार्वणेकुर्यात्तस्योपरिकुशान्न्यसेत्। नवश्राद्धंगृहेकार्यंभार्यापश्चा
योपिवा। सपिंडीकरणांतानिप्रेतश्राद्धानियानिवै। तानिस्युर्लौकिकेवन्हाविम्याहस्वाश्वलाय

नः। इदं संभवेच्चेन्न कार्यं। नवश्राद्धेषु यच्छिष्टं गृहपर्युषितं च यत्। दंपत्योर्भुक्तशेषं च न तद्भुंजीत कर्हि
चित्॥ इति अंगिरोवचनलिंगात्। द्वाभ्यां तदा तु कृच्छ्राभ्यां शुद्धिः स्यात्तु विवेकिनामिति त्रिशाल्ले उक्तं।
विधेश्च निर्णयामृते कश्यपः॥ नवश्राद्धं मासिकं च यद्यदंतरितं भवेत्। तत्तदुत्तरसातंत्र्यादनुष्ठेयं
प्रचक्षते। हेमाद्रौ गालवः। शावे तु सूतकं चेत्स्यान्निशायां च मृतौ तथा। नवश्राद्धानि देयानि य
थाकालं यथाक्रमं॥ निशायामाशौचांतेष्वहवृद्धौ। अन्वारोहणे तु नवश्राद्धानि सर्वाणि सपिं
डीकरणं पृथक्। एक एव वृषोत्सर्गो गौरेका तत्र दीयते। आशौचांत्यदिने कार्यमुक्तं श्राद्धे। यस्य
यस्य तु वर्णस्य यद्यस्यात्पश्चिमं त्वहः। स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि समाप्य दशमं पिंडं य
तस्पेषे तु वाससी। अंत्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च। श्मश्रुलोमनखानां च यत्त्याज्यं
तज्जहात्यपि। गौरसर्षपकल्केन तिलकल्केन संयुतं। शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्य
तः। वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः॥ क्रियानिबंधे गृह्यकारिकायां॥ अत्र पिंडत्रयं दद्यु
स्तत्सखिभ्यस्तथादिमं। प्रेताय प्रथमं तद्वत्तृतीयं च यमाय वै। तथा॥ कर्त्रा तु प्रार्थिताः संतो ज्ञा
तिसंबंधिबांधवाः। दद्युरभ्यंगतः पूर्वं त्रीस्त्रीन्धर्मोदकांजलीन्। पूर्ववन्नामगोत्राभ्यां तिमम्नो
नेह कश्चन। मदनरत्ने विष्णुहारीतौ॥ आशौचांते ततः श्मश्रुकर्मणा तिलकल्कैः सर्षपकल्कै
र्वा स्नाताः शुक्लवाससो गृहं प्रविश्य तत्र शांतिकं कृत्वा ब्राह्मणपूजनं कुर्युरिति॥ देवलः॥ द
शमेहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च। अपरा
र्के बृहस्पतिः॥ नवमे वाससां त्यागो नखरोम्णां तथांतिमे। तत्रैव व्यासः॥ आशौचांत्यदिने क्षौ
रं तन्न्यां च गुरौ मृते। एतन्नेतात्स्यवयसामित्याह आपस्तंबः॥ अनुभाविनां च परिवापनमिति
अनुभाविनः कनिष्ठा इति विज्ञानेश्वररत्नाकरादयः॥ आशौचमनुभवतां पुंसां सर्वाशौचे मुं
डनं। आज्ययानरपते द्विजन्मनां दारकर्ममृतसूतकेषु च। बंधमोक्षमखदीक्षणेष्वपि क्षौर
मिष्टमखिलेषु चोडुषु। इति रत्नमालोक्तेर्जननाशौचेपीति शुद्धितत्वादयः। अत्र देशाचारतो
व्यवस्था। परं शिखावर्जं। केशश्मश्रुलोमनखानि वापयीत शिखावर्जमिति गोभिलोक्तेः
यत्त्वापस्तंबः। न समावृत्ता वपेयुरन्यत्र विहारादित्येके। विहारो दर्शादियागः। तेन विना स
मावृत्ता गृहस्था न वपेयुरित्यर्थः॥ वृथा छिनत्ति यः केशान्नतमाहुर्ब्रह्मघातिनमिति। तन्के
शश्मश्रुधारयता मग्र्या भवति संततिरिति दानधर्मोक्तकाम्यपरं। अनुभाविनः पुत्रादय
एवेत्येके। पुत्रः पत्नी च वपनं कुर्यादंते यथाविधि॥ पिंडदो नो चितिन्योपि कुर्यादित्थं समा
हित इत्यपरार्के व्यासोक्तेः। यत्तु मिताक्षरायां। द्वितीयेहनि कर्तव्यं क्षुरकर्म प्रयत्नतः। तृती
ये पंचमे वापि दशमे वा प्रदानतः इति। प्रदानत इति चतुर्थ्यादीनि। तत्प्रथमदिने असंभ
वे ज्ञेयं। अलुप्तकेशो यः पूर्वं सोत्र केशान्प्रवापयेत्। द्वितीयेन्हि तृतीये न्हि पंचमे सप्तमेपि वा।
यावत्श्राद्धं प्रदीयेत तावदित्यपरं मतमिति माधवीये। मदनरत्ने बौधायनोक्तेः। मदनपारि
जाते तु। दशमे प्रथमे च समुच्चय उक्तः। यत्तु दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेदिति तदे
कादशाहश्राद्धांगविप्रनिमंत्रणार्थं ज्ञेयं॥ ॥अथैकादशाहः॥ मनुः

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेऽंगिराः॥ प्रथमेऽह्नितृतीयेचपंच
मेसप्तमेतथा।नवमैकादशेचैवतन्नवश्राद्धमुच्यते।शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः।आपस्तंबाःषडित्याहुर्विभाषान्वितरेषुहि॥ पंचैकादशाहिकंविना।मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमाद्दिनं।विच्छित्त्यैनैकादशे।तत्कुर्यादितिमदनर
त्नेबौधायनोक्तेः।भविष्ये॥नवसप्तविशंराज्ञानवश्राद्धान्यनुक्रमात्।आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥हेमाद्रौवृद्धवसिष्ठः॥अलब्ध्वानुनवश्राद्धंप्रेतत्वान्नैवमुच्यते।अर्वाक्तु
द्वादशाहस्यलब्ध्वातरतिदुष्कृतं॥अतःषडेव॥एतान्येवविषमश्राद्धानीत्युच्यंते॥नागरखं
डेतु॥पंचमेसप्तमेतद्वदष्टमेनवमेतथा।दशमैकादशेचैवनवश्राद्धानितानिचेत्युक्तं॥कात्या
यनस्तु॥चतुर्थेपंचमेचैवनवमैकादशेतथा।यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते।प्रथमे
सप्तमेचेत्याद्यपादेव्यासपाठः॥बह्वृचानांतु।नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतूनित्युक्तं
नारायणवृत्तौ॥दीपिकायां॥ अथतदनुपादाद्येचतुर्थेदिनेश्राद्धं।पंचमसप्तमाष्टनवदिक्
रुद्रेषुयुग्मद्विजैः।प्रथमेऽह्नितृतीयेऽह्निपंचसप्तनवस्वपि।द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकंतुविन्य
सेत्।एकोविषमश्राद्धेष्ववयवपिंडश्चैकइतिद्वाविंशत्यर्थः।अत्रशाखाभेदाद्व्यवस्था।अपरार्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच।नकरोतिसुतोयस्तुतस्याधःपितरोग
नाः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथं॥मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत्।आवाहनेपितृश्चैवाइहलोकंपरित्य
ज्यगतोसिपरमांगतिम् मनसावायुभूतेनविप्रेत्वाहंनियोजयेइति।तत्रैवबह्वृचपरिशिष्टे।
अनूदकमधूपंचगंधमाल्यविवर्जितं।नवश्राद्धममंत्रंचपिंडोदकविवर्जितं।उदकमर्घ्यं।पिं
डोदकंशुंधंतापितरइत्यवनेजनादि।एकोद्दिष्टेषुसर्वेषुनस्वधानाभिरम्यतां नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं।अनपत्नेषुसर्वेषुनस्वधानाभिरम्यतां स्वस्त्यस्तुविसृजेदेवंसकृन्मणव
वर्जितं।एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते।पितृशब्दंनकुर्वीतपितृहाचोपजायते।सपिं
डनात्प्रागितिहेमाद्रिः।तेननैवस्वधांप्रयुंजीतप्रेतशब्दंदशाहिकेइति।[illegible]दशाहि
कोक्तेरेकादशाहेस्वधाप्रयोगएवेतिहारलतापराला॥रत्नावल्यां॥ आशीर्मोद्विगुणदर्भोज
याशीःस्वस्तिवाचनं।पितृशब्दःस्वसंबंधशर्मशब्दस्तथैवच।पात्रालंभोवगाहश्चउल्मुकंस्वोल्ले
खनादिकं।तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच।प्रदक्षिणविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थाश्चप्रेतश्राद्धेविवर्जयेत्।अत्रस्वधापितृनमःसशब्देनतिलोसीतिमंत्रेप्रेतशब्दो
हेनतूष्णींवातिलावपनं।तूष्णींमर्घ्यदानं।अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः।नाम्नाएकःपिं
डः।निनयनमंत्रेऊहः।अनुमंत्रणादिचमंत्रकं।अभिरम्यतामितिविसर्जनं॥एतन्नवश्राद्धवर्ज्यै
कोद्दिष्टेषु।नवश्राद्धेत्वमंत्रकं।सर्वमितिनारायणवृत्तिः।क्रियानिबंधे॥[illegible]
द्दिष्टेसदावधः।न्युब्जंतुपार्वणेकुर्यात्तत्सोपरिकुशान्न्यसेत्।नवश्राद्धगृहेकार्यंभार्यापश्चाप
मोपिवा।सपिंडीकरणंतानिप्रेतश्राद्धानियानिवै।तानिस्युर्लौकिकेवह्नौविनाह्याश्वलाय

परं विस्तृतं॥ प्रागुक्तशंखादिवचनानां चानाकरत्वादिति वदंतः। कल्पतरुवाचस्पतिप्रमुखाः
सर्वे महानिबंधविरोधादुपेक्ष्याः॥ उशनाः॥ अहाशौचेपि कर्तव्यमाद्यमेकादशेहनि॥ अती
तविषये सद्यस्त्र्यहोर्ध्वं वा तदिष्यते। याज्ञवल्क्यः॥ एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकं। आ
वाहनाग्नौकरणरहितं त्वपसव्यवत्। उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने। अभिरम्य
तामिति। वदेत्तब्रूयुस्तेभिरताः स्महेति। स्वदितमिति तृप्तिप्रश्नस्थाने स्वदितमिति अनुज्ञावचनं।
इति कात्यायनः॥ अग्नौकरणनिषेधोन्यपरः। बह्वृचानां तु सर्वैकोद्दिष्टेषु तद्भवत्येवेत्युक्तं प्रा
क्। प्रथमे पात्रे संस्रवानित्यस्य तृतीयेणापिधानस्य च बाधात्पात्रं न्युब्जेत निश्चलपाणिः
प्रचेताः॥ नात्र पात्रालंभो नाशिषः प्रार्थयेत्। अत्र विशेषो हेमाद्रौ वाराहे॥ प्रमस्तु कर्म तु कर्त
व्यं नखच्छेदस्तथैव च। स्नपनाभ्यंजनं दद्यात् द्विजाय विधिपूर्वकं। तथा॥ उपवेश्यासने भद्रे
छत्रं तत्र प्रकल्पयेत्। पश्चादुपानहौ दद्यात्सर्वाण्याभरणानि च॥ विष्णुः॥ दक्षिणांतं प्रागु
मुक्त्वा द्वात्रिस्थाल्यो द्वे चतुरंगुलपृथ्वीस्तावदंतरालास्तावदधः खाता वितस्त्यायतास्तिस्रः
कर्षूः कुर्यात्॥ कर्षूणां समीपेग्नित्रयमाधाय परिस्तीर्यैकैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पि
तृमते स्वधा। नमोग्नये कव्यवाहनाय स्वधा यमायांगिरस्वते इति स्थानत्रये प्राग्वत्। पिंडनिर्वपणं दधि
मधुघृतमांसैः कर्षूत्रयं पूरयित्वैतन्नमइति जपेत्। शेषं नवश्राद्धवत्। अत्र साग्नेरप्यंते वैश्वदे
व इत्युक्तं प्राक्। इदं दशाहकर्त्रा पुत्रेण वा कार्यमित्युक्तं। क्रियानिबंधे गृह्यकारिकायां तिलोसि
प्रेतदैवत्यः प्रेतान् लोकान् हिनोतकं। मंत्रमुक्त्वा तिलानेवं प्रक्षिपेदर्घ्यपात्रतः। दक्षिणामुदकुं
भं च सान्नं दत्वा तथैव गां। तस्मै दद्याद्भुक्तशेषं तत्रान्यमपि भाजनं। विप्राभावेग्नावेकोद्दिष्टं तु।
अग्नौ पायसं श्रपयित्वाज्यभागांतेन तद्येश्राद्धप्रयोगं। कृत्वाग्नौ प्रेतमावाह्य गंधाद्यैः संपूज्य
पृथिवी ते पात्रमित्यादिनान्नं संकल्प्योदीरतामवर इत्यष्टाभिश्चतुरावृत्ताभिर्द्वात्रिंशदाहुतीर्हु
त्वा पिंडदानादि श्राद्धं समापयेदिति। याज्ञवल्क्यः। एतत्सपिंडीकरणमेकोद्दिष्टं स्त्रिया अपि

॥ ॥ अथ वृषोत्सर्गः॥

स च नित्यकाम्यः॥ न करोति वृषोत्सर्गं सुतीर्थे वा
जलांजलिं। न ददाति सुतो यस्तु पितुरुच्चार एव सः। उच्चारः पुरीषं। एष्टव्या बहवः पुत्रा यद्येकोपि
गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति मात्स्यकौर्म्योक्तेः॥ एकादशेह्नि प्रेतस्य
यस्य नोत्सृज्यते वृषः। प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपीति। षट्त्रिंशन्मते निंदाश्रुतेः। एवं
कृत्वाप्यवाप्नोति फलं वाजिमखादितं। यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिं। वृषोत्सृष्टः
पुनात्येव दश पूर्वान् दशापरान्। इति॥ देवीपुराणभविष्यादौ फलश्रुतेश्च॥ अयं द्वादशा
हेप्युक्तो भविष्ये। चैत्र्यां वापि तृतीयां वा वैशाख्यां द्वादशेह्नि वेति। विष्णुधर्मे तु मृताहेप्युक्तः।
विषुवद्द्वितये चैव मृताहे वा ध्रुवस्य चेति। अयं गृहे न कार्यः॥ न गृहे मोचयेन्नीलं काममयं नश्यत्यु
लं फलमिति कालिकापुराणात्॥ कामधेनौ॥ वत्सराभ्यंतरे पित्रोर्वृषस्योत्सर्गकर्मणि। वृद्धि
[illegible]र्वीतत न दन्यत्र समारभेत्॥ तत्र संवत्सरात्प्राक्॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः
[illegible]र विषाणाभ्यां स नीलो वृष उच्यते। श्वेतवर्णस्तु मुख्यादीनि स्थानानि श्यामस्य वाश्वे

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधैः। वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः। शुद्धिन
त्वेदेवलः॥ अथाहः सुनिवृत्तेषु सुस्नाताः कृतमंगलाः। आशौचाद्विप्रमुच्यंते ब्राह्मणान्स्व
स्तिवाच्य च। याज्ञवल्क्यः॥ आद्यमेकादशेऽहनि। क्षत्रियाद्यैराशौचेप्येकादशेह्नि श्राद्धं कार्यं।
आद्यं श्राद्धमशुद्धोपि कुर्यादेकादशेऽहनि। कर्तुस्तात्कालिकी शुद्धिरशुद्धिः पुनरेव सइति हेमा
द्रौ शंखोक्तेः। पैठीनसिः॥ एकादशेह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतं। चतुर्णामपि वर्णानां
सूतकं तु पृथक् पृथक्॥ यत्तु मरीचिः॥ आशौचांते ततः सम्यक् पिंडदानं समाप्यते। ततः श्रा
द्धं प्रदातव्यं सर्ववर्णेष्वयं विधिरिति। तत्सर्ववर्णानां दशाहाशौचपरं। यत्तु विष्णुः॥ अथाशौ
चापगमइति॥ पंचगौडग्रंथे हारीतः॥ श्वोभूते एकोद्दिष्टं कुर्यात्। यत्तु बैजवापः। ऊर्ध्वं दश
म्या अपरेद्युरिति तद्द्विजविषयं। एतेन दशमपिंडोत्कर्षपक्षे अवयवपिंडसमाप्तौ कथमेका
दशाहे श्राद्धमिति मूर्खोक्तिः परास्ता। वचनादाशौचमध्य एव तत्राप्यविरोधात्॥ भविष्ये॥
एकादशेभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि। भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने॥ यत्तु मा
त्स्ये॥ एकादशेऽहनि तथा विप्रानेकादशैव तु। क्षत्रादिः सूतकांते तु भोजयेदयुजो द्विजानि
ति तद्रुद्रगणश्राद्धपरमिति मदनपारिजातः॥ गौडास्तु स्मार्तवचनात्क्षत्रियादीनामाशौचां
ते एवेत्याहुः॥ रामायणेपि॥ समतीते दशाहे तु कृतशौचो यथाविधिः। चक्रे द्वादशिकं श्राद्धं
त्रयोदशिकमेव च। द्वादशिकं द्वादशाहेऽतीते श्राद्धं। त्रयोदशिकं चतुर्दशाह विशेषसपिंडन
पाथेयादि। क्षत्रियाणां द्वादशाहाशौचे त्रयोदशेऽह्न्येकोद्दिष्टं। चतुर्दशे सपिंडनं। द्विविध
वाक्यादेकादशाहाशौचांतयोर्विकल्प इत्येके॥ आद्यः शौचादौ युद्धहतादेरेकादशाहे
अन्येषामाशौचांत इति वयं कौमे॥ एकादशेह्नि कुर्वीत प्रेतमुद्दिश्य भावतः। द्वादशेवा
ह्नि कर्तव्यमनिंद्येप्यथवाहनि। निंद्यं प्रेतक्रियाकाले उक्तं। एकादशेतु निषेध इत्युक्तं प्राक्॥
बृहस्पतिः॥ वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकं। गंधमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे न
दर्पयेत्। श्रोत्रिया भोजनीयास्तु नव सप्त त्रयो दश। ज्ञानयोगाथवा निःस्वस्तथा चानिषये
परे। देवयाज्ञिकनिबंधे। एकादशासु विप्रेषु प्रेतमात्राख्य भोजयेत्। तत्राद्यास्वशय्यादिद
द्यादाद्यमिति स्मृतं॥ विष्णुः॥ एकवन्मंत्रानूहेतैकोद्दिष्टे। बहुवचनांतानेकवचनांतान्वदे
दित्यर्थः। एतद्दूक्षार्थे त्वे॥ अस्य विप्रगौणकालमाह। हेमाद्रौ बौधायनः। एकोद्दिष्टं एवं
स्याद्द्वादशेऽहनि वा पुनः। अत ऊर्ध्वं मयुग्मेषु कुर्वीताहःस्वशक्तितः। अर्द्धमासे यत्रा मासि
क्रतौ संवत्सरेपि वेति॥ तत्रैव लघुहारीतः॥ एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयं। अभा
वे पाकपात्राणां तदहः समुपोषणं। गोभिलः॥ ब्राह्मणं भोजयेदाद्ये होतव्यमनले यथा
पुनश्च भोजयेदेकं द्विरावृत्तिर्भवेदिति। एतदाद्यमासिकाद्याब्दिकयोः सिद्ध्यर्थमिति भट्टाः
युद्धहतादौ तु हेमाद्रौ पृथ्वीचंद्रोदये पैठीनसिः॥ सद्यः शौचेपि दातव्यं प्रेतस्यैकादशेऽहनि। स
एव दिवसस्तस्य श्राद्धशय्यासनादिषु। एवमेकाहादौ॥ अतोत्र द्वितीयेऽह्नि एकादशाहे
वदंतो शूलपाणिः स्मार्तगौडश्च परास्तः॥ एतेनाद्यमेकादशेऽहनीत्याशौचानंतर दिन

राजन्यकथ्यमानं निशामय। तेनोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजनं। यद्यदिष्टं च तस्यासीत्तत्तत्
सर्वं परिकल्पयेत्॥ तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा। पूजयित्वा प्रदातव्या मृतशय्याय
थोदिता॥ पाद्मे॥ मत्स्ये॥ द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणां। कांचनं पुरुषं तद्वत्फलवस्त्र
समन्वितं। संपूज्य द्विजदंपत्यं नानाभरणभूषितं। उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत्।
रजतस्य तु पात्रेण दधिदुग्धसमन्वितं। अस्थि ललाटिकं गृह्य सूक्ष्मं कृत्वा सपायसं। भोजये
द्द्विजदंपत्यं विधिरेष सनातनः। एवमेव विधिर्दृष्टः पार्वतीये द्विजोत्तमैः। एतत्प्रतिग्रहे तु
नैवोक्तं। गृहीता यानु तस्या वै पुनः संस्कारमर्हति। शय्यादानफलं भविष्ये॥ स्वर्गे पुरंदरपु
रे सूर्यपुत्रालये तथा। सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः। आभूतसंप्लवं यावत्तिष्ठत्या
तंकवर्जित इति॥ ॥अथोदकुंभः॥ हेमाद्रौ स्मृतिसमुच्चये। एकादशा
हात्प्रभृति घटस्तोयान्नसंयुतः। दिनेदिने प्रदातव्यो यावत्संवत्सरं सुतैः। लौगाक्षिः॥ यस्य संव
त्सरादर्वाक् सपिंडीकरणं भवेत्। मासिकं चोदकुंभं च देयं तस्यापि वत्सरं॥ उत्तरार्द्धे॥ तस्या
प्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे इति याज्ञवल्क्यपाठः॥ सपिंडनापकर्षे स्यापकर्षप्राप्ते वा
धकमिदमिति शूलपाणिः॥ तन्न॥ प्रकृतिविकाराभावेन तदंतन्यायाविषयत्वात्॥ मात्स्ये॥
यावदब्दं च यो दद्यादुदकुंभं विमत्सरः। प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत्॥ केचित्त्रयो
दशाहमारभ्याहुस्तन्निर्मूलं॥ अत्र देवयाज्ञिकः॥ सपिंडनापकर्षे सांवत्सरं॥ यावदुदकुंभ
मर्वागेव दद्यान्नोर्ध्वं। प्रेतलोकगतस्यान्नं सोदकुंभं प्रयच्छतेति। गोविंदराजधृतविष्णूक्तेः।
अन्नं चैव स्वशक्त्यानुसंख्यां कृत्वाब्दिकावधि। दातव्यं ब्राह्मणे स्कंदघटादौ निष्क्रयं तु वा। अ
पि श्राद्धशते दत्ते रुदकुंभं विना नराः। दरिद्रा दुःखिनस्ते तु भ्रमंति च भवार्णवे। तेनापकृष्य
दातव्यं प्रेतस्याप्युदकुंभकमिति। गोभिलभाष्ये स्कांदाच्च। सपिंडनात्प्रागेव तस्य विधानादूर्ध्वं
निषेधादित्याह॥ तन्न॥ उदकुंभे पार्वणविधानानुपपत्तेरेवं व्याख्यायां मानाभावान्मिताक्ष
रादिविरोधाच्च। वचनं यदि समूलं तदा वृद्ध्यापकर्षे विधत्ते। प्रेतश्राद्धानि सर्वाणि सपिंडीक
रणं तथेति हेमाद्रौ गारवापनोक्तेः। तस्याप्यन्नं सोदकुंभमिति। याज्ञवल्क्यविरोधाच्च॥ मद
नरत्ने गौतमः॥ अदैवं पार्वणश्राद्धं सोदकुंभमधर्मकं। कुर्यात्प्रत्याब्दिकान् श्राद्धान्संकल्प
विधिनान्वहं। अधर्मकं ब्रह्मचर्यादिनियमहीनं। एतन्मासिकवदेकोद्दिष्टं पार्वणं वा कार्यं॥
अपरार्के तु॥ सपिंडीकरणे वृत्ते पृथक्त्वं नोपपद्यते। पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिंडनेति
लघुहारीतोक्तौ। अपि। तस्याप्यन्नं सोदकुंभं देयं संवत्सरं द्विजे इति याज्ञवल्कीयेन तस्यैकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह। अत्र पिंडदानं कृताकृतं। अहरहरन्नमस्मै ब्राह्मणायोद
कुंभं च। दद्यात्पिंडमप्येके निपृणंतीति हेमाद्रौ पारस्करोक्तेः। श्राद्धाशक्तौ पिंडमात्रमिति गौडाः
॥ तन्न॥ अपिशब्दबाधापत्तेः। हारीतः॥ मृते पितरि वै पुत्रः पिंडमब्दं समाचरेत्। अन्नं कुंभं
च विप्राय प्रेतनिर्देशधर्मवित्। प्रेतशब्दोच्चारणेनेति हलायुधः॥ पद्मे॥ प्रेतस्य निर्देशो यत्र
तदेकोद्दिष्टं तद्धर्मवित् इत्यर्थः। अत्राशौचांतदिनाद्यावदब्दांतं वत्सरपूर्त्तेः शौचेनाधिकारवि

नानियमस्यसोपिनीलउक्तोमात्स्यादौ॥ देवीपुराणे॥ चतस्रोवत्सिकाभद्राहेवासंभवतोपिवा। यत्तु
पठंति॥ वृषोत्सर्जनवेलायांवृषाभावेकथंचन। मृद्भिःपिष्टैश्चदर्भैर्वावृषंकृत्वाविमोचयेत्॥ नष्ट
कृतेवृषोत्सर्गेहोममात्रंकारयेदिति। तन्निर्मूलं॥ तद्विधिर्हेमाद्रौभट्टकृतौचज्ञेयः। अत्रदेव
याज्ञिकेनवृषोत्सर्गेपूर्वंपुरुषसूक्तेनविष्णुरूपिप्रेतोद्देशेनविष्णुतर्पणमुक्तं। तत्रमूलंचिंत्यं।
पारस्करः॥ सव्येनपाणिनापुच्छंसमालभ्यवृषस्यतु दक्षिणेनाप्स्वादायसतिलाःसकुश
स्ततः। प्रेतगोत्रंसमुच्चार्यअमुकस्यैइतिब्रुवन्। एवएषमयादत्तस्तंतारयतुसर्वदा। सहेम
सतिलंभूमाविमुच्चार्यविनिक्षिपेत्॥ तथा॥ विधारयेन्नतंकश्चिन्नचकश्चनवाहयेत्।
नदोहयेच्चनाधेनुंनचकश्चनबंधयेत्। स्त्रीषुविशेषःसंग्रहे। पतिपुत्रवतीनारीभर्तुरग्रेमृता
यदि। वृषोत्सर्गंनकुर्वीतगांतुदद्यात्पयस्विनीं। पतिपुत्रयोःसाहित्यंविवक्षितं। अन्वारोहणे
पिंडदानमेवेत्युक्तंप्राक्। आशौचांतरेपिवृषोत्सर्गोमासिकशय्यादिदद्यादेवेत्युक्तं। कि
यानिबंधेस्यत्पांतरे। सूतकेमृतकेचैवद्वितीयमृतकंयदि। पिंडदानंप्रकुर्वीतवृषोत्सर्गंतथैव
च। नहन्यात्सूतककर्मद्वादशैकादशाहिकं। शुद्धोवाप्यथवाशुद्धःकुर्यादेवाविचारयन्निति।
॥ ॥अथपददानमुक्तं॥ देवजानीयेगारुडे एकादशाहंप्रक्रम्य। त
दन्हिदीयतेसर्वंद्वादशाहेविशेषतः। पदानिसर्ववस्तूनिवरिष्ठानित्रयोदश। योददातिमृतस्ये
हजीवतोप्यात्महेतवे। सुखीभूत्वामहामार्गेतेननेयसगच्छति। तथा॥ आसनोपानहौछ
त्रमुद्रिकाचकमंडलु भाजनंभाजनाधारंवस्त्राण्यष्टविधंपदं। तथा॥ भाजनासनदाने
नमुद्रिकाभाजनेनच। आज्ययज्ञोपवीतेनपदंसंपूर्णतांव्रजेत्॥ महिषीरथगोदानात्सु
खीभवतिनिश्चितं सर्वोपस्करयुक्तानिपदान्यत्रत्रयोदश। योददातिमृतस्येहजीवन्नप्या
त्महेतवे सगच्छतिपरंस्थानंमहाकष्टविवर्जितः। त्रयोदशपदानीत्थंप्रेतायदशमेहनि
दातव्यानियथाशक्तितेनासौप्रीणितोभवेत्। अन्नंचैवोदकंचैवोपानहौचकमंडलुं। छ
त्रंवस्त्रंतथायष्टिंलोहदंडंतथाश्मं। अग्नीष्टकांचदीपंचतिलांस्तांबूलमेवच। चंदनं
पुष्पदानंचोपदानानिचतुर्दश। योश्वंरथंगजंवापिब्राह्मणेप्रतिपादयेत्। स्वमहिम्नानु
सारेणतत्तत्सुखमवाप्नुयादिति। अत्रमूलंचिंत्यं॥ ॥अथशय्यादानं॥
हेमाद्रौभविष्ये॥ तस्माच्छय्यांसमासाद्यसारदारुमयींदृढां। दंतपत्रचितांरम्यांहेमपट्टैर
लंकृतां। हंसतूलीप्रतिच्छन्नांशुभगंडोपधानिकां प्रच्छादनपटीयुक्तांगंधधूपादिवासितां
तस्यांसंस्थापयेद्धैमंहरिंलक्ष्म्यासमन्वितं। अत्रहरिस्थानेप्रेतं। उच्छीर्षकेघृतभृतंकलशं
परिकल्पयेत् तांबूलंकुंकुमंक्षौद्रंकर्पूरागुरुचंदनं। दीपिकोपानहच्छत्रचामरासनभाजनं॥
पार्श्वेषुस्थापयेद्भक्त्यासप्तधान्यानिचैवहि। शयनस्थस्यभवतियदन्यदुपकारकं भृंगारकर
काद्यंतुपंचवर्णंवितानकं। मंत्रस्तु॥ यथानकृष्णशयनंशून्यंसागरजातया। शय्याममाप्य
शून्यास्तुतथाजन्मनिजन्मनि। यस्मादशून्यंशयनंकेशवस्यशिवस्यच। अउंतदेवदत्तेवं
तस्यसकलंप्रणिपत्यविसर्जयेत्। एकादशाहेपितथाविधिरेषप्रकीर्तितः। विशेषश्चात्र

राजन्यकथ्यमानंनिशामय। तेनोपभुक्तंयत्किंचिद्वस्त्रवाहनभोजनं। यद्यदिष्टंचतस्यासीत्तत्तत्
सर्वंपरिकल्पयेत्॥ तमेवपुरुषंहैमंतस्यांसंस्थापयेत्तदा। पूजयित्वाप्रदातव्यामृतशय्याय
थोदिता॥ पाद्मे॥ मृतकांतेद्वितीयेह्निशय्यांदद्यात्सुलक्षणां। कांचनंपुरुषंतद्वत्फलवस्त्र
समन्वितं। संपूज्यद्विजदंपत्यंनानाभरणभूषितं। उपवेश्यतुशय्यायांमधुपर्कंततोददेत्
रजतस्यतुपात्रेणदधिदुग्धसमन्वितं। अस्थिललाटिकंगृह्यसूक्ष्मंकृत्वासपायसं। भोजयेद्
द्विजदंपत्यंविधिरेषसनातनः॥ एषएवविधिर्दृष्टःपार्वतीयेद्विजोत्तमैः। एतत्प्रतिग्रहेत
त्रैवोक्तं। गृहीतायांतुतस्यांवैपुनःसंस्कारमर्हति॥ शय्यादानफलंभविष्ये॥ स्वर्गेपुरंदरपु
रेसूर्यपुत्रालयेतथा। सुखंवसत्यसौजंतुःशय्यादानप्रभावतः। आभूतसंप्लवंयावत्तिष्ठत्या
तंकवर्जित इति॥ ॥अथोदकुंभः॥ हेमाद्रौस्मृतिसमुच्चये। एकादशा
हात्प्रभृतिघटस्तोयान्नसंयुतः। दिनेदिनेप्रदातव्योयावत्संवत्सरंसुतैः। लौगाक्षिः॥ यस्यसंव
त्सरादर्वाक्सपिंडीकरणंभवेत्। मासिकंचोदकुंभंचदेयंतस्यापिवत्सरं। उत्तरार्द्धे॥ तस्या
प्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजे इति याज्ञवल्क्यपाठः॥ सपिंडनापकर्षेस्यापकर्षप्राप्तेर्बा
धकमिदमितिशूलपाणिः॥ तन्न॥ प्रकृतिविकारभावेनतदंतन्यायाविषयत्वात्॥ मात्स्ये॥
यावदब्दंचयोदद्यादुदकुंभंविमत्सरः। प्रेतायान्नसमायुक्तंसोऽश्वमेधफलंलभेत्॥ केचित्त्रयो
दशाहमारभ्याहुस्तन्निर्मूलं॥ अत्रदेवयाज्ञिकः॥ सपिंडनापकर्षेसांवत्सरं। यावदुदकुंभ
मर्वागेवदद्यान्नोर्ध्वं। प्रेतलोकगतस्यान्नंसोदकुंभंप्रयच्छतेति। गोविंदराजधृतविष्णूक्तेः।
अन्नंचैवयथाशक्त्यानुसंख्यांकृत्वाब्दिकावधि। दानंब्राह्मणेस्कंदघटादेनिक्षिपेत्तुवा। अ
पिश्राद्धशतैर्दत्तैरुदकुंभंविनानराः। दरिद्रादुःखिनस्तातभ्रमंतिचभवार्णवे। तेनापकृष्य
दातव्यंप्रेतस्याप्युदकुंभकमिति। गोभिलभाष्येस्कांदाच्च। सपिंडनात्प्रागेवतस्यविधानादूर्ध्वं
निषेधादित्याह॥ तन्न॥ उदकुंभेपार्वणविधानानुपपत्तेरेवंव्याख्यायांमानाभावान्मितास
रादिविरोधाच्च। वचनंयदिसमूलंतदापकर्षंविधत्ते। प्रेतश्राद्धानिसर्वाणिसपिंडीक
रणंतथेतिहेमाद्रौपठितवाक्यनोक्तेः। तस्याप्यन्नंसोदकुंभमिति। याज्ञवल्क्यविरोधाच्च॥ मद
नरत्नेगौतमः॥ अदैवंपार्वणंश्राद्धंसोदकुंभमधर्मकं। कुर्यात्प्रत्याब्दिकान्श्राद्धानसंकल्प
विधिनान्वहं। अधर्मकंब्रह्मचर्यादिनियमहीनं। एतन्मासिकवदेकोद्दिष्टंपार्वणंवाकार्यं॥
अपरार्केतु॥ सपिंडीकरणेवृत्तेपृथक्त्वंनोपपद्यते। पृथक्त्वेतुकृतेपश्चात्पुनःकार्यासपिंडनेति
लघुहारीतोक्तेः। वपि। तस्याप्यन्नंसोदकुंभंदेयंसंवत्सरंद्विजे इतियाज्ञवल्कीयेनतस्यैकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह। अत्रपिंडदानंकृताकृतं। अहरहरन्नमस्मैब्राह्मणायोद
कुंभंच। दद्यात्पिंडमप्येकेनिपृणंतीतिहेमाद्रौपारस्करोक्तेः। श्राद्धाशक्तौपिंडमात्रमितिगौडाः
॥तन्न॥ अपिशब्दबाधापत्तेः॥ हारीतः॥ मृतेपितरिवैपुत्रःपिंडमब्दंसमाचरेत्। अन्नंकुंभं
चविप्रायप्रेतनिर्देशधर्मवित्। प्रेतशब्दोच्चारणेनेतिहलायुधः॥ मद्वा॥ प्रेतस्यनिर्देशोयत्र
तदेकोद्दिष्टंतद्धर्मवत्इत्यर्थः। अत्राशौचांतदिनाद्यावदब्दांतवत्सरपूर्तेःशौचंनाधिकारिवि

शेषणं। तेनमृतदिनमारभ्यैतन्नकार्यमितिकेचित्। तन्न॥ हेमाद्रिधृतवचोविरोधात्। मध्ये आशौ
चादिनाबाधेतु लोपएवदार्शवत्। तथाप्रथमाब्दे दीपदानमुक्तं स्वजातीयेगारे॥ यत्यहं दीप
कोदेयो मार्गेतुविषमेनरैः। यावत्संवत्सरंवापिप्रेतस्यसुखलिप्सया। सांधुबोदप्युखंदीपंदे
यागारेद्विजालये। कुर्याद्यास्पसुखंपित्रेन्नाद्भिः संकल्पसुस्थितं॥ ॥अथमासिका
नि॥ ॥तानिचकृत्वैवसपिंडनंकार्यं। तथाचगोभिललौगाक्षी॥ श्राद्धानिषोडशा
दत्त्वानैवकुर्यात्सपिंडनं। श्राद्धानिषोडशापाद्यविदधीतसपिंडनं॥ तानित्वाहजातूकर्ण्यः
द्वादशप्रतिमास्यानि आद्यषाण्मासिकेतथा। त्रैपक्षिकाब्दिकेचेति श्राद्धान्येतानिषोडश। आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः॥ हेमाद्रौतुसपिंडीकरणंचैवर
त्येतच्छ्राद्धषोडशमित्युत्तरार्द्धेपाठः। तदाआद्यमूनमासिकंद्वादशाहे। षाण्मासिकंऊनष
ष्ठोनाब्दिकरत्यर्थः। काण्वायनस्त्वन्यथाह॥ द्वादशप्रतिमास्यानि आद्यषाण्मासिकेतथा।
सपिंडीकरणंचैवरत्येतच्छ्राद्धषोडशः। एकाहेनतुषाण्मासायदास्युरपिवात्रिभिः। न्यूनः
संवत्सरश्चैवस्यातांषाण्मासिकेतदा। द्विवचनादूनषष्ठोनाब्दिकेरत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहेत्रिपक्षेचषाण्मासेमासिकाब्दिके। श्राद्धानिषोडशैतानिसंस्मृता
निमनीषिभिः। द्वादशाहपदमूनमासिकपरम्॥ तस्यद्वादशाहेप्युक्तेरितिकालादर्शः॥ मद
नरत्नेब्राह्मेत्वन्यथोक्तं॥ नृणांतुत्पन्नदेहानांश्राद्धाः षोडशसर्वदा। चतुर्थेपंचमेचैवनवमै
कादशेतथा। ततोद्वादशभिर्मासैःश्राद्धाद्वादशसंख्यया। चतुर्थ्यादीनिदिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयनंश्राद्धंत्रिपक्षेमासिकानितु। रिक्तपोश्चतथातिथ्योरितिन्यूनष
ष्ठोनाब्दिकपरमितिहेमाद्रिः। अत्रदेशकुलशाखाभेदाद्व्यवस्थेतिसर्वेनिबंधाः॥ गालवः॥
ऊनषाण्मासिकंषष्ठमासेवाप्यूनमासिकं। त्रैपाक्षिकंत्रिपक्षस्यादूनाब्दंद्वादशेतथा। ऊन
मासिकेतुगोभिलः॥ मरणाद्द्वादशाहेस्यान्मासन्यूनेवोनमासिकं॥ मदनरत्नेकालादर्शेचशौ
नकगौतमः॥ एकद्वित्रिदिनैरूनेत्रिभागेनोनएवच श्राद्धान्यूनाब्दिकादीनिकुर्यादित्याहगौ
तमः॥ क्रियानिबंधेतु॥ सार्द्धएकादशेमासेसार्द्धेवैपंचमेतथा॥ ऊनाब्दमूनषाण्मा
संभवेतांश्राद्धकर्मणीत्युक्तं। तन्निर्मूलंचिंत्य॥ ऊनेषुवर्ज्यान्याहमरीचिः॥ द्विपुष्करेचनंदा
सुसिनीवाल्यांभृगोर्दिने। चतुर्दश्यांचनोनानिकृत्तिकासुत्रिपुष्करे। ज्योतिषे। त्रिपादृक्ष
तिथिभद्राभौमसूर्यरविभिः सह। तदात्रिपुष्करोयोगद्वयोर्योगेद्विपुष्करः॥ गालवः॥ त्रिभि
र्वादिवसैरूनेत्वेकेनद्वितयेनवा। आद्यादिषुचमासेषुकुर्यादूनादिकाब्दिकं। एकन्यूनपक्षे
पंचम्यांमृतस्यतृतीयां त्रिभिर्न्यूनेप्रतिपदि। द्व्यूनेद्वितीयायामितिकेचित्। माधवस्तु॥ षा
ण्मासिकाब्दिकेश्राद्धेस्यातांपूर्वेद्युरेवते। मासिकानिस्वकीयेतुदिवसेद्वादशेपिवेति॥ पै
ठीनसिवाक्येऊनषाण्मासिकमूनाब्दिकंचमृताहेपूर्वेद्युःकार्यमित्यर्थमाह पूर्वेद्युर्मृताह
दिनपूर्वे। मासिकानिस्वकीयेतुदिवसेइत्युक्तेः इदमेवयुक्तं। मदनरत्नेप्येवंयाज्ञवल्क्यः॥
मृताहनितुकर्तव्यंप्रतिमासंतुवत्सरं प्रतिसंवत्सरंचैवमाद्यमेकादशेहनि। अत्राद्यमासि

शेषणे। तेन प्रतिदिनमारभ्यैतन्नकार्यमिति केचित्। तन्न॥ हेमाद्रिस्तु वचोविरोधात्। मध्ये आशौ
चादिना बाधे तु लोप एव दोषश्रवणात्। तथा प्रथमाब्दे दीपदानमुक्तं देवजानीये गारुडे॥ प्रत्यहं दीप
को देयो मार्गे तु विषमे नरः। यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया। प्राङ्मुखोदङ्मुखे दीपं दे
वागारे द्विजालये। कुर्याद्याम्यमुखं पित्र्ये ह्यद्भिः संकल्प्य सुस्थितं॥ ॥अथ मासिका
नि॥ ॥तानि च कृत्वैव सपिंडनं कार्यं। तथा च गोभिललौगाक्षी॥ श्राद्धानि षोडशा
दत्त्वा नैव कुर्यात्सपिंडनं। श्राद्धानि षोडशापाद्य विदधीत सपिंडनं॥ तानि त्वाह जातूकर्ण्यः
द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥ आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः हेमाद्रौ तु सपिंडीकरणं चैव र
त्येतच्छ्राद्धषोडशमित्युत्तरार्द्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे। षाण्मासिकमूनष
ष्ठोनाब्दिकमित्यर्थः। कात्यायनस्त्वन्यथाह॥ द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा।
सपिंडीकरणं चैवमित्येतच्छ्राद्धषोडशं। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः
संवत्सरश्चैव स्यातां षाण्मासिके तदा। द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहे त्रिपक्षे च षाण्मासे मासिकाब्दिके। श्राद्धानि षोडशैतानि संस्मृता
नि मनीषिभिः। द्वादशाहपदमूनमासिकपरम्॥ तस्य द्वादशाहे युक्तेरिति कालादर्शः॥ मद
नरत्ने श्राद्धे त्वन्यथोक्तं॥ नृणां तु मृतदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमै
कादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया इति। चतुर्थ्यादीनि दिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु। रिक्तमोक्षस्तथा तिथ्योरिति न्यूनष
ष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे निबंधाः॥ गालवः
ऊनषाण्मासिकं षष्ठमासे वाप्यूनमासिकं। त्रैपाक्षिकं त्रिपक्षस्यादूनाब्दं द्वादशे तथा। ऊन
मासिके तु गोभिलः॥ मरणाद्द्वादशाहे स्यान्मासे न्यूने वोनमासिकं॥ मदनरत्ने कालादर्शे च श्लो
कगौतमः॥ एकद्वित्रिदिनैरूनैस्त्रिभागेनोन एव च श्राद्धान्यूनादिकादीनि कुर्यादित्याह गौ
तमः॥ क्रियानिबंधे क्रतुस्तु॥ सार्द्धे एकादशे मासे सार्द्धे वै पंचमे तथा॥ ऊनाब्दमूनषाण्मा
सं भवेतां श्राद्धकर्मणीत्युक्तं। तत्र मूलं चिंत्यं॥ ऊने वर्ज्यान्याह मरीचिः॥ द्विपुष्करे च नंदा
सु सिनीवाल्यां भृगोर्दिने। चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे। ज्योतिषे। त्रिपादृक्ष
तिथिभद्राभौमजरविभिः सह। तदा त्रिपुष्करो योगो द्व्योर्योगे द्विपुष्करः॥ गालवः॥ त्रिभि
र्वा दिवसैरूनैस्त्वेकेन द्वितयेन वा। आद्यादिषु च मासेषु कुर्यादूनादिकाब्दिकं। एकन्यूनपक्षे
पंचम्यां मृतस्य तृतीयां त्रिभिर्न्यूने प्रतिपदि। न्यूने द्वितीयायामिति केचित्। माधवस्तु॥ षा
ण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेपि वेति॥ पै
ठीनसिवाक्ये ऊनषाण्मासिकमूनाब्दिकं च मृताहे पूर्वेद्युः कार्यमित्यर्थमाह पूर्वेद्युर्मृताह
दित्यर्थः। मासिकानि स्वकीये तु दिवसे इत्युक्तेः इदमेव युक्तं। मदनरत्नेप्येवं याज्ञवल्क्यः॥
मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरं प्रतिसंवत्सरं चैव आद्यमेकादशेहनि। अत्राद्यमासि

हं निर्वर्त्य पूर्वं दर्शाद्यथाविधि॥ अकुर्वीतानग्निमान् विप्रो मातापित्रोः सपिंडनं॥ आशौचांत प्रथम
दर्शयोर्मध्ये कस्मिंश्चिदन्हीत्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि॥ तत्रानुप्रवेशान्मा
तुरपि प्राक्दर्शान्न सपिंडनयुक्तमित्यपरार्कः। एवं पितामहादेरपि सपिंडनं प्राग्दर्शात्कार्यं। तेनवि
ना पार्वणायोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान् भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुतैरिति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्त्ता नग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतोपि अनग्निस्तु यदा वीरो भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तस्य त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एव। असाग्निकस्तु यदा कर्त्ता प्रेतो वाप्यग्निमान् भवेत्॥ द्वादशाहं तदा
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्यात् यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णे द्वे भरतर्षभ द्वादशेहनि षण्मासे त्रिपक्षे वा त्रिमासि वा
एकादशेपि वा मासि मंगलस्याप्युपस्थितौ। कात्यायनगोभिलौ। यदहर्वा वृद्धिरापद्यते। तद्वा वृद्धि
दिने एवेति वाचस्पतिः तन्नप्रातर्वृद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वेद्युर्वा थापत्तेः। वृद्धिदिने तत्पूर्वदिने चेति श्रीदत्तः स्मार्त्तगौडस्तु वृद्धिः पूर्वं वर्षांत्य श्वस्तनः सपि
डस्य प्रेतत्वनाशसहकारीति न परेद्युर्विधा। वृद्ध्यभावे पितृत्वकर्त्तव्यतानिश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वेद्युरेण सहकृतं प्रेतत्वनाशकमित्याह। तन्न अकाले कृतस्य फलाजनकत्वात्। एते
न निमित्तनिश्चय एव तत्र एवाधिकारात् वृद्ध्यभावे पितृत्वसिद्धिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांगत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने पुलस्त्यः॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे संपूर्णे भ्युदयेपि वा। द्वादशाहे तु केषांचिन्मतं चैकादशे तथा पृथ्वीचंद्रोदये
बौधायनः॥

॥अथ सपिंडीकरणम्॥

त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वै कादशाहे वेति। एतत्प्रक्रमे विष्णुः॥ मासिकार्थं द्वादशाहे श्राद्धं
कृत्वा त्रयोदशेन्हि वा। कुर्यान्मंत्रवर्जं हि शूद्राणां द्वादशेन्हि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थे दिनमेकं वर्धयेदिति आशौचोत्तरं द्वादशस्वहःसु मासिकानि तेषु वा यद्द्वादशदि
ने यून मासिकादीनि कृत्वा त्रयोदशेन्हि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशेन्हि कुर्यात्॥ शू
द्रे त्रयोदशे द्वादशेन्हीत्यस्य मासिकांत्यदिनपरत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरांते सज्जे
ने नवमे मासीत्येके अत्र साग्नेरनवोक्तः कालाभावे त्रिपक्षादि संवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुस्त्वग्नेर्वृद्धिनिश्चय एव सर्वेपकर्षमकार इत्याह। तन्न॥ यदहर्वेति स्वातंत्र्यश्रुतेर्यद्यपि वृद्धिनि
मित्तोपकर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांतादिगौणकालव
द्वृद्धेरपि प्राप्तेः वक्ष्यमाणगोभिलवचनात्। अयातयामत्वं न भवेत्तु नरस्येति दोषश्रुत्यविशे
षाच्च। अपरार्के पृथ्वीचंद्रादिलरसोप्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादौ
तु वृद्धिश्राद्धलोप एवेत्याचार्यचूडामणिः पुंसवनाद्यन्नप्राशनांतेष्वावश्यकेष्वपकर्ष इति। आ

स्तानि द्वादशाहादौ सपिंडनात्पूर्वं कृतान्यपि वृद्धिं विनापकर्षे पुनः स्वकाले कार्याणि। यस्य संवत्सरा
दर्वाक् सपिंडीकरणं कृतम् मासिकं चोदकुंभं च देयं तस्यापि वत्सरमिति मदनरत्ने त्वंगिरसोक्तेः
न चेदं मासिकानामपकर्षं विधत्ते। किंतु सपिंडनोर्ध्वं स्वकालानुष्ठानमेवेति वाच्यं श्राद्धानि
षोडशादत्वा न तु कुर्यात्सपिंडतामिति विरोधात्। यस्य संवत्सरादर्वाग्विहिता तु सपिंडता। वि
धिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश इति माधवीये गोभिलोक्तेश्च। अर्वाक् संवत्सराद्यस्य सपि
डीकरणं कृतं। षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतम इति तत्रैव सपिंडतागोभिलोक्तेः। षोड
शत्वं चैकादशाहसपिंडनपक्षे। तत्राद्यमासिकस्य कालसत्त्वात्। अन्यपक्षेषु यथासंभवं ज्ञेयं
॥यत्तु दीपिकायां॥ अनुमासिकानि तु चरेत्तान्येव सापिंड्यतः अतः पश्चाद्द्वादशेत्युक्ते कृतानां
न पुनः कृतिरित्युक्तं तदेतद्विरोधाच्चिंत्यं॥ यत्तु गौडाः॥ सपिंडीकरणात्तानु शेषा प्रेतत्रिपादवै
रिति शातातपोक्तेर्मासिकानां प्रेतत्वविमोक्षार्थत्वात्सपिंडनापकर्षे तदंतन्यायेन तेषाम
प्यपकर्षान्मासिकानां न पुनः कृतिः। यत्तु मासिकं चोदकुंभं चेति लौगाक्ष्यादिवचनं तन्निर्मूलं।
समूलत्वेपि दार्शपरत्वेत्याहुः। ते उक्तवक्ष्यमाणवचोनिबंधविरोधात् मूर्खा इत्युपेक्ष्याः। यत्तु मिता
क्षरायां सपिंडनोर्ध्वं स्वकाल एव कार्याणि। अपकर्षस्त्वनुकल्प इत्युक्तम्। तदपि पूर्वविरोधा
च्चिंत्यं। तेन वृद्धिं विनापकर्षे पुनः कृतिः। अर्वाक् संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वमिह त
स्यापि ज्ञेयं संवत्सरं नृप इत्यग्निपुराणात्। वृद्धिनिमित्तापकर्षे त्वस्यैव तन्निवृत्तिः। अन्यथा वृद्ध्य
संभवादिति शूलपाणिः॥ कार्ष्णाजिनिः सपिंडीकरणादर्वागपकृष्य कृतान्यपि। पुनरप्यपकृ
ष्येत वृद्ध्युत्तरनिषेधनात्। निषेधं चाह कात्यायनः। निर्वर्त्य वृद्धितंत्रं तु मासिकानि न तंत्रयेत्।
अयातयाममरणं न भवेत्पुनरस्य त्विति। द्विरनुष्ठानं चोत्तरेषामेव न पूर्वेषां स्वकालकृतानां।
तदाह माधवीये कार्ष्णाजिनिः। अर्वागब्दाद्यत्र यत्र सपिंडीकरणं कृतं। तदूर्ध्वं मासिकानां स्या
द्यथाकालमनुष्ठितिः॥ हेमाद्रौ शंखायनः॥ प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा। अ
पकृष्यापि कुर्वीत कर्तुं नांदीमुखं द्विजः। वृद्धिं विनापकर्षे दोषमाहोशनाः॥ वृद्धिश्राद्धविही
नस्तु प्रेतश्राद्धानि यश्चरेत्। स श्राद्धी नरके घोरे पितृभिः सह मज्जतीति॥ आधानेपकर्षमाह
हेमाद्रावुशनाः। पितुः सपिंडीकरणं वार्षिके मृतिवासरे। आधानाद्युपसंप्राप्तावेतत्प्रागपि व
त्सरात्। विशेषस्तु उक्तो विवाहनिर्णय एव॥ नवश्राद्धं मासिकं च यद्यदंतरितं भवेत्। त
त्तदुत्तरसांत्रादनुष्ठेयं प्रचक्षते॥ गारुडेपि॥ आपदाद्यकृतं तत्तु कुर्यादूर्ध्वं मृतेहनि ॥

॥ अथ सपिंडीकरणं॥

माधवीये हारीतः॥ यातु पूर्वममावास्या
मृताहाद्दशमी भवेत्। सपिंडीकरणं तस्यां कुर्यादेवं सुतोग्निमान्॥ मृताहादूर्ध्वं दशमी एकाद
शीत्यर्थः॥ सपिंडीकरणं कुर्यात्पूर्वं दर्शेग्निमान्सुतः। परतो दशरात्रस्य पूर्णे त्वब्दे मथेतरे
इति कार्ष्णाजिनिस्मृतेः। आहिताग्नेस्तेन विना श्रौतपिंडपितृयज्ञासिद्धेः। तदाह गालवः। स
पिंडीकरणात्प्रेते पैतृकं पदमास्थिते। आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते। मदनरत्ने
प्रजापतिः। नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्। अपरार्के कात्यायनः॥ एकादशा

हनिर्वर्त्ये पूर्वं दर्शाद्यथाविधि॥ अकुर्वीताग्निमान्विप्रो मातापित्रोः सपिंडनं॥ आशौचांतप्रथम
दर्शयोर्मध्ये कस्मिंश्चिदहनीत्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि॥ तत्रानुप्रवेशान्मा
तुः पिंडदानं पितृपिंडेनैवेत्यपरार्कः॥ एवं पितामहादेरपि सपिंडनं प्राग्दर्शात्कार्यं तेनैव
नापार्वणयोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान्भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुतैरिति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्त्ता नग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतोपि अनग्निस्तु यदा वीरो भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एव। साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत्॥ द्वादशाहे तदा
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्यात् यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णे हे भरतर्षभ द्वादशेहनि षण्मासे त्रिपक्षे वा त्रिमासि वा
एकादशेपि वा मासि मंगलस्याप्युपस्थितौ। कात्यायनगोभिलौ। यदहर्वा वृद्धिरापद्यते। तच्च वृद्धि
दिने एवेति वाचस्पतिः। तत्प्रातर्वृद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वत्वबाधापत्तेः। वृद्धिदिनात्पूर्वदिने चेति श्रीदत्तः। स्मार्तगोऽस्तु वृद्धिपूर्वं वर्षांत्य श्राद्धस्थाने सपिं
डस्य प्रेतत्वनाशसहकारित्वेन परेद्युः वृद्धिश्राद्धाभावे पितृकर्तृव्यतानिश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वेस्मरणसहकृतं प्रेतत्वनाशकमित्याह। तत्र अकाले कृतस्य फलाजनकत्वात्। एते
न निमित्तनिश्चयवत एवाधिकार इत्यभावे पितृस्तृप्तिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांगत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने पुलस्त्यः॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे संपूर्णेभ्युदयेपि वा। द्वादशाहे तु केषांचिन्मतं चैकादशे तथा पृथ्वीचंद्रोदये
बौधायनः॥

॥अथ सपिंडीकरणम्॥

त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वैकादशाहे वेति। एतत्प्रक्रमे विष्णुः॥ मासिकार्थं द्वादशाहे श्राद्धं
कृत्वा त्रयोदशेन्हि वा। कुर्यान्मंत्रवर्जं हि शूद्राणां द्वादशेन्हि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थं दिनमेकं वर्धयेदिति आशौचोत्तरं द्वादशस्वहःसु मासिकानि तेष्वेवाद्ये द्वादशादि
ने ऊनमासिकादीनि कृत्वा त्रयोदशेन्हि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशेन्हि कुर्यात्॥ शू
द्रे तु त्रयोदशे द्वादशेन्हीत्यस्य मासिकानां प्रतिदिनपरत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरे तु सज्जे
ने नवमे मासीत्येके अत्र साग्नेरनग्नेरुक्तः कालाभावे त्रिपक्षादिसंवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुस्त्वग्नेर्वृद्धिनिश्चय एव सर्वेप्युत्कर्षमकारणमित्याह। तन्न॥ यदहर्वेति सार्तं अश्रुते यद्यपि वृद्धिनि
मित्तोत्कर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांतादिगौणकालव
दृद्धेरपि प्राप्तेः वत्सरमासाः गोभिलवचनात्। अयातयामतां न भवेत्तु तदस्य त्विति दोषश्रुत्यविशे
षाच्च। अपरार्के पृथ्वीचंद्रादिस्वरसोप्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादे
स्तु वृद्धिश्राद्धलोपस्वेत्याचार्यचूडामणिः पुंसवनाद्यन्नप्राशनांतेष्वावश्यकेष्वपकर्ष इति। आ

ऽहनि नैकः स्मृतिसागरेपि॥ बृहस्पतिः। अर्वाग्वाब्दो भवेद्यस्मिन्नकृते वार्षिके मृते। नष्टे वित्ते मलमासेथ
पित्रोः कुर्यात्सपिंडनं। गर्भाधानस्य कृत्यत्वंतरेपि संभवात्। अन्यथा श्राद्धं पतत्यर्वाग्यथा लंबते
पुनः। इति देवले न संभ्रमादृते मैथुननिषेधाच्च। ततश्चापकर्ष इति श्राद्धकौमुद्यादयः। तत्र तत्र
मातुर्ये भार्गो मिति निषेधाद्ब्रह्मचार्यं अपकर्षाभावात्तत्स्वपवर्तके दिने मैथुने दोषाभावाच्च
पितामहमरणे गौतमस्य वृद्धौ नापकर्षः तस्य महागुरुत्वाभावात्। तत्र तदूर्ध्वं भोक्तुं श्राद्धमिति
श्राद्धचंद्रिका॥ तन्न। आतावेत्यादौ तद्भावेप्यपकर्षोक्तेः। तेन निर्देशोप्युपलक्षणं आह॥
आनंत्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्॥ अस्थितश्च शरीरस्य द्वादशाहः प्रशस्यते॥ एत
दाशौचांततृतीयदिनोपलक्षणं। सर्वेषामेव वर्णानामाशौचांते सपिंडनमिति निर्णयामृते का
त्यायनोक्तेः सर्वेषामिति त्रैवर्णिकपरं। शूद्राणां त्वाशौचमध्ये मंत्रवर्जं हि शूद्राणां द्वादशेहनि की
र्तितं मिति विष्णूक्तेः। एतद्दर्शश्राद्धकारिशूद्रविषयमित्यपरार्के कल्पतरौ च वृद्धमनुः। द्वादशेह
नि विप्राणां आशौचांते तु भूभुजां। वैश्यानां तु त्रिपक्षाद्वा अथवा स्यात्सपिंडनं। निर्णयामृते गोभि
लः। द्वादशाहादिकालेषु प्रमादादननुष्ठितं। सपिंडीकरणं कुर्यात्कालेषूत्तरभाविषु। इदं साग्ने
रुक्तकालासंभवे गौणकालविधानार्थमिति मदनपारिजातः मदनरत्नेप्येवं॥ ऋष्यशृंगः॥
सपिंडीकरणं श्राद्धमुक्तकालेन चेत्कृतं। भौद्दिहस्ते च रोहिण्यां मैत्रभे वा समाचरेत्। कालाद
र्शेपि॥ एकादशेह्नि द्वादशे त्रिपक्षे वा त्रिमासि वा। षष्ठे चैकादशे वाब्दे संपूर्णे वा शुभागमे।
सपिंडीकरणस्यैते ह्यष्टौ कालाः प्रकीर्तिताः॥ साग्नौ कर्तुर्मुख्याद्यो येनेते साग्नौ तृतीयकः।
अनग्नेस्तु द्वितीयाद्याः सप्तकालानुनीरिताः। रोहिणीरौद्रहस्तेषु मैत्रभे वापि तच्चरेत्॥ नारद
संहितायां तु॥ सपिंडीकरणं कार्यं वत्सरे वार्द्धवत्सरे। त्रिमासे वा त्रिपक्षे वा मासि वा द्वादशेहि
चेत्युक्तं। वत्सरे तीते तत्तेयं ततः सपिंडीकरणं वत्सरात्परतः स्थितमिति भविष्योक्तेः। पितुः सपिंडी
करणं वार्षिके मृतवासरे इत्युशनसोक्तेश्च। पूर्णे संवत्सरे पिंडः षोडशः परिकीर्तितः। तेनैव च
सपिंडत्वं तेनैवाब्दिकमिष्यते इति हेमाद्रौ वचनाच्च॥ अस्यानाकरत्वोक्तिर्मूर्खोक्तिरेव। यत्तु
पूर्णे संवत्सरे कुर्यात्सपिंडीकरणं सुतः। एकोद्दिष्टं च तत्रैव मृताहनि समापयेदिति षवलनिबंध
जाबाल्युक्तेः॥ पुत्रः सपिंडनं कृत्वा कुर्यात्स्नानं सचैलकं। एकोद्दिष्टं ततः कुर्यात्कुतपे तनि
वार्षिके तिस्वल्पमात्सोक्तेश्चाब्दिकं तद्दिने पुनः कार्यमिति केचित्। तन्निर्मूलत्वाद्धेमाद्रिवि
रोधाच्चोपेक्ष्याः। षोडशत्वं च सपिंडनस्य षोडशश्राद्धांतर्भावपक्षे। स्मृत्यर्थसारे तु वर्षांत
तद्दिने संवत्सरविमोक्षश्राद्धं। सपिंडनं च कृत्वा परेद्युर्मृताहे वार्षिकं कार्यमित्युक्तं। गौडाश्च
प्येवमाहुः। तन्मूलं विरोधाच्चिंत्यं। तच्च पुत्रे सति नान्यः कुर्यात्। श्राद्धानि षोडशादत्वा नैव
कुर्यात्सपिंडतां। प्रोषिते वसिते पुत्रः कालादति चिरादपीति। वायवीयोक्तेः। षोडशश्राद्धा
नां वर्षादूर्ध्वं कालाभावे पितान्यदत्वा न कुर्यात्। किंतु दत्वैव तानि। यदि कनिष्ठश्चानाहि
ताग्निस्तदा सपिंडनमेव कुर्यादित्यपरार्कः। सपिंडने तु कनिष्ठानां नैवाधिकार इत्यर्थः।
तत्रैव॥ अज्ञानादथवा मोहात्यकृता चेत्सपिंडता। तत्रापि विधिवत्कार्या कालादतिचि

रादपि॥ तेष्वपि ज्येष्ठस्यैवाधिकारः॥ ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति मनूक्तेः। अपरार्के
प्रचेता अपि॥ एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः॥ कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु
पृथक्पृथक्॥ मरीचिः॥ सर्वेषामनुमतं कृत्वा ज्येष्ठेनैव तु यत्कृतं। द्रव्येण चाविभक्तेन सर्वैरेव
कृतं भवेत्॥ यत्तु वाचस्पति शूलपाणिभ्यामुक्तं द्रव्यदानानुमत्यभावे कनिष्ठैः पृथक्कार्यमि
ति॥ तन्न॥ एवकारस्य तदभावेपि पृथक्करणाभावार्थत्वात्॥ अर्घादेरिव॥ ज्येष्ठे सति कनि
ष्ठानामनधिकाराच्च। अत एव तेषां प्रत्यवायमात्रं आहिताग्निः कनिष्ठस्तु कुर्यादेव। अन्यथा पितृ
यज्ञासिद्धेः॥ एवमावश्यकवृद्धावपि कनिष्ठोन्यः सपिंडो वा कुर्यात्। भ्राता वा भ्रातृपुत्रो वा सपिं
डः शिष्य एव च। सहपिंडक्रियां कृत्वा कुर्यादभ्युदयं ततः। तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते
इति मदनरत्ने लघुहारीतवचनात्। वृद्ध्यनंतरं प्रथमाब्दमध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथ
माब्दामध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वमेवेत्यर्थः। काम्योक्तेरावश्यके चापूर्वो
दैनापकर्षः। एतच्च भ्रातृपुत्रादिसंस्कारे प्राप्ताधिकारस्य नांदीश्राद्धाधिकारार्थं। अभ्युदयपदं च
नांदीश्राद्धनिमित्तकर्ममात्रपरमिति हेमाद्रिः॥ तेन ज्येष्ठे देशांतरस्थे कनिष्ठः सपिंडनं विनैव वृ
द्धिं कृत्वा पुत्रसंस्कारं कुर्यादिति। श्रीदत्तोक्तिः परास्ता॥ भ्रातृशिष्याद्युक्तेर्नांदीश्राद्धे च दैवता
मात्रपरोपकर्षस्त्वपास्तः। अस्य क्रममात्रपरत्वात् वृद्धिकर्त्रैव सपिंडनं कुर्यादिति न नियम इति गौ
डाः। अत एव कन्याया मातृमरणे भ्रात्रा पिंडने कृते पितुर्दानाधिकारः शूलपाणिस्तु। महागुरौ प्रे
तभूते वृद्धिकर्म न कल्पते इति निषेधान् मृतस्य भ्रात्रादेः सपिंडनं कृत्वान्यपुत्रकन्यादेरभ्युदयं कुर्या
न्नहि स्वपुत्रसंस्कारे संस्कार्यपितुः सपिंडनं विना वृद्धौ देवतात्वाभावादित्याह। तन्न॥ देवताप्र
युक्तापकर्षस्य निरस्तत्वात्। वृद्धिं विना कनिष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यं। यवीय
सा कृतं कर्म प्रेतशब्दं विहाय तु। तद्व्याप्य सापि कर्तव्यं सपिंडीकरणं पुनरिति स्मृतेः। ज्येष्ठेन वा
कनिष्ठेन सपिंडीकरणे कृते। आद्यपादे मातापित्रोः कनिष्ठेनेति वा पाठः। देशांतरगतानां च
पुत्राणां तु कथं भवेत्। श्रुत्वानुवपनं कार्यं दशाहांतं तिलोदकं। ततः सपिंडीकरणं कुर्यादे
कादशेहनि। द्वादशाहे न कर्तव्यमिति शातातपोब्रवीदिति वचनाच्चेति भट्टाः सिंगाभट्टीयेप्ये
वं। पूर्ववचने त्र च मूलं चिंत्यं स्मृत्यर्थसारे तु विभक्ता वृद्धिकामाश्चेत्पुत्राः पृथक्सपिंडीकरणं
कुर्युरित्युक्तं। अत्र दत्तकस्य तत्पुत्रादीनां च विशेषः प्रागुक्तः। केचित्तु। वृद्धिं विनापि कनिष्ठस्य
सपिंडनमाहुः। मातापित्रोर्मृते काले ज्येष्ठे देशांतरस्थिते। कनिष्ठेन प्रकर्तव्यं सपिंडीकरणं त
देति कार्ष्णाजिनिस्मृतेः। गतेवाब्देधिते ज्येष्ठे पित्रा वा प्रेषिते सति। षण्मासान्ते निवृत्ते न तदा
कार्यं कनीयसा। संवर्तः॥ पुनः सपिंडीकरणं श्राद्धं पार्वणवच्चरेत्। अर्घ्यसंयोजनं नैव पिंड
संयोजनं न चेति। तेवचसा निर्मूलत्वात् प्रोषितावसिते पुत्रश्रुत्यादिविरोधाच्चोपेक्ष्याः। क्रममृतौ
तु हेमाद्रौ ब्राह्मे। मृते पितरि यस्याथ विद्यते च पितामहः। तेन देयास्त्रयः पिंडाः प्रपितामहपूर्व
काः। तेभ्यस्तु पैतृकः पिंडो नियोक्तव्यस्तु पूर्ववत्। माता यस्य मृता पाच विद्यते च पितामही। प्रपि
तामहीपूर्वं तु कार्यं तत्राप्ययं विधिः। एवं पितामहजीवने तत्पित्रादिभिरेव पं॥ तदाह सुमंतुः।

त्रयाणामपि पिंडानामेकेनापि सपिंडने। पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः। यत्तु व्युत्क्रमात्तु प्रमी
तानां नैव कार्या सपिंडतेति। तन्मातापितृभर्तृभिन्नविषयं। व्युत्क्रमेण मृतानां तत्र सपिंडीकृतिरि
ष्यते। यदि माता यदि पिता भर्ता नैष विधिः स्मृत इति माधवीये स्कांदोक्तेः। मदनरत्नादौ चैवं।
अत्र प्रपितामहादिभिः पितुः सपिंडने कृते पितामहे मृते तत्सपिंडने सति पुनस्तेन सह पितुः सपि
डनं कार्यमिति हेमाद्रिमतमाह। अन्ये नेत्यमंसत। तच्च तु पितुः सपिंडनाभावे पितामहेन सह पु
नः कार्यं। न तत्सत्त्वे त्रयाणामपि पिंडानामेकेनापि सपिंडने। पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थि
तः॥ ॥इति विष्णुधर्मोक्तेः। पितामहे प्रपितामहे वा पुत्रांतरैरसंस्कृतेप्यसंस्कृताभावे
व पितुः सपिंडनं कुर्यात्। असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकौ। पितरं तत्र संस्कुर्यादिति
कात्यायनोऽब्रवीदिति छंदोगपरिशिष्टात्। असंस्कृतौ दाहार्याविति केचित्। सपिंडीकृताविति तु
तत्त्वं। अत एवोक्तं तत्रैव। पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा। पितामहेन पितरं संस्कुर्यादि
ति निश्चयः। पापिष्ठमकृतसपिंडनं न तु पतितादि। अभिशस्तपतितभ्रूणघ्नस्त्रियश्चातिचारि
णी न संसृज्येदिति बैजवापोक्तेः। पापकर्मिणो न संसृजेरन्निति गौतमोक्तेश्चैतदुक्तं त्रिणामते
पूर्वयोः पुत्राभावे तु पौत्रः कुर्यादेव। पितामहपितुः पश्चात्पंचत्वं यदि गच्छति। पौत्रेणैकादशा
हादि कर्त्तव्यं श्राद्धषोडशं। नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः। पितुः सपिंडनं कृत्वा कुर्यान्मा
सानुमासिकमिति कात्यायनोक्तेः। अपरार्के शूलपाणौ चैवं। तेन सपिंडनस्यानित्यत्वादकृतसपि
डनयोरेव पार्वणानुप्रवेश इति सूरूपोक्तिः परास्ता। कृते सपिंडीकरणे येन पार्वणभाग्भवेत् इति
हारीतविरोधाच्च इति केचित्। पुत्रांतराभावे पितामहवार्षिकमप्याहुः। तत्र श्राद्धषोडशमिति नि
यमात्। इच्छया भवत्येव पितामहस्य चेद्यादेकोद्दिष्टं न पार्वणमिति। वाचस्पतिधृतगर्गोक्तेः।
त्रयाणां योगपद्ये तु प्राधान्यात्पितुः सपिंडनं कृत्वा पूर्वयोः कुर्यात्। पितामहे मृते दशाहांतः पितृ
मृतौ पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्वमाचरेत्। वृत्ते दशाहे नैव अशक्तया पित्रानुज्ञा
तेन पौत्रेण पितामहश्राद्धे प्रक्रांते पितृमृतौ तदाशौचं वहन्नेव पौत्रः पितामहकर्म कुर्यात्। प्रक्रां
तत्वादिति। मदनपारिजात पृथ्वीचंद्रौ। यत्तु। उत्तरात्रितयरौद्रे रोहिणीयाम्यन्यार्यपिपितृभेषु
चाग्निभे श्मश्रुकर्म सकलं च वर्जयेत्। प्रेतकार्यमपि बुद्धिमानिति सपिंडनप्रकरणे पाठान्मुख्य
काले निषिद्धर्क्षे सपिंडनापकर्षः। सर्वकालेषु तद्वत्तेतद्गौम्येव इष्टौ क्रमाद्योक्तान् षोडशश्रा
द्धानि कार्याणीति वाचस्पतिमिश्राः॥ तन्न॥ अस्य परिभाषात्वेन सावकाशकर्मपरत्वात्
अस्य प्रेतमात्रदैवत्याभावाच्च॥ ॥अथ स्त्रीषूच्यते॥ हेमाद्रौ
बृहस्पतिः॥ भर्तृगोत्रेण नाम्ना च मातुः कुर्यात्सपिंडनम्। यत्तु भविष्ये। पितृगोत्रं समुत्सृज्य
न कुर्याद्भर्तृगोत्रत इति। तदासुरादिविवाहोढापरं। आसुरादिविवाहेषु पितृगोत्रेण धर्मवि
दिति बृहच्छातातपोक्तेः। तच्चानेकपक्षेषु पितामह्या पत्या मातामहेन वा इत्युक्तेः। तत्र व्य
वस्थोक्ता। भविष्ये॥ जीवत्पिता पितामह्या मातुः कुर्यात्सपिंडनं। पितरि म्रियमाणे तु तेनैवा
प्रेते सति। शंखः॥ मातुः सपिंडीकरणं कथं कार्यं भवेत्सुतैः। पितामह्यादिभिः सार्द्धं सपिंडी

कारणोक्तं। येनकेनापि मातुः सापिंड्ये पुत्राऽन्वष्टकादौ मातुः॥ श्राद्धं पृथगुक्तं तत्र पितामह्या सह का
र्यं नांदीमुखाष्टकाश्राद्धे गयायां च मृतेहनि। पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेदिति
शातातपोक्तेः। अपुत्रायां तु पैठीनसिः। अपुत्रायां मृतायां तु पतिः कुर्यात्सपिंडनं। श्वश्र्वादिभिः
सहैवास्याः सपिंडीकरणं भवेत्॥ यत्तु लघुहारीतः॥ पुत्रेणैव तु कर्तव्यं सपिंडीकरणं स्त्रियाः।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोपि चेति॥ यच्च मार्कंडेयपुराणे॥ सपिंडीकरणं स्त्रीणां पुत्रा
भावे न विद्यत इति। तत्पुत्रपत्न्यभावे ज्ञेयं। अत्र सपत्नीपुत्रोपि ज्ञेयः। बह्वीनामेकपत्नीनामे
काचेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति मनूक्तेरेतत्परत्वात्॥ यत्तु शा
तातपः॥ मृते पितरि मातुस्तु न च कार्या सपिंडता। पितुरेव सपिंडः स्यात्तस्यामपि कृतं भवेदिति
तद्दशाहपरं। केषांचिद्धामतमिति हेमाद्रिः॥ अन्वारोहणे तु भर्त्रैव सापिंड्यं। मृतायानुगताना
र्थं सा तेन सह पिंडताम्॥ अर्हति स्वर्गवासं च यावदाभूतसंप्लवमिति शातातपोक्तेः। पत्या चैके
न कर्तव्यं सपिंडीकरणं स्त्रियाः। सा मृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैरिति यमोक्तेश्च। अ
त्रैकशब्दः पितामह्यादिः पक्षनिवृत्त्यर्थः। पतिपदं वर्गपरं। सपिंडनस्य पार्वणैकोद्दिष्टरूप
त्वादिति माधवः। कल्पतरुमदनरत्नादयः। अन्ये तु नैवैकेनाहुः। स्वेन भर्त्रा सहैवास्याः सपिंडी
करणं भवेदित्येवकारश्रवणात्। पृथ्वीचंद्रोदयेपि विकल्प उक्तः। इदं तु तत्त्वं। यदा हेमाद्र्यादि
मते द्वयोरेकः पिंडी तदा वर्गेण सह यदा माधवपृथ्वीचंद्रादिमते पृथक् पिंडस्तदैकेन पत्यैव।
वचनाच्चैकेनापि। अतो मातृपिंडमसपिंडीकृतेनैव पतिपिंडेन संयोज्यैकीकृतपिंडद्वयं तत्पि
त्रादिभिः संयोजयेत्। अंत्यपक्ष एव युक्तः। स्मृत्यर्थसारे तु। अन्वारोहणे नैकदिनमरणे स्त्रियाः
सपिंडनं नास्ति भर्तुः कृते स्त्रिया अपि कृतं भवतीत्युक्तं तन्मतांतरमस्तु। इदं ब्राह्मादिविवाहेषु
ज्ञेयं। आसुरादिषु तु शातातपः। तन्मात्रा तत्पितामह्या तत्श्वश्र्वा वा सपिंडनं आसुरादिविवा
हेषु विपाल्यतां यो पिता भवेत्। मातामह्या मातुः पितामह्या तत्पितामह्या वेत्यर्थः। सुमंतुः॥
पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः। माता मातामहे तद्वदित्याह भगवान्छिवः। इदमा
सुरादिपरं। पुत्रिकापुत्रपरं चेत्यन्ये। हेमाद्रिस्तु ब्राह्म्यादिष्वपि सर्वत्र देशभेदाद्विकल्प
माह। अत एव गुर्जरेषु कोकिलमतानुसारिणां मातृमातामहप्रमातामहा इति श्राद्धप्रयो
गः सपिंडनं च दृश्यते। हेमाद्रावापस्तंबोपि॥ कोकिलस्य यथा पुत्रा अन्यस्मिन्संवयजीविनः
पुष्टास्ते स्वकुलं यांति एवं नारी मृता सती। यदपि विज्ञानेश्वरो मातामहेन मातुः सापिंड्यं
पितृश्राद्धवन्मातृश्राद्धं नित्यमित्याह। यच्च वृद्धिश्राद्धे छंदोगपरिशिष्टे षड्भ्यः पितृभ्य
स्तदनु श्राद्धदानमुपक्रमेदिति। तद्विषयमेव मातुः पृथक् श्राद्धाभावात्। अत एव हेमाद्रौ
भविष्ये। मातुः सपिंडनं प्रक्रम्य उदितेनुदिते चैव होमभेदो यथा भवेत्। तथा कुलक्रमा
यातमाचारं चाचरेद्बुध इत्युक्तं। अस्य वृद्धावपवादमाह। तत्रैव व्याघ्रपादः। कुर्यान्मातामा
हश्राद्धं सर्वदा मातृपूर्वकं। विधिज्ञो विधिमास्थाय वृद्धौ मातामहादितः। केचिदेतत्पु
त्रिकापुत्रपरमाहुः। पत्युः सापिंड्यमाह लौगाक्षिः॥ सर्वाभावे स्वयं पत्न्यः स्वभर्तृणाम

यदुक्तं। सपिंडीकरणंकुर्यात्ततः पार्वणमेवचेति। यत्तुवचनं॥ अपुत्रस्यपरेतस्यनैवकुर्यात्सपिंडना
मिति। यच्चापस्तंबः। अपुत्रायेमृताः केचित्पुरुषावास्त्रियोपिवा। तेषांसपिंडनाभावादेकोद्दिष्टं
नपार्वणमितितत्पुत्रोत्पादनविधिप्रशंसार्थमितिमाधवः। सपिंडीकरणादूर्ध्वमेकोद्दिष्टविधौ
गते। अपुत्राणांचसर्वेषामपत्नीनांतथैवचेति। हेमाद्रौयमेनोक्तेः। अप्यनुद्दिष्टविधवास्वदर्शना
द्विकल्पमाहुः। स्मृत्यर्थसारेपि। ब्रह्मचारिणांयतीनांचसपिंडनंनास्तितेषांसदैकोद्दिष्टमेवान्वु
रूपमृतानांसपिंडाकार्यं नवाकेचित्सर्वेषांसपिंडनमाहुरिति। अपत्येन्युक्रमभृतानांविशेषोरत्नाकरकारि
कायां। भ्रातावाभ्रातृपुत्रोवासपिंडःशिष्यएववा। सपिंडीकरणंकुर्यात्पुत्रहीनेमृतेसति। भर्तृ
तुविहीनस्यपत्नीकुर्यात्सपिंडनां। ऋत्विजंकारयेद्वापिपुरोहितमथापिवा। तन्मुहृद्वादिनिमृते
कार्यातेषांसपिंडना। युक्तामावस्यमीनायेनहिनाशेनताभुवं। पुनःसपिंडनंतेषांकुर्यात्तेनपिता
महेरिति अत्रमूलंमृग्यं। यतीनांसपिंडनंनास्ति। किंत्वेकादशेह्निपार्वणंकार्यं तदपित्रिदंडिनः
एकदंड्यादीनांतदपिनेत्युक्तंप्राक्। दंडग्रहणमात्रेणनेतुद्वादशाहादिसपिंडनांतंसर्वंकार्यमितिभट्ट
चरणाः। सपिंडनविधिमाह। बैजवापः। समाप्तेसंवत्सरेचत्वार्युदपात्राणिप्रयुनक्तिएकंप्रेताय
त्रीणिपितृभ्यः प्रेतपात्रंपितृपात्रेष्वासिंचेतियेसमानाइतिद्वाभ्यामेवंपिंडाद्याभिमृशन्त्येववोनु
नः प्रेतपितरस्तद्दामिवः शिवमस्तुशेषाणांजायतांचिरजीविनः समानीवःसंगच्छध्वमिति
मधुपितृस्वापिदैवरहितमेकार्घ्यैकपवित्रकं। नैवाग्नौकरणंतत्रतच्चावाहनवर्जितमितिमार्कंडे
येनोक्तं। तथापि॥ सपिंडीकरणश्राद्धंदेवपूर्वंनियोजयेदिमादिविरोधाद्विकल्पः प्रेतांशेवादे
यं। अत्रसकामकालौवैश्वदेवौविनियुक्तौ॥ सांकृमैत्रायणीयपरिशिष्टे॥ पित्र्यविप्रकरेहोमःसा
ग्नेरपिभवेदिहा। यत्तुगोभिलः। अनुक्तकालेप्यपितुयुक्तमेणमृतावपि। आमेनवापिसापिं
डंहेम्नावापिमकल्पयेदिति। तदापदिमातापितृभिन्नपरं आपन्नपितृकुर्वीतश्राद्धमामेन
कर्हिचिदितितेनैवोक्तेः। शुद्धितत्त्वेकामधेनौलघुहारीतः। सपिंडीकरणंयावत्प्रेतश्राद्धानि
षोडश। पक्वान्नेनैवकर्तव्यंसामिषेणद्विजातिभिः विश्वप्रकाशे॥ प्रेतःसपिंडनादूर्ध्वंपितृलो
केनुगच्छति। कुर्यात्तुस्वतुपाथेयंद्वितीयेह्निसपिंडनात्। स्मृत्यर्थसारेप्येवं। ततोवृद्धिश्राद्धंकुर्या
त्। एतन्मलमासेपिकार्यं। अधिमासेनकर्तव्यंश्राद्धमाभ्युदयंतथा। तथैवकाम्यमत्यकमेव
त्सर्गंप्रथमाब्दे। इतिहेमाद्रौहारीतोक्तेः॥ ॥इतिकमलाकरभट्टकृतेनिर्णयसिंधौ
सपिंडीकरणम्॥

॥अथप्रथमाब्देनिषिद्धानि॥

हेमाद्रौ। स्नानं
चैवमहादानंस्वाध्यायंचाग्नितर्पणं। प्रथमेब्देनकुर्वीतमहागुरुनिपातने। अन्नतर्पणमितिशु
द्धितत्त्वेपाठः। अग्नितर्पणंलक्षहोमादिनत्वाधानंतत्तुप्रथमाब्देभवत्येव। तदाहहेमाद्रौशुन
कः। पितुःसपिंडीकरणंवार्षिकंमृतवासरे। आधानाद्युपसंप्राप्तावेतत्प्रागपिवत्सरात्। आदि
र्वृद्धिनिमित्तनित्यकर्मपरंदिवोदासीये। महातीर्थस्यगमनमुपवासव्रतानिच। संवत्सरंनकु
र्वीतमहागुरुनिपातने। इदंश्राद्धकौमुद्यांदेवीपुराणस्थमुक्तं। गौडनिबंधेमात्स्ये। सपिंडीकर
णादूर्ध्वंप्रेतःपार्वणभुग्भवेत्। वृद्धिपूर्वेषुयोग्यश्चगृहस्थश्चसदाभवेत्। वर्षांतःसपिंडनाभावे:

नधिकारीत्यर्थः। गृहस्थः सपिंडोपीत्यर्थः। अतएवमेतकर्माण्यनिवर्त्ते चरेन्नाभ्युदयक्रियां। आच
तुर्थात्ततः पुंसि पंचमे शुभदं भवेदिति ज्योतिषे उक्तं माधवीये देवलः। प्रमीतौ पितरौ यस्य देहस्तस्या
शुचिर्भवेत्। न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः। इदं वर्षांत सपिंडनपरं तथैव काम्यं यत्कर्मैव
त्सरात्प्रथमादृते। इति लघुहारीताद्येकवाक्यत्वात्। वृद्धिनिमित्तापकर्षे तु वर्षमध्येपि॥ काम्यादि
भवत्येवेति गौडाः। पित्र्यं सपिंडनं। अत एव लौगाक्षिः॥ अन्येषां प्रेतकार्याविंधकत्वात्। आद्य
श्राद्धमशुद्धोपि कुर्यादेकादशेहनीत्युक्तेश्च। एकं सपिंडनं पत्न्यादौ त्वपवादः। माधवीये ऋष्यशृंगः
पत्न्याः पुत्रस्य नप्तुश्च भ्रातृतनयस्य च॥ स्नुषायाश्च स्वस्रोश्च पित्रोश्चैव संघातमरणं यदि। अर्वागब्दात्
मातृपितृपूर्वं सापिंड्यमाचरेत्। लौगाक्षिः॥ पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रकावपि। पितरौ च य
देकस्मिन्म्रियेरन्वासरे तदा। आद्यमेकादशे कुर्यात्त्रिपक्षे तु सपिंडनं। धवलनिबंधे। महागुरुनि
पाते तु प्रेतकार्यं यथाविधि। कुर्यात्संवत्सरादर्वागेकोद्दिष्टं न पार्वणं। भृगुः॥ माता चैव तथा
भ्राता भार्या पुत्रस्तथा स्नुषा। एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः॥ एतदपि सपिंडनपरं।
पितुर्मृतावन्यस्य श्राद्धं न चरेदित्यर्थः। शुद्धितत्त्वे श्राद्धकौमुद्यां च देवलः॥ अन्यश्राद्धं परान्नं च
गंधमाल्यं च मैथुनं। वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः। पारस्करभाष्ये बृहस्पतिः॥ पितर्युपर
ते पुत्रो मातुः श्राद्धान्निवर्त्तते। मातर्यपि च वृत्तायां पितुः श्राद्धादृते सदा। स्वं पितरं विनान्यश्राद्धं
नेत्यर्थः। शुद्धितत्त्वे देवलः। महागुरुनिपाते तु कामं किंचिन्न चाचरेत्। आर्त्विज्यं ब्रह्मचर्यं च
देवपूजाक्रियां तथा एतत्सपिंडनात्प्रागिति केचित्। केचित्तु पित्रोरब्दमशौचं स्यात्षण्मासं मा
तुरेव च। त्रैमासिकं तु भार्याया तदर्धं भ्रातृपुत्रयोरिति स्मृतेः। सपत्नमातुरब्दार्धमाहुः। श्राद्धकौ
मुदीकारस्तु। द्वयोरेव महागुर्वोरब्दमेकमशौचकं। नान्यासामधिकाशौचं स्वजातिविहिताकि
लेति। समूहजात्कर्णयविरोधान्निर्मूलमाह। हेमाद्रौ भविष्ये। गयाश्राद्धं मृतानां तु पूर्णेब्दे प्र
शस्यते त्रिस्थलीसेतौ गारुडे। तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकं। अब्दमध्ये न कुर्वीत म
हागुरुविपत्तिषु। इदं चाब्दमध्ये सपिंडनाभावे। वृद्ध्ये सपिंडनापकर्षेब्दमध्ये दर्शादिकार्यमेव। पितुः
सपिंडनं कृत्वा कुर्यान्मासानुमासिकमिति छंदोगपरिशिष्टात्। सपिंडीकरणादूर्ध्वं प्रेतः पार्वण
भुग्भवेदिति मात्स्यात्। ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते। विंदते पितृलोकं च ततः श्राद्धं
प्रवर्त्तते इति हारीताच्चेति शूलपाणिः॥ यत्तु कात्यायनः सपिंडीकरणादूर्ध्वं न दद्यात्प्रतिमासिकं।
एकोद्दिष्टविधानेन दद्यादित्याह शौनक इति तत्रैकोद्दिष्टविधिना न दद्यादित्यन्वयः। तुर्यपादेन
पार्वणे विकल्प उक्तः। अत्रेदं तत्त्वं। वृद्धिं विनार्वागपि सपिंडनापकर्षे पितृत्वप्राप्तौ वर्षांत एव
कृते सपिंडीकरणे नरः संवत्सरात्परं। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यत इति विष्णुधर्मोक्तेः।
अर्वाक्संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वमपि तस्यापि विज्ञेयं वत्सरं नृप इत्यग्निपुराणा
च्च। तेन तत्काले पितृवृद्धिदैवपित्र्येष्वनधिकारः वृद्धिनिमित्ते त्वनंतरमेव। अर्वाक्संवत्सराद्वृद्धौ
पूर्णे संवत्सरेपि वा। ये सपिंडीकृताः प्रेता न तेषां तु पृथक्क्रियेति। शातातपोक्तेः। तथैव काम्य
मिति हेमाद्रिस्तन्न हारीतो दिवशाच्चैवमिति। तथा। अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकं।

अयमेकेऽलंकुर्वीत कृते पितृसपिंडने। अस्यापवादः। अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकं। प्रथ
मेब्देपि कुर्वीत यदि स्याद्भक्तिमान्सुतः। भक्त्या त्वेकश्राद्धं तद्वानिति मदनपारिजातः स्वयं। अन्येय
थाश्रुतमाहुः। तत्त्वं तु पदीदं समूलं तदा वृद्धिं विना प्रकर्षे पूर्वं। वृथार्थं तु परमिति योज्यं यतिनां
गयायां विशेषो ग्राह्यः। क्रियते पतितानां च गते संवत्सरे क्वचित्। देशधर्मप्रमाणत्वाद्गयाश्राद्धं
स्वबंधुभिः॥ ॥अथ विधानानि॥ तत्र पंचकमृते मदनरत्ने गारुडे।
आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपंचके। रेवत्यंतं सदा दूष्यमशुभं दाहकर्मणि। शवस्य तु समी
पे तु क्षेप्तव्याः पुत्तलास्तदा। दर्भमय्यास्तु चत्वारो नक्षत्रमंत्राभिमंत्रिताः। ततो दाहः प्रकर्तव्यस्तैश्च
पुत्तलकैः सह। सूतकांते ततः पुत्रैः कार्यं शांतिकपौष्टिकं। पंचकेषु मृतो योवै न गतिं लभते नरः।
तिलांश्चैव हिरण्यं च घृतपूर्णं घटं ददेत्। क्रियानिबंधे भाजनोपानहौ छत्रं हेममुद्रां च वासांसि
दक्षिणा दीयते विप्रे सर्वपातकमोचनी। मदनरत्ने गार्ग्यः। यदि भद्रा तिथीनस्याद्गुरुभौमश
नैश्चरैः। त्रिपादर्क्षे संयोगो द्वयोर्योगे द्विपुष्करः। द्वित्रिपुष्करयोगे तु मृतिर्मृत्यं तदा वहा। दहने
मरणे चैव त्रिगुणं स्यात्त्रिपुष्करे। खनने प्येवमेव स्याद्देतद्दोषोपशांतये। तिलपिष्टैर्यवैर्वा पि शरी
रं कारयेत्ततः। शूर्पे निधायालंकृत्य दाहयेत् येन पापिष्ठेन दाहे मंत्रमाह बौधायनः। अस्मात्त्व
मिति मंत्रेण तिलपिष्टं प्रदाहयेत्। द्वित्रिपुष्करयोर्दोषस्त्रिभिः कृच्छ्रैर्व्यपोहति। वासवे मरणं
चेत्स्याद्गृहे वापि शुनर्मृतिः। सुवर्णं दक्षिणां दद्यात्कांस्य वस्त्रं तथापि वा। वासवं धनिष्ठा। ब्राह्मे॥
कुंभमीनस्थिते चंद्रे मरणं यस्य जायते। न तस्योर्ध्वगतिर्दृष्टा संततौ न शुभं भवेत्। न तस्य दाहः क
र्तव्यो विनाशस्तेषु जंतुषु। अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकं। धनिष्ठापंचके जीवो
मृतो यदि कथंचन। त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवं। तत्रानिष्टविनाशार्थं विधानं सम
दीर्यते। दर्भाणां प्रतिमाः कार्याः पंचोर्णासूत्रवेष्टिताः। यवपिष्टेनानुलिप्ताः ताभिः सह शवं द
हेत्। प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्ता पंचमस्तु नामान्येतानि चक्रमात्॥ प्र
तप्रतिमाः गंधपुष्पैः पूजयित्वा। प्रथमां शिरसि द्वितीयां नेत्रयोः तृतीयां वामकुक्षौ चतुर्थीं ना
भौ पंचमीं पादयोस्तु स्थापयेत् उपरिष्टान्मभिर्धृतं हुत्वा यमाय सोमं त्रैवकमिति मंत्राभ्यां प्रत्येकं ना
म्नाज्यं हुनेदिति भट्टाः। सूतकांते ततः पुत्रः कुर्याच्छांतिकपौष्टिकं। कांस्यपात्रस्थितं तैलं वी
क्ष्य दद्याद्द्विजन्मने। ब्रह्मविष्णुमहेशेंद्रवरुणामीयतेन ततः। माषमुद्गयवव्रीहिप्रियंग्वादि श्च
च्छति। स्वर्णदानं रुद्रजाप्यं सहोमो द्विजार्चनं। गोभूदानं षडंशेन कुर्याद्दोषोपशांतये॥ अप
रार्के। धनिष्ठापंचके मृते पवाल्लानितन्मुखे। भाष्याहुनिश्चयं तत्र हुत्वा हव्यपानिति। ततो नि
र्हरणं कुर्याद्दक्षिणाग्नेर्विधिः स्मृतः। शवं निखनेद्देवं जले वा प्रतिपादयेत्। त्रिपादर्क्षे मृतेन हृदि
रण्यप्राक्संमुखे। तस्य पिष्टमयं कुर्यात्पुरुषं त्रिपलं ततः। होममग्निमुखं कुर्यात्तथा नह्ववपा
मिति। कार्यो वस्त्रं च कार्यो संकुसुमं प्रतिपादयेत्। विधेयो यत्समाग्निसंस्कुर्यान्ब्रह्मणो वा समुत्सृ
जेत्। तत्रैव। कनकं हीरकं नीलं पद्मरागं च मौक्तिकं। पंचरत्नमिदं प्रोक्तं ऋषिभिः पूर्वदर्शिभिः
रत्नानां चाप्यभावे तु स्वर्णं कर्षार्धमेव वा। सुवर्णस्याप्यभावे तु आज्यं गेयं विचक्षणैः। मदन

